## *Gaekwad's Oriental Series.*

**Published under the authority of the Government of His Highness the Maharaja Gaekwad of Baroda.**

*General Editor:*

B. BHATTACHARYYA, M.A., Ph.D.

Rājyaratna, Jñānajyoti.

---

**No. XCV.**

नरेन्द्रप्रभसूरिनिर्मितः

# अलङ्कारमहोदधिः ।

[ परिशिष्टादिपर्यलङ्कृतः ]

# Alaṅkaramahodadhi

OF

## Narendraprabha Sūri

Edited critically with an introduction in Sanskrit, Indices and Appendices

By

**Lalchandra Bhagawandas Gandhi**
**Jain Pandit**

**1942**
**Oriental Institute**
**Baroda**




साहित्यामृतरसपानसतृष्णाः काव्यालङ्कारप्रियाः प्राज्ञाः !

सुप्रसन्नतां प्राप्नुवन्तु प्रातिभवन्तो भवन्तो गूर्जरेश्वरमन्त्रीश्वरवस्तुपालप्रेरणा-प्रादुर्भूतस्य चौलुक्यनरेन्द्रसन्मानितनरचन्द्रसूरिशिष्यनरेन्द्रप्रभसूरिप्रतिभानिष्पन्नस्य स्वोपज्ञविवरणविभूषितस्य परिश्रमसम्पादितस्य प्रस्तुतस्यालङ्कारमहोदधेरवलोकनावगाहनेन प्रतिभाप्रकर्षात् ।

साहित्यसमृद्धिवृद्ध्यै गूर्जरेश्वर–मन्त्रीश्वरादिप्रोत्साहनम् ।

साहित्यावगाहिनां सुविदितमेतत्–प्राच्यैर्गूर्जरेश्वरैस्तन्मन्त्रीश्वरप्रभृत्यधिकारिभिश्च प्रोत्साहिता जैनाचार्यप्रभृतयो नैके विद्वन्मूर्धन्या विद्वन्मनोविनोदकान् लोकोपकारकान् विविधविषयकान् नवीनान् ग्रन्थान् जग्रन्थुः, प्राचीनान् ग्रन्थांश्च व्याख्या–विवरणादिभिर्व्याचख्युः, प्राच्यसाहित्यलेखन–परिरक्षण–प्रथनादौ च विविधप्रकारेण प्रयेतिरे । गायकवाडप्राच्यग्रन्थमालाप्रकाशित–पत्तन–जेसलमेरुदुर्गादिपुस्तकागारसूचिपत्रसमीक्षकानां सुज्ञानां किमिव नाम बहु विज्ञप्तनीयमस्मिन् विज्ञाते विषये ? दुर्लभराजराजसभायां चैत्यवासिवादिविजेत्रा जिनेश्वरसूरिणा सिद्धराजराजसभायां च दिगम्बरवादिकुमुदचन्द्रविजेत्रा वादिदेवसूरिणा तदनुयायिभिश्च विरचिता नैके ग्रन्थास्तत्रास्माभिः सूचिताः ।

सिद्धराज–कुमारपालप्रेरणा ।

गूर्जरेश्वरसिद्धराज-जयसिंह–परमार्हतकुमारपालभूपालप्रार्थनाप्रेरिताः सुप्रसिद्ध-

हेमचन्द्राचार्याः प्रणीतवन्तः सिद्धहेमचन्द्रशब्दानुशासन–नामलिङ्गानुशासन–काव्यानुशासन–च्छन्दोऽनुशासन–नाममालाद्यनेकार्थ–निघण्टु–चौलुक्यवंशद्व्याश्रयमहाकाव्य–योगशास्त्र–वीतरागस्तव–द्वात्रिंशिकाद्वय–त्रिषष्टिशलाकापुरुषचरित–परिशिष्टपर्वार्हन्नीतिप्रमुखान् नैकान् ग्रन्थान् । तत्पट्टविभूषक–प्रबन्धशतकर्तृ–कुमारविहारशतककविरामचन्द्राचार्यादयश्च निर्मितवन्तो नाट्यदर्पण–नलविलासादीन् नाट्यशास्त्रादिनैपुण्यनिर्मापकान् ग्रन्थान् ।एकाहनिष्पन्नमहाप्रबन्ध–सिद्धराजप्रतिपन्नबन्धु–कविचक्रवर्ती श्रीपालः, कुमारपालप्रीतिपात्रं तत्पुत्रः कविसिद्धपालः, भीमदेवराज्ये द्रौपदीस्वयंवरप्रणेता तत्पुत्रो विजयपालश्च प्राग्वाटवंशीया राजमान्याः सुप्रसिद्धाः कवयः । विद्वद्वत्सलतया विख्यातविद्यानुरागेभ्यो मालवेश्वर–मुञ्ज–भोजादिमहाराजेभ्यो न काऽपि न्यूनता न्यदर्शि, प्रत्युत गूर्जरगौरवं प्राकाशि मालवराजादिविजेतृभिर्गूर्जरेश्वरैः साहित्यप्रदेशेऽपि ।

### महामात्यसम्पत्करः ।

लाटदेशमण्डलानुशासकेनानेनाणहिल्लपाटके शान्त्युत्सवदेवगृहे श्रीआदीश्वरयात्रा–महोत्सवे प्रवर्तिते समुत्सुकसामन्तजनदर्शनाय कविबिल्हणेन कर्णसुन्दरीनाटिका–प्रयोगो रचित आसीत् ।

### मन्त्रीश्वरपृथ्वीपाल–प्रेरणा ।

पृथ्वीपालप्रभृतिभिस्तत्सचिवादिभिः प्रेरिताश्च हरिभद्रसूरिप्रमुखा नैके कवयो निजमतिं नियोजयामासुः प्राकृतापभ्रंशादिभाषाभूषिते चतुर्विंशतिजिनचरिताद्विरचने ।

### सोमेश्वरः ।

वि. सं. १२१४ वर्षे आश्विनव. ७ बुधे सिद्धियोगे कुमारपालभूपालसुराज्येऽणहिल्लपाटकपत्तने राजमान्य-प्राग्वाटवंशीयसचिवकर्पूरपट्टाधिपपत्नीसीतासुपुत्रसोमेश्वरस्य प्रार्थनया चन्द्रगच्छीय–सर्वदेवसूरिसन्तानीय–देवेन्द्रसूरिशिष्येण श्रीचन्द्रसूरिणा सनत्कुमारराजर्षिचरितं ( प्रा. ) रचितम् ।

### महत्तमदुर्लभराजसुत-जगद्देवः ।

राजमान्यप्राग्वाटवंशीयो जाहिल्लो नृपतेर्भीमदेवस्य व्ययकरणपदामात्य आसीत् । तदङ्गजराजपालसुतनरसिंहस्य सुतं दुर्लभराजं कुमारपालभूपालो महत्तमं कृतवान् । शरीरविद्या–राज(गज)तुरग–शकुनादिप्रबन्धविज्ञेन येनोपज्ञातं पुरुष–

स्त्री-लक्षणं तत्सुतेन जगद्देवेन सुलक्तिार्याणामष्टशत्या समर्थितं सामुद्रिकतिलक-संज्ञयोपलभ्यते । तत्कृतः स्वप्नचिन्तामणिस्तु प्रसिद्धः ।

मन्त्री यशःपालः ।

अजयदेवस्य मन्त्रिणाऽनेन राजनीतिज्ञेन परमार्हतेन सुकविना निजप्रतिभा-प्रकर्षः प्रादर्शि मोहराजपराजयनामनि नाटके । यदत्रैव गायकवाडप्राच्यग्रन्थमालायाम् ( क्र. ९ ) प्राकाशि ।

सज्जनपौत्रः ।

वि. मुनिश्रीचन्द्रकविकृतोऽपभ्रंशभाषायां त्रिपञ्चाशत्सन्धिसङ्कलितः कथाकोशो मूलराज-धर्मस्थानगोष्ठिकप्राग्वाटवंशीयसज्जनसुतकृष्णसन्तानेन व्याख्यापित आसीत् ।

मन्त्री बालकविर्जगद्देवः ।

राजमान्यस्य श्रीश्रीमालकुलीनकोशाधिपयशोधवलसूनोरस्य प्रार्थनया वि. सं. १२२९ (९२) वर्षे पत्तने मुनिरत्नसूरिर्विनिर्ममेऽममस्वामिचरितम्, यत् समशोधि कुमारकवि-प्रभृतिराजसभ्यैः । [ पीटर्सनरि. ३, पृ. ९०-९९ ]

सोममन्त्री ।

एतस्य वचनेन वि. सं. १२५५ वर्षे पूर्णभद्रसूरिणा नृपतिनीतिविवेचनाय जीर्णं विशोधितं पञ्चतन्त्रं डॉ. हर्टलद्वारा प्रसिद्धिमागतम् ।

मन्त्री जयन्तसिंहः ।

स्तम्भतीर्थ-पेटलापद्राद्यधिकारिणो मन्त्रीश्वरवस्तुपालसुपुत्रस्यास्यैव प्रेरणया सुकविना जयसिंहसूरिणा विरचितं हम्मीरमदमर्दनं नाटकम्, यदत्रैव गा. ग्रन्थमालायां ( क्र. १० ) प्रसिद्धम् । जैत्रसिंहापराभिधस्यास्यैव च मनोविनोदाय बालचन्द्रसूरिणा रचितं वसन्तविलासमहाकाव्यमत्रैव (गा. ग्रं. क्र. ७) प्रकाशितम् । एतत्पठनार्थमेका प्रबन्धावली वि. सं. १२९० वर्षे उदयप्रभसूरिशिष्येण जिनभद्रेण रचिता ज्ञायते ।

पद्ममन्त्री ।

विश्वल(वीसल)देव( वि. सं. १२९८[ १३०२ ]-१३१८ )राजमान्येन वायटवंशोद्भवेन राजभाण्डागाराध्यक्षेण राजविश्वासपात्राधिकारिणा पद्मेनाभ्यर्थितो वायटगच्छीयामरचन्द्रकविर्जिनेन्द्रचरितं पद्मानन्दापरसंज्ञकं वीराङ्कं महाकाव्यं निर्ममे, यदत्र गायकवाडप्राच्यग्रन्थमालायां ( ५८ क्रमाङ्के ) प्रसिद्धम् ।

## आह्लादनो दण्डनायकः।

थारापद्र–सत्यपुर–वटसर सङ्घमखेटक( संखेडा )प्रभृतिपु जिनचैत्य–बिम्बादिधर्मकार्यकर्त्राऽनेन गङ्कककुलीनेनाणहिल्लनगरे वासुपूज्यप्रभुप्रासादस्य जीर्णोद्धारोऽकारि, एतस्यैव चाभ्यर्थनया नागेन्द्रगच्छीयेन वर्धमानसूरिणा वि. सं. १२९९ वर्षे ५४९४ श्लोकपरिमितमाह्लादनाङ्कं वासुपूज्यचरितं महाकाव्यं व्यरचि, यद भावनगरस्थया जैनधर्मप्रसारकसभया प्राकाशि।

### मन्त्रीश्वरवस्तुपाल-परिचायकाः।

" यः स्वीयमातृ–पितृ–पुत्र–कलत्र–बन्धुपुण्यादिपुण्यजनये जनयाञ्चकार।
सद्दर्शनव्रजविकासकृते च धर्मस्थानावली–वलयिनीमवनीमशेषाम् ॥ "
—नरनारायणानन्दे [ सर्गे १६, श्लो. ३७ ]

" तेन भ्रातृयुगेन या प्रतिपुर–ग्रामाध्व–शैल–स्थलं
वापी–कूप–निपान–कानन–सरः–प्रासाद–सत्रादिका।
धर्मस्थान–परम्परा नवतरा चक्रेऽथ जीर्णोद्धृता
तत्सङ्ख्याऽपि न बुध्यते यदि परं तद्वेदिनी मेदिनी ॥ "
—अर्बुदगिरौ वस्तुपालान्वयप्रशस्तौ [ श्लो. ६६ ] सोमेश्वरः।

यस्य प्रार्थना–प्रेरणयाऽस्यालङ्कारमहोदधेः प्रणयनमजनि, तस्य सुप्रसिद्धस्य विद्वद्वत्सलस्य गूर्जरेश्वरभीम–महाराणकवीरधवल–मन्त्रीश्वरवस्तुपालस्य सचिव-तेजःपालाग्रजस्य समुज्ज्वलकीर्ति–प्रशस्तिप्रबन्धास्तत्समकालीनैरनेकैः प्रौढैः कविभिरनेकैश्चानन्तरैर्विद्वद्भिर्विहिता अत्र तेषां नामनिर्देशमात्रेणैव सन्तुष्यते।

नर–नारायणानन्दमहाकाव्यम्–गायकवाडप्राच्यग्रन्थमालायामितः [क्र. २] प्रागेव प्रकाशिते गूर्जरेश्वरमहामात्यवस्तुपालविरचितेऽस्मिन् महाकाव्ये षोडशे सर्गे तेन स्वयं निजवंश–प्रशस्तिपरिचयोऽकारि। प्रतिसर्गप्रान्तेऽन्यकविकृतप्रशंसया महामात्यप्रतिकृत्या च साकं तत् प्रकाश आगतम्। तत्परिशिष्टादिनिरीक्षकाणां तत्कृतस्तोत्र–सूक्तादिकमपि विदितम्।

कीर्तिकौमुदी–गूर्जरेश्वरपुरोहितेन सोमेश्वरेण सुकविना सन्दर्भिता प्रस्तुतस्य महामात्यस्य कीर्तिर्विलसति कीर्तिकौमुदीसंज्ञके नवसर्गात्मके महाकाव्ये, प्रशस्तिश्च

वि. सं. १२८७, ८८ वर्षेषु अर्बुदगिरि–गिरिनारजैनमन्दिर–शिलालेखादौ, सुरथोत्सव-प्रान्तसर्गे, उल्लाघराघवादौ च प्रतिसर्गप्रान्ते ।

सुकृतसङ्कीर्तनम्–कविरत्नारिसिंहेन निर्मितमेतदेकादशसर्गमयं महाकाव्यम्, यत्र च प्रतिसर्गप्रान्ते श्लोकचतुष्टयं निर्ममे तत्सहचरेण सुकविनाऽमरेण ।

वसन्तविलासमहाकाव्यम्–सिद्धसारस्वताचार्यबालचन्द्रकविरचितं महामात्यस्व-र्गगमनादनन्तरं तत्पुत्रजयन्त(जैत्र)सिंहसचिवमनोविनोदकृते चतुर्दशसर्गात्मकमेतदपीत एव( गा. प्रा. ग्रं. क्र. ७ ) प्रकाशितम्, येन कविना वस्तुपालनिर्मितशत्रुञ्जयतीर्थेन्द्र-मण्डपेऽभिनयार्थं करुणावज्रायुधरूपकमपि रचितम् ।

धर्माभ्युदयमहाकाव्यम् ( सङ्घपतिचरितम् )–लक्ष्म्यङ्कमेतत् पण्डितपुण्डरीकेण नागेन्द्रगच्छीयविजयसेनसूरिपट्टधरेणोदयप्रभसूरिणा रचितम् । इतः प्रकाशिते प्राचीन-गूर्जरकाव्यसंग्रहे ( गा. प्रा. ग्रं. १३ ) यस्य पञ्चदशः सर्गः प्रकाशितः, सम्पूर्ण-मिदं पुण्यविजयमुनिराजप्रयत्नादचिरात् प्रकाशतामागमिष्यति ।

सुकृतकीर्ति–कल्लोलिनी–पूर्वोक्तस्यैवोदयप्रभसूरेः कृतिरेषा अत्रैव ग्रन्थमालायां हम्मीरमदमर्दन–प्रान्ते तृतीयपरिशिष्टरूपेण प्रकाशिता ।

हम्मीरमदमर्दनं नाटकम्–मन्त्रीश्वरवस्तुपालप्रशस्त्या साकमेतत् सुकविना जयसिंहसूरिणा निर्मितं सं. १२८६ वर्षीयताडपत्रपुस्तकादित एव (गा. प्रा. ग्रं. १०) प्रकाशितम् ।

वस्तुपाल–प्रशस्तिः ( १ )–येनास्य महामात्यस्य प्रार्थनया कथारत्नसागरो निर्मितः, येन चायमलङ्कारमहोदधिर्निजशिष्यात् कारितस्तेन नरचन्द्रसूरिणा रचितैषा प्रशस्तिरत्र चतुर्थे परिशिष्टे प्रकाश्यमाना प्रमदावहा भविष्यति ।

वस्तुपाल–प्रशस्तिद्वयम्–( २–३ )–अलङ्कारमहोदधिकर्त्राऽनेनैव ग्रन्थकारेण नरेन्द्रप्रभसूरिणैकत्र प्रशस्तौ १०४ पद्येषु मन्त्रीश्वरवस्तुपालविहितानि विविधस्थानी-यानि विविधानि सुकृत्यानि संस्मृतानि । अन्यस्यां च ३७ पद्यपरिमितायां प्रशस्तौ तदीयं सुयशः प्राकाशि । एतच्चात्र प्रान्ते परिशिष्ट( ५–६ )रूपे प्रकाशितं समुप-युक्तं ज्ञास्यते । एतदन्तर्गतानि कानिचित् पद्यानि गिरिनारगिरिशिखरस्थे वि. सं. १२८८ वर्षीये मन्त्रीश्वरबन्धुकारितजिनालयप्रशस्ति–शिलालेखे नरेन्द्रसूरिनाम्नोट्ट-ङ्कितान्यपि दृश्यन्ते ॥

अर्बुद–गिरिनारप्रभृतितीर्थ–धर्मस्थानप्रतिष्ठापक–वस्तुपाल–तेजःपालधर्माचार्य-श्रीविजयसेनसूरिनिर्मितो रेवन्तगिरिरासोऽत्रैव ( गा. प्रा. ग्रं. १३ ) प्राचीनगूर्जर-काव्यसंग्रहे प्रकाशितः। तत्र निम्ननिर्दिष्टेष्वनन्तरेष्वितरेष्वपि च वस्तुपाल–संस्मरणान्युपलभ्यन्ते ।

वि. सं. १३६१ वर्षे मेरुतुङ्गसूरिणा प्रबन्धचिन्तामणौ (वस्तुपाल–प्रबन्धः),
पुरातनप्रबन्धसङ्ग्रहे "
वि. सं. १३८९ वर्षे जिनप्रभसूरिणा तीर्थकल्पे ( वस्तुपाल–तेजःपाल-कल्पः ),
वि. सं. १४०५ वर्षे राजशेखरसूरिणा प्रबन्धकोशे ( वस्तुपाल–प्रबन्धः ),
वि. सं. १४९७ वर्षे जिनहर्षगणिना रचिते वस्तुपाल–चरितकाव्ये ।
वि. सं. १५०३ वर्षे पं. सोमधर्मगणिना उपदेशसप्ततौ ।
वि. सं. १५१७ वर्षे रत्नमन्दिरगणिना उपदेशतरङ्गिणीप्रभृतौ ।
वि. सं. १५२१ वर्षे शुभशीलगणिना प्रबन्धपञ्चशती–कथाकोशे ।

वि. सं. १४८४ वर्षे हीराणन्दसूरिणा, षोडश–सप्तदशाष्टादशशताब्दीसम्भवैश्चेतरैर्लक्ष्मीसागरसूरि–पार्श्वचन्द्रसूरि–समयसुन्दर–मेरुविजयाद्यनेकैः कविभिर्गूर्जरादिदेशभाषायां वस्तुपाल–तेजःपालरासकाव्यानि रचितानि ।

उपर्युक्तांश्च ग्रन्थादीनाश्रित्याधुनिकैरप्यनेकैर्भिन्नभिन्नरचनाऽकारि । वि. सं. १९८२–८३ वर्षे ' जैन ' साप्ताहिकपत्रे ' सिद्धराज अने जैनो ' संज्ञिकायां लेखमालायाम्, ' तेजपालनो विजय ' नामनि निबन्धेऽपि च मया किञ्चित् तत्परिचये सूचितम् ।

## हर्षपुरीयगच्छाचार्याः ।

" राजानः प्रतिबोधिताः कति कति ग्रन्थाः स्वयं निर्मिताः !
वादीन्द्राः कति निर्जिताः कति तपांस्युग्राणि तप्तानि च ? ।
श्रीमद्हर्षपुरीयगच्छमुकुटैः श्रीसूरिसुत्रामभिः
सच्छिष्यैर्मुनिभिश्च वेत्ति नवरं वागीश्वरी तन्मितम् ॥ "
—सुधाकलशः सङ्गीतोपनिषत्सारोद्धारे [ अ. ६, श्लो. ४८]

प्रस्तुतालङ्कारमहोदधिकारेणात्र निजपरिचये हर्षपुरीयगच्छस्योल्लेखोऽकारि । तस्य प्रादुर्भावः पर्युषणाकल्पसूत्र–स्थविरावल्यां निर्दिष्टात् कोटिकगण–मध्यमाशाखा–सम्बद्धप्रश्नवाहनकुलात् ज्ञायते । अजयमेरुनिकटवर्तिसुभटपालपालितहर्षपुरतोऽस्य

गच्छस्य प्रसिद्धिः । मध्यमाशाखाप्रभवस्य प्रभावकस्य प्रियग्रन्थसूरेः परिचय उपलभ्यते वि. सं. १६२८ वर्षे धर्मसागरगणिविहितायां कल्पसूत्र-किरणावल्याम् (पृ. १६९), सं. १६९६ वर्षे विनयविजयगणिविरचितायां कल्पसूत्र-सुबोधिकायाम् [ पृ. १६७-१६८ ] च वृत्तौ । एतद्गच्छीयजयसिंहसूरिः शाकम्भरीदेशे सन्मानित आसीत् । एवं च तदनुयायिनो गूर्जरेश्वराणां हर्षपूरका आसन् । राजमान्यैरधिकारिमान्यैः प्रजाप्रियैर्विद्वद्भिः सद्गुणिभिः सच्चरितैश्चैतैराचार्यैर्गूर्जरादिदेशेष्वपि बहूपकृतमिति तदीयग्रन्थाद्यवलोकनेन विज्ञायते । नरेन्द्रप्रभसूरिरप्यत्र तद्गच्छीयपूर्वजगुरुपरम्परां समसूचयत् । प्रमाणान्तरसंवादेनात्रैवं क्रमेण सा निर्दिश्यते—

( प्रश्नवाहनकुले )

## हर्षपुरीयगच्छाधिपति-सूरि-परम्परा ।




### अभयदेवसूरिः ( मलधारी ) ।

प्रश्नवाहनकुलोद्भूतहर्षपुरीयगच्छीयजयसिंहसूरेः शिष्योऽयं निःस्पृह-निर्ग्रन्थशिरोमणिः प्रशस्तगुणगणशाली राजमान्यः समभूत् । अलङ्कारमहोदधिकारेणात्र निरदेशि यदयं गुरुर्गूर्जरेश्वरकर्णराजकृतं 'मलधारी' इति नामान्तरमधारयत्[1] ।

---

१ "गच्छे हर्षपुरीये गुणसेवधिरभयदेवसूरिरभूत् ।
मलधारीत्यभिधाऽन्तरमधत्त यः कर्णभूपकृतम् ॥"
—अलङ्कारमहोदधि-प्रशस्तौ ( श्लो. १ )

गोपगिरि( ग्वालियर )शिखरस्थितमहावीरजिनायतनस्य चिरकालमवरुद्धं द्वारं येन तत्र गत्वा भुवनपालभूपालं भणित्वा प्रोद्घटितमकारि । यस्य सदुपदेशाद् गूर्जरेश्वरः सुप्रसिद्धराजाधिराजसिद्धराजजयसिंहोऽखिले स्वदेशे पर्युषणादि-तिथिषु, एकादशीमुख्य(८०)दिनेषु शासनदानपूर्वाममारिमकारयत् । येन वरणगसुतं संतूयसचिवमुपदिश्य भृगुकच्छे शकुनिकाविहारे जिनचैत्ये सुवर्णमयाः कलशाः समारोपिताः । यस्य च सन्देशकेनापि शाकम्भरीनरेन्द्रेण पृथ्वीराजेन भूभुजा रणस्त-म्भपुरे (रणथंभोर )–जिनालये सुवर्णकुम्भाः स्थापिताः । संयममार्गप्रकाशकेन सदुपदेश-केन येन लोको दान–तपः–पूजा–कल्याणकमहोत्सवाष्टाह्निकादिधर्मकार्येषु प्रवर्तितः; तस्योपदेशात् प्रद्युम्नो राजसचिवः चतस्रः प्रियाः परित्यज्य चारित्रं प्रत्यपद्यत,

---

एतदनुसारि वच उपलभ्यते हर्षपुरीयगच्छ–सद्‌गुरुपद्धतौ— [ पि. रि. ५, ९६ ]

" हरिसउरगच्छतिलओ गुणनिलओ विहियसयलदुहविलओ ।
सिरिअभयदेवसूरी सुविहियचूडामणी जयउ ॥

कालवसेणं अवहे अहिणवपहियस्स पुव्वसाहुपहे ।
जस्स मलहारिनामं दिन्नं कन्नेण नरवइणा ॥ "

सं. १३८७ वर्षे एतदनुसरति स्म राजशेखरसूरिः प्राकृतद्वयाश्रयवृत्ति–प्रशस्तौ श्लो० ७ [ पत्तनस्थप्राच्यजैनभाण्डागारीयग्रन्थसूच्याम् २ ], न्यायकन्दली–वृत्ति–पञ्जिकाप्रशस्तौ च [ श्लो.५ पी. रि. ३, पृ. २७४ ]

" श्रीगूर्जरेश्वरो दृष्ट्वा तीव्रं मलपरीषहम् । श्रीकर्णो बिरुदं यस्य मलधारीत्यघोषयत् ॥ "

सं. १३८०, १४०६ वर्षे सुधाकलशश्च सङ्गीतोपनिषत्सारोद्धार–प्रान्ते(पत्तनीयग्रन्थसूच्याम् २)–

" तद्‌गच्छेऽभयदेवसूरिसुगुरोः श्रीकर्णभूपेन यः
संज्ञा सन्मलधारिणीति स्वयं निर्मिता । "

जिनप्रभसूरिणा सं. १३८९ वर्षे विरचिते तीर्थकल्पे 'मलधारि' नाम जयसिंहनरेन्द्रा-दिरदेशि, किन्तु तद्‌गच्छीयानां पूर्वोक्तानुसारेण कर्णराजात् तत्प्रख्यातिरधिकप्रामाणिका प्रतिभाति ।

वि. सं. १७१५ वर्षे भावविजयगणिरन्तरिक्षपार्श्वनाथमाहात्म्ये (श्लो. ८६, ८७, ९८)–

" श्रूयतेऽभयदेवाख्यः सर्वशास्त्रविशारदः । मान्यो बहुषु भूपेषु सूरिः सुरीतकान्वितः ॥
गूर्जरदेशीयो राजा कर्णः कर्णेव विक्रमः । स ददौ श्रीमति सूरौ मलधारिमहापदम् ॥
× × प्रतिष्ठाविधिना सूरिः प्रतिष्ठापितवांस्तदा ।
द्विचत्वारिंशदुत्तरैकादशशत [ ११४२ ] विक्रमे । माघसितपञ्चम्यर्के मुहूर्ते विजयागते ॥ "

गच्छस्य प्रसिद्धिः । मध्यमाशाखाप्रभवस्य प्रभावकस्य प्रियग्रन्थसूरेः परिचय उपलभ्यते वि. सं: १६२८ वर्षे धर्मसागरगणिविहितायां कल्पसूत्र-किरणावल्याम् (पृ. १६९), सं. १६९६ वर्षे विनयविजयगणिविरचितायां कल्पसूत्र-सुबोधिकायाम् [ पृ. १६७-१६८ ] च वृत्तौ । एतद्गच्छीयजयसिंहसूरिः शाकम्भरीदेशे सन्मानित आसीत् । एवं च तदनुयायिनो गूर्जरेश्वराणां हर्षपूरका आसन् । राजमान्यैरधिकारिमान्यैः प्रजाप्रियैर्विद्वद्भिः सद्गुणिभिः सच्चरितैश्चैतैराचार्यैर्गूर्जरादिदेशेष्वपि बहूपकृतमिति तदीयग्रन्थाद्यवलोकनेन विज्ञायते । नरेन्द्रप्रभसूरिरप्यत्र तद्गच्छीयपूर्वजगुरुपरम्परां समसूचयत् । प्रमाणान्तरसंवादेनात्रैवं क्रमेण सा निर्दिश्यते—

( प्रश्नवाहनकुले )

## हर्षपुरीयगच्छाधिपति-सूरि-परम्परा ।

जयसिंहसूरिः

अभयदेवसूरिः ( मलधारी )

हेमचन्द्रसूरिः




### अभयदेवसूरिः ( मलधारी ) ।

प्रश्नवाहनकुलोद्भूतहर्षपुरीयगच्छीयजयसिंहसूरेः शिष्योऽयं निःस्पृह-निर्ग्रन्थशिरोमणिः प्रशस्तगुणगणशाली राजमान्यः समभूत् । अलङ्कारमहोदधिकारेणात्र निरदेशि यदयं गुरुर्गूर्जरेश्वरकर्णराजकृतं 'मलधारी' इति नामान्तरमधारयत्[1] ।

---

१ "गच्छे हर्षपुरीये गुणसेवधिरभयदेवसूरिरभूत् ।
मलधारीत्यभिधाऽन्तरमधत्त यः कर्णभूपकृतम् ॥"
—अलङ्कारमहोदधि-प्रशस्तौ ( श्लो. १ )

गोपगिरि( ग्वालियर )शिखरस्थितमहावीरजिनायतनस्य चिरकालमवरुद्धं द्वारं येन तत्र गत्वा भुवनपालभूपालं भणित्वा प्रोद्घटितमकारि । यस्य सदुपदेशाद् गूर्जरेश्वरः सुप्रसिद्धराजाधिराजसिद्धराजजयसिंहोऽखिले स्वदेशे पर्युषणादि-तिथिषु, एकादशीमुख्य(८०)दिनेषु शासनदानपूर्वममारिमकारयत् । येन वरणगसुतं संतूयसचिवमुपदिश्य भृगुकच्छे शकुनिकाविहारे जिनचैत्ये सुवर्णमयाः कलशाः समारोपिताः । यस्य च सन्देशकेनापि शाकम्भरीनरेन्द्रेण पृथ्वीराजेन भूभुजा रणस्त-म्भपुरे (रणथंभोर )–जिनालये सुवर्णकुम्भाः स्थापिताः। संयममार्गप्रकाशकेन सदुपदेश-केन येन लोको दान–तपः–पूजा–कल्याणकमहोत्सवाष्टाह्निकादिधर्मकार्येषु प्रवर्तितः; तस्योपदेशात् प्रद्युम्नो राजसचिवः चतस्रः प्रियाः परित्यज्य चारित्रं प्रत्यपद्यत,

---

एतदनुसारि वच उपलभ्यते हर्षपुरीयगच्छ–सद्गुरुपद्धतौ— [ पि. रि. ५, ९६ ]

" हरिसउरगच्छतिलओ गुणनिलओ विहियसयलदुहविलओ ।
सिरिअभयदेवसूरी सुविहियचूडामणी जयउ ॥

कालवसेणं अवहे अहिणवपहियस्स पुव्वसाहुपहे ।
जस्स मलहारिनामं दिन्नं कन्नेण नरवइणा ॥ "

सं. १३८७ वर्षे एतदनुसरति स्म राजशेखरसूरिः प्राकृतद्व्याश्रयवृत्ति–प्रशस्तौ श्लो० ७ [ पत्तनस्थप्राच्यजैनभाण्डागारीयग्रन्थसूच्याम् २ ], न्यायकन्दली–वृत्ति–पञ्जिकाप्रशस्तौ च [ श्लो.५ पी. रि. ३, पृ. २७४ ]

" श्रीगूर्जरेश्वरो दृष्ट्वा तीव्रं मलपरीषहम् । श्रीकर्णो बिरुदं यस्य मलधारीत्यघोषयत् ॥ "

सं. १३८०, १४०६ वर्षे सुधाकलशश्च सङ्गीतोपनिषत्सारोद्धार–प्रान्ते(पत्तनीयग्रन्थसूच्याम् २)–

" तद्गच्छेऽभयदेवसूरिसुगुरोः श्रीकर्णभूपेन यः
संज्ञा सन्मलधारिणीति स्वयं निर्मिता । "

जिनप्रभसूरिणा सं. १३८९ वर्षे विरचिते तीर्थकल्पे 'मलधारि' नाम जयसिंहनरेन्द्रा-त्तिरदेशि, किन्तु तद्गच्छीयानां पूर्वोक्तानुसारेण कर्णराजात् तत्प्रख्यातिरधिकप्रामाणिका प्रतिभाति ।

वि. सं. १७१५ वर्षे भावविजयगणिरन्तरिक्षपार्श्वनाथमाहात्म्ये (श्लो. ८६, ८७, ९८)–
" श्रूयतेऽभयदेवाख्यः सर्वशास्त्रविशारदः । मान्यो बहुषु भूपेषु सूरिः सुरीबलान्वितः ॥
गूर्जरदेशियो राजा कर्णः कर्णेव विक्रमः । स ददौ श्रीमति सूरौ मलधारिमहापदम् ॥
× × प्रतिष्ठाविधिना सूरिः प्रतिष्ठापितवांस्तदा ।
द्विचत्वारिंशदुत्तरैकादशशत [ ११४२ ] विक्रमे । माघसितपञ्चम्यर्के मुहूर्ते विजयागते ॥ "

निर्ग्रन्थानां तिलकं लक्षावधिश्लोकविनिर्माता स हेमचन्द्रसूरिरस्य सुशिष्यः समजनि। गूर्जरेन्द्रनगरेऽणहिल्लपाटकपत्तनेऽन्तिमानशनस्थितस्यास्य चाभयदेवसूरेर्दर्शन वन्दनाद्यर्थं राजप्रभृतिजनानां ग्राम–नगर–देशनिवासिश्राद्धानां च सम्मर्दः समजनि। परभवं प्राप्तस्य च यस्य शरीरस्य श्रीखण्डविमानारोपणादि–श्मशानयात्राऽग्निसंस्कारमहोत्सवोऽपूर्वः श्रद्धा–भक्तिनिर्भरैरकारि। तत्कालीनं दृश्यं प्राकारपश्चिमाट्टालके स्थितेन जयसिंहराजेन निजपरिजनेन सह प्रैक्षि। तस्य चितास्थानरक्षा–मृत्तिकाऽऽद्यपि लोकानां रोगादिबाधाहरमजनि। वर्णितमेतत् समकालीनैः साक्षिश्रीचन्द्रसूरिप्रभृतिभिः सुकविभिः।

## हेमचन्द्रसूरिः।

पूर्वोक्तस्याभयदेवसूरेः पट्टधरोऽयमत्र(पृ.२३९) प्रान्तप्रशस्तिद्वितीयपद्ये संस्मृतः–

" शिष्यस्तदीयोऽजनि हेमसूरिरपारविद्यार्णव–कर्णधारः।
श्रीसिद्धराजः किल यस्य वाचं बभार शेषामिव मूर्ध्नि शश्वत् ॥ "

एतेन भगवती जिह्वाग्रे कृताऽऽसीत्, अर्धलक्षश्लोकपरिमिता मूलग्रन्थ–विशेषावश्यक–लक्षण–प्रमाणादिग्रन्थाश्च पठिता आसन्। राजामात्यादिबहुलायां सभायां गम्भीरध्वनिनाऽनेन उपमितभवप्रपञ्चादि भूरि भूरि व्याख्यातमासीत्।

वि. सं. ११६४ वर्षेऽणहिलपाटके जयसिंहराज्ये एतल्लिखिता ६६२७ श्लोकपरिमिता निजनिर्मिताया जीवसमासवृत्तेस्ताडपत्रीयपुस्तिकोपलभ्यतेऽद्यावधि स्तम्भतीर्थ(खंभात)जैनपुस्तकभाण्डागारे [ वि. रि. १, १८ ], एतेन १४००० श्लोकपरिमिता स्वोपज्ञोपदेशमाला–सूत्र–वृत्तिः, वि. सं. ११७० वर्षे १३००० श्लोकपरिमिता स्वोपज्ञभवभावनासूत्रवृत्तिर्व्यरचि, अनुयोगद्वारसूत्रस्य वृत्तिः ६०००, शतक-

१ " त(य)स्योपदेशान्निर्मुच्य चतस्रश्चपलेक्षणाः। प्रद्युम्नो राजसचिवश्चारित्रं प्रत्यपद्यत ॥
श्रीहेमचन्द्र इत्यासीत् सूरिर्भूरिगुणः स तु। ग्रन्थलक्ष–विनिर्माता निर्ग्रन्थानां विशेषकम् ॥
विंशत्यूनममारिपत्रलिखितं प्रत्यब्दमह्नां शतं
क्षोणौ जात्यसुवर्णदण्ड–कलशैश्चैत्यान्यशृङ्गारणम्।
व्याख्यानावसरे स्वयं जिनगृहास्थामण्डपे वाचनं
श्रीसिद्धाधिपतिर्व्यधात् स्व...मिदं यत्पादपूजापदे ॥ "
—शब्दब्रह्मचाश्रय–वृत्ति–प्रशस्तौ श्लो० ९–११ [ पत्तनस्थप्राच्यजैनभाण्डागारीयग्रन्थसूच्याम् २ ]
प्रतिबोध्य सिद्धभूधवमुद्दण्डैः कनकदण्डकलशौघैः। उत्तंसितवान् परितः स्वदेश–परदेशचैत्यानि।
प्रतिवर्षं जीवरक्षामशीत्यहमशीत्यहम्। यस्योपदेशात् सिद्धेशस्ताम्रपत्रेष्वलीलिखत् ॥ ".
—न्यायकन्दलीपञ्जिकाप्रशस्तौ [ श्लो. ९, १० पी. रि. ३; २७४, २७५ ]

(कर्मग्रन्थ)स्य वृत्ति: ४०००, मूलावश्यकवृत्तेष्टिप्पनं ५०००, नन्दिटिप्पनकम्, तथा वि. सं. ११७५ वर्षे जयसिंहराजराज्ये २८००० श्लोकपरिमिता विशेषावश्यक-सूत्र-भाष्यविवृतिरपि व्यधायि।

एतस्य व्याख्यानगुणप्रसिद्धिं श्रुत्वा गूर्जरनरेन्द्रो जयसिंहः परिवारसंयुक्तः स्वयमेव जिनमन्दिरे आगत्योपयुक्तचित्तो धर्मकथां सुचिरं शृण्वन्नासीत्, कदाचित् तद्दर्शनोत्कण्ठितमानसश्च वसतावागत्य चिरं संलापं कुर्वन्नासीत्। निजे धवलगृहे आगमनायामन्त्रितोऽयं सूरिवर्यो यदा तत्र गतस्तदा तेन महाराजेन सुवर्णभाजन-स्थितार्घादिना भूरिभक्त्या पूजितः सत्कृत आसीत्।

एतेनैव हेमचन्द्रसूरिणा जयसिंहराजमुक्त्वा तस्य सकले मण्डले जिनमन्दिरेषु मनोहरसुवर्णमयाः कलशाः समारोपिताः। धंधुकक-सत्यपुरप्रभृतिषु स्थानेष्वन्यतीर्थिभिः क्रियमाणा जिनशासनस्य पीडा सुराष्ट्रप्रभुराजखङ्गारप्रबोधकेनानेन निवारिता, तेष्वन्यस्थानेष्वपि च रथपरिभ्रमणं कारितम्। देवदायस्य रक्षा-वृद्धिकृते सङ्घेन सह शत्रुञ्जयोज्जयन्ततीर्थयात्रादिकृते जिनशासनोन्नतये च बहु प्रयतितम्। एतस्य श्मशान-यात्रायामनुगमनेनान्तिमसन्माननं कृतमासीत् सिद्धराजेनेत्यादि ज्ञायते तत्कालीनकविना तदीयपट्टधरेण वि. सं. ११९१ वर्षे विजयसिंहसूरिणा विरचिताया धर्मोपदेशमाला-विवृतेः, श्रीचन्द्रसूरिणा च वि. सं. ११९३ वर्षे रचितस्य ११००० पद्यपरिमितस्य प्राकृतमुनिसुव्रतचरितस्य प्रान्तप्रशस्तितः, याऽस्माभिः पत्तनस्थप्राच्यजैनभाण्डागार-ग्रन्थसूच्याम् [गा. प्रा. ग्रं. ७६, पृ. ३११-३२३] प्रादर्शि*।

विजयसिंहसूरिः। अत्र प्रान्ते ( पृ. ३३९ ) तृतीये पद्येऽस्य स्मरणमकारि। एतस्य कृतिरूपं १४४७१ श्लोकपरिमितं धर्मोपदेशमाला-विवरणं वि. सं. ११९१ वर्षे निष्पन्नं तत् समसूच्यस्माभिः पत्तनभां० सूच्याम् [गा. प्रा. ग्रं. ७६, पृ. ३११]

श्रीचन्द्रसूरिः। अत्र प्रान्ते ( पृ. ३३९ ) चतुर्थपद्ये संस्मृतस्य संग्रहणीरत्न-क्षेत्रसमासादिकर्तुरस्य ११००० श्लोकपरिमितं संवत् ११९३ वर्षे निष्पन्नं प्राकृतं मुनिसुव्रतचरितं पत्तनभां० सूच्याम् [ गा. प्रा. ग्रं. ७६ पृ. ३१४ ] ऐतिहासि-कप्रशस्त्या समं समसूच्यस्माभिः। वि. सं. ११९९ वर्षे विरचिते प्रा. सुपार्श्वनाथ-

* अत्र पीटर्सनरि. ४, ५ प्रभृतौ जातं स्खलनं 'जैन' साप्ताहिके समशोधि 'सिद्ध-राज अने जैनो' संज्ञितायां लेखमालायामस्माभिः सं. १९८२-८३ वर्षेषु।

चरिते लक्ष्मणगणी निजं सतीर्थ्यमेनं पूर्वावस्थायां लाटदेशमुद्रापालकमधिकारिणमुपालक्षयत्।

**लक्ष्मणगणी**। वि. सं. ११९९ वर्षे माघशु. १० गुरुवासरे मण्डलिपुर्यां कुमारपालराज्ये पूर्वोक्तहेमचन्द्रसूरिशिष्येणानेन दशसहस्रश्लोकपरिमितं सप्तमतीर्थनाथस्य सुपार्श्वनाथस्य प्राकृतं चरितं रचितमासीद् यत् प्रसिद्धम्।

**मुनिचन्द्रसूरिः**।

अत्र प्रारम्भे [ पृ. १, श्लो. ६ ] प्रान्ते च ( पृ. ३२९ ) पञ्चमपद्यसूचितस्य नरचन्द्रसूरिगुरोरस्य पार्श्वे चौलुक्य आनलनृपः सगर्भमृग्या वधतो विषण्णोभूय प्रवव्राज इत्युल्लेख उपलभ्यतेऽन्यत्र। देवानन्दसूरिरस्य मुख्यः पट्टधरो ज्ञायते।

**देवभद्रसूरिः**। श्रीचन्द्रसूरिशिष्येण मुनिचन्द्रसूरिभ्यो लब्धप्रतिष्ठेनानेन वि. सं. १२३३ वर्षे निजगुरुरचितस्य संग्रहणीरत्नस्य, क्षेत्रसमासस्य च वृत्ती विहिते। न्यायावतार-वृत्तिटिप्पनमप्येतेन व्यरचि।

**देवप्रभसूरिः**। अलङ्कारमहोदधिकारेणात्र प्रारम्भे षष्ठे पद्ये प्रान्तेऽष्टमपद्ये चास्य प्रसादोऽस्मारि, एतदरचितं पाण्डवचरितमहाकाव्य-धर्मसारशास्त्र-मृगावतीचरित्रादि प्रसिद्धम्। एतत्कृतोऽनर्घराघवरहस्यादर्शोऽस्माभिः पत्तन-ग्रन्थसूच्यां [ पृ. ३०१ ] सूचितः।

---

१ " दुइओ अमुद्दविज्जासमुद्द-संपुन्नपुन्निमाइंदो।
जिणपवयण-कुमुयवियासगो य सिरिचंदसूरि त्ति॥
पालंतेणं सिरिलाडदेसमुद्दं न केवलं जेण।
जिणपवयणस्स विहिया पभावणा समणमुद्दं पि॥
जस्स य मुणिसुव्वयचरिय-रंगसालाए विलसिया वाणी।
छंदाणुगयालंकारसालिणो लंखयवहु व्व॥"
—तदनुयायी राजशेखरसूरिश्चेत्थं निरदिशत्—
" श्रीश्रीचन्द्रमुनीन्द्रो विबुधेन्दुमुनिश्च तस्य वंश्यौ द्वौ।
यौ लाटदेशमुद्रामुज्झित्वा जगृहतुर्दीक्षाम्॥"
न्यायकन्दलीपञ्जिका-प्रशस्तौ श्लो. ११, प्रा. द्व्या. वृत्ति-प्रशस्तौ च।

२ " श्रीचन्द्रसूरिशिष्यो मुनिचन्द्रप्रभुः शुचिचरित्रः।
चौलुक्यमानलनृपं वाग्मी प्रव्राजयामास॥"
राजशेखरसूरिन्यायकन्दली-पञ्जिकाप्रशस्तौ ( पि. रि. ३, २७५ )
तदन्वयेऽभून्मुनिचन्द्रसूरिर्यत्पादमूले चरणं प्रपेदे।
श्रीआनलः श्रीचुलुवंशजन्मा सगर्भमृग्या वधतो विषण्णः॥"
—सं. १३८७ वर्षे प्रा. द्व्याश्रयमहाकाव्य-वृत्ति-प्रशस्तौ च।

## नरचन्द्रसूरिः ।

सम्माननीयोऽयं सूरिर्मन्त्रीश्वरवस्तुपालप्रार्थनया समुल्लासिते स्वकीये कथारत्नसागरे यत्र पद्ये स्वपरिचये समसूचयद् हर्षपुरीयगच्छसवितृमुनिचन्द्रसूरि-शिष्यत्वम्, देवानन्दसूरिहस्तात् प्रतिष्ठोदयम् (निजं सूरिपदम्), देवप्रभसूरिवचनाच्च प्रबोधधृत्वम् ; तदेव पद्यं प्रान्तांशपरिवर्तनेन समवतारयदत्रालङ्कारमहोदधि–प्रारम्भे षष्ठपद्यतया तदीयशिष्यो नरेन्द्रप्रभसूरिः[1] । एवं नरचन्द्रसूरेरमृतसदृशा वाचश्चौ-लुक्यराजसभायां सभासदां हर्षकारिण्यो बभूवुरित्यादिसूचकं पद्यमपि ग्रन्थद्वयेऽपि दृश्यते[2] । वस्तुपालविज्ञप्तिसूचकं यत् पद्यं कथारत्नसागरे प्रयुक्तं तदेवात्रालङ्कारमहो-दधावप्यवतारितमवलोक्यते ।

नरचन्द्रसूरिर्निजरचनायां निमित्तभूतां निरदिशदित्थं मन्त्रिवस्तुपालस्याभ्यर्थनाम्-

" अन्येद्युर्भक्तितो मौली निधाय करकुड्मलम् ।
तेन विज्ञपितः श्रीमान् नरचन्द्रो मुनीश्वरः ॥

—कथारत्नसागरे [ श्लो.८ ], अलङ्कारमहोदधौ [ श्लो. १६ ]

" युष्माभिः स्वकराम्बुजस्य शिरसि न्यस्तस्य माहात्म्यतः
प्राप्तं जम्भजितोऽपि दुर्लभतरं सङ्घाधिपत्यं मया ।
धर्मस्थानशतानि दानविधयस्ते ते च सन्तेनिरे
चेतः सम्प्रति जैनशासनकथाः श्रोतुं समुत्कण्ठते ॥
इत्यभ्यर्थनया चक्रुर्वस्तुपालस्य मन्त्रिणः ।
नरचन्द्रमुनीन्द्रास्ते श्रीकथारत्नसागरम् ॥ "

---

१ नरचन्द्रसूरिः कथारत्नसागरे ( श्लो. ४ )—
" शिष्यो हर्षपुरीयगच्छसवितुः श्रीमन्मुनीन्दुप्रभो-
र्देवानन्दमुनीन्द्रपाणिकमलोन्मीलत्प्रतिष्ठोदयः ।
श्रीदेवप्रभसूरिवाङ्मयमहाभैषज्यशाम्यन्मन-
स्तन्द्रः श्रीनरचन्द्रसूरिरुदयी प्रीणाति विश्वम्भराम् ॥ "
एवं च नरेन्द्रप्रभसूरिरलङ्कारमहोदधौ ( श्लो. ६ )—
" + + + स्तन्द्रः श्रीनरचन्द्रसूरिरवनीचन्द्रश्चिरं नन्दतात् ॥ "

२ नरचन्द्रसूरिः कथारत्नसागरे ( श्लो. ५ ), नरेन्द्रप्रभसूरिश्चालङ्कारमहोदधौ (श्लो. ७)–
" पीयूषबन्धुरतरास्त( सु )रसा निहत्य हालाहलं समदवादमयं बुधानाम् ।
चौलुक्यभूमिपतिसंसदि यस्य वाचः केषां न चेतसि मुदं म(-दमु)दपादयन्नभूवुः ? ॥ "

कथारत्नसागरे [ पत्तनभां. सूच्याम् १, पृ. १४, श्लो. ८-१० ] सूचयति स्म ।

गूर्जरेश्वरपुरोहितकविसोमेश्वरः [वस्तुपाल]प्रशस्तिकर्तारं कवीन्द्रमेनं मुनीन्द्रं प्रशंसति स्म कीर्तिकौमुद्याम् [ श्लो. २२ ]

" कवीन्द्रश्च मुनीन्द्रश्च नरचन्द्रो जयत्ययम् ।
प्रशस्तिर्यस्य काव्येषु सङ्क्रान्ता हृदयादिव ॥ "

अरिसिंहकविर्वर्णयति स्म वस्तुपालतीर्थयात्रासङ्घसहचरमेनं सुकृतसङ्कीर्तने [ सं. ९, श्लो. १० ]-

" अथानुनेलुर्नरचन्द्रसूरयो लसत्त्रसस्तोमविलोकनच्छलात् ।
दृशैव सिञ्चन्त इवाद्भुतश्रमां प्रयाति सङ्घे वसुधां सुधान्तया ॥ "

देवप्रभसूरिः प्रकटयति स्म पाण्डवचरिते [प्रश. श्लो. ११ पि. रि. ३, १३४] यशोभद्रसूरिस्मरणेन सह तत्संशुद्धिकारिणीं तदीयां प्रज्ञाम्—

" ज्ञानैकमयमूर्त्त( र्ती )नामस्मिन् नवरसान्विते ।
श्रीनरचन्द्रसूरीणां प्रज्ञया कतकायितम् ॥ "

वि. सं. १२९१ वर्षे नागेन्द्रगच्छनायक उदयप्रभसूरिः स्वकीयमहाकाव्य-संशोधकमेनं समस्मरद् धर्माभ्युदये सङ्घपतिचरिते महाकाव्ये[स. १९, श्लो. ६०-६१]-

" किञ्च श्रीमलधारिगच्छजलधिप्रोल्लासशीतद्युते-
स्तस्य श्रीनरचन्द्रसूरिसुगुरोर्माहात्म्यमाशास्महे ।
यत्पाणिस्मितपद्मवासविकसत्किञ्जल्कसंवासिताः
सन्तः सन्ततमाश्रिताः किल मया भृङ्ग्येव मान्ति क्षितौ ॥
श्रीधर्माभ्युदयाह्वयेऽत्र चरिते श्रीसङ्घभर्तुर्मया
दध्रे काव्यदलानि सङ्घटयितुं कर्मान्तिकत्वं परम् ।
किन्तु श्रीनरचन्द्रसूरिभिरिदं संशोध्य चक्रे जगत्-
पावित्र्यक्षमपादपङ्कजरजःपुञ्जैः प्रतिष्ठाऽऽस्पदम् ॥ "

संस्मरति स्म विबुधचन्द्रकविर्विवेकपादपे सूक्तसमुच्चये [ श्लो. ४२१; पत्तन-स्थप्राच्यजैनभाण्डागारीयग्रन्थसूच्याम् १, पृ. १८७]-

" यस्मै प्रसादविवशो दिशति स्म शास्त्र-तत्त्वामृतं स भगवान् नरचन्द्रसूरिः ।
सोऽयं कृती विबुधचन्द्रकविः स्वहेतोः सूक्तानि कानिचिदमूनि समुज्जगार ॥ "

नरेन्द्रप्रभसूरिः स्वीयायामन्यत्र कृतौ विवेककलिकायामपि समस्मरद् गुरुमेनम्–

" श्रीदेवप्रभसूरिपादकमलद्वन्द्वद्विरेफोपमा–

धन्यः श्रीनरचन्द्रसूरिजलदोपास्तिक्रियाचातकः ।

आचार्यो मलधारिगच्छसरसीराजीवमूर्तिर्व्यधा–

देतामात्मकृते[1] विवेककलिकां श्रीमन्नरेन्द्रप्रभः ॥ "

वि. सं. १३२४ वर्षे समरादित्यसंक्षेपे [ श्लो. २३ ] भूरिकविकाव्यसंशोधकः प्रद्युम्नसूरिरुत्तराध्ययनवाचनादातृत्वेन विद्यागुरुबुद्ध्याऽस्मै नमस्कारं प्रकटीचकार–

"श्रीमते नरचन्द्राय नमोऽस्तु मलधारिणे। ददे मेऽनुत्तरा येनोत्तराध्ययनवाचना ॥ "

हर्षपुरीय( मलधारि )गच्छगौरवकारिणां सद्गुरूणां पद्धतौ नमनीय–वन्दनीयत्वेन संस्मरणमुपलभ्यते सूरिवर्यस्यैतस्य–

" दंसणनिज्जियससहरसिरीण गुणरयणरोहणगिरीण ।

नमिमो खंतिमहि–महाकिरीण नरचंदसूरीण ॥

लच्छीमयं च विज्जामयं च नीसेसगुणगणमयं च ।

चरणारविंदरेणुं वंदे नरचंदसूरीण ॥ "

वि. सं. १३८९–१४०९ वर्षे राजशेखरसूरिर्निजपूर्वजगुरु–परम्पराविभूषकमेनमित्थं परिचाययति स्म न्यायकन्दली–पञ्जिका–प्रशस्तौ [ श्लो. १४–१९ ]–

" तदीयसिंहासनसार्वभौमसूरीश्वरः श्रीनरचन्द्रनामा ।

सरस्वतीलब्धवरप्रसादस्त्रैविद्यगुप्तिन्धयधीर्बभूव ॥

टिप्पनमनर्घ्यराघवशास्त्रे किल टिप्पनं च कन्दल्याम् ।

सारं ज्योतिषमदृभद् यः प्राकृतदीपिकामपि च ॥ "

वि. सं. १३८०–१४०६ वर्षे वाचनाचार्यसुधाकलशो निजपूर्वजगुरुपरम्परायां संस्मरति स्म सूरिमेनं सङ्गीतोपनिषत्–सारे [ अ. ६, श्लो. ४९ ]–

---

१ 'मलधारिश्रीनरेन्द्रप्रभसूरीणां विवेकपादपो नाम सूक्तसमुच्चयः' इत्युल्लेखानन्तरं विवेककलिकायाम् [ श्लो. ११०; पत्तन–सूच्याम् १, पृ. १८७ ]

२ " सङ्गीतोपनिषद्ग्रन्थं खाष्टाग्नि–शशि[ १३८० ]वत्सरे ।

ऋतु–शून्य–युगेन्दुब्दे[ १४०६ ] तत्सारं चापि निर्ममे ॥ "

–सङ्गीतोपनिषत्सारोद्धारे [ अ. ६, श्लो. ५१ ]

" तद्वंशे नरचन्द्रसूरिरभवत् सच्छास्त्रसङ्गीतभृत् ।
तस्माच्छ्रीतिलकाभिधो गुरुरभूद् यद्दत्तदीक्षस्त्वहम् ॥ "

वि. सं. १४०५ वर्षे राजशेखरसूरिर्मन्त्रिवस्तुपालमातृपक्षगुरुत्वेन सुरत्राणसन्मानितनागपुरीयसाधुपूनडस्य वन्दनीयकुलगुरुत्वेन च सूरिमेनं समसूचयत्–

" इतश्च नागपुरे साधुदेल्हासुतः साधुपूनडः श्रीमोजदीनसुरत्राणपत्नी–बीबी-[चन्द्रकला]प्रतिपन्नबान्धवोऽश्वपति-गजपति–नरपतिमान्यो विजयते । तेन प्रथमं शत्रुञ्जये यात्रा त्रिसप्तत्यधिकद्वादशशत[ १२७३ ]वर्षे बब्बेरपुराद् विहिता । द्वितीया सुरत्राणादेशात् षडशीत्यधिकद्वादशशतसङ्ख्ये[१२८६] वर्षे नागपुरात् कर्तुमारब्धा । × × [ धवलक्कके ] सरस्तीरे स्थितः पूनडः कुलगुरुमलधारिश्री-नरचन्द्रसूरिपादान् ववन्दे । "

मन्त्रीश्वरवस्तुपालस्वर्गारोहणसमयप्रकाशकस्य चैतस्य नरचन्द्रसूरेः स्वर्गगमनं वि. सं. १२८७ वर्षे समजनि, इति राजशेखरसूरिरेवेत्थं निर्दिशति स्म–

" अथ विक्रमादित्यात् १२९८ * वर्षं प्राप्तम् । श्रीवस्तुपालो ज्वररूक्क्लेशेन पीडितः तेजःपालं सपुत्र–पौत्रं स्वपुत्रं च जयन्तसिंहमभाषत– "वत्साः! श्रीनरचन्द्र-सूरिभिर्मलधारिभिः १२८७ वर्षे भाद्रपदवदि १० दिने दिवगमनसमये वयमुक्ताः– 'मन्त्रिन् ! भवतां १२९८ * वर्षे स्वर्गारोहो भविष्यति । ' तेषां च वचांसि न चलन्ति, गीःसिद्धिसम्पन्नत्वात् । "—प्रबन्धकोषे [ वस्तुपालप्रबन्धे ]

## नरेन्द्रप्रभसूरिः ।

अलङ्कारमहोदधिविधातुरस्य स्मरणं प्राप्यतेऽन्यत्र प्राकृतभाषायां सद्गुरुपद्धतौ [ गा. १९–२१ पी. रि. ५, ९८ ] इत्थम्–

---

* किन्तु नैतद् यथास्थितं ज्ञायते, यतो मन्त्रीश्वरवस्तुपालसमकालीनमहाकविबालचन्द्रसूरिणा वस्तुपालपुत्रजयन्तसिंहमनोविनोदाय विरचिते वसन्तविलाससंज्ञके महाकाव्ये (गा. प्रा. ग्रं.) १४ सर्गे, श्लो. ३७ मं. वस्तुपाल–स्वर्गवासो वि. सं. १२९६ वर्षे माघे शु. ५ रविवासरे इत्थं व्यावर्णि–

" वर्षे हर्षनिषण्ण–षण्णवतिके श्रीविक्रमोर्वीभृतः
कालाद् द्वादशसङ्ख्यहायनशतात् मासेऽत्र माघाह्वये ।
पञ्चम्यां च तिथौ दिनादिसमये वारे च भानोस्तवोद्–
वोढुं सद्गतिमस्ति लग्नमसमं तत् स्वर्यतां स्वर्यताम् ॥ "

" पणमह भवभयहरणं पयकमलजयं नरिंदपहगुरुणो ।
जाण तव-चरणरेहा न लंघिया दुट्ठसत्तेहिं ॥ "

वि. सं. १३८९-१४०९ वर्षे राजशेखरसूरिर्नरेन्द्रप्रभसूरिमेतद्ग्रन्थकर्तृत्वेन संस्मरति स्म न्यायकन्दलीपञ्जिका-प्रशस्तौ [श्लो. १६,पी.रि.३,२७२]—

" तस्य गुरोः प्रियशिष्यः प्रभुर्नरेन्द्रप्रभः प्रभावाढ्यः ।
योऽलङ्कारमहोदधिमकरोत् काकुत्स्थकेलिं च ॥ "

इतः सप्तशत्या वर्षेभ्यः प्राक् तादृशं सन्तोषकरं काव्यरहस्यनिर्णायकं कवि-कलासर्वस्वज्ञापकं शास्त्रमुपलभ्यमानं नासीदिति मन्त्रीश्वरवस्तुपालस्याभ्यर्थनया तत्प्र-मोदाय साहित्यतत्त्वज्ञ-कविकलाविद्-गुरुनरचन्द्रसूरिनिर्देशेन नरेन्द्रप्रभसूरिणाऽष्टतरङ्ग-विभक्तोऽयमलङ्कारमहोदधिर्निर्ममे । प्राच्यैरलङ्कारकारैः प्रकाशितानां वचसां सारसङ्ग्रह-रूपेयं कृतिः । स्वानि काव्यालङ्कारसूत्राणि स्वयं विवृतानि इत्यत्र स्पष्टं समसूचि । वि. सं. १२८२ वर्षे निष्पन्नाया अस्य वृत्तेश्च प्रमाणं सार्धचतुष्टयसहस्र-

---

१ कथारत्नसागरे ( श्लो. ८ ), अलङ्कारमहोदधौ च ( श्लो. १६ )—
" अन्येद्युर्भक्तितो मौलौ निधाय करकुड्मलम् । तेन विज्ञपितः श्रीमान् नरचन्द्र(न्द्रो) मुनीश्वरः ॥ "

" केचिद् विस्तरदुस्तरांस्तदितरे संक्षेपदुर्लक्षणाः
सन्त्यन्ये सकलाभिधेयविकलाः क्लेशावसेयाः परे ।
इत्थं काव्यरहस्यनिर्णयबहिर्भूतैः प्रभूतैरपि
ग्रन्थैः श्रोत्रगतैः कदर्थितमिदं कामं मदीयं मनः ॥
तन्मे नातिसविस्तरं कविकलासर्वस्वगर्वोद्धुरं
शास्त्रं ब्रूत किमप्यनन्यसदृशं बोधाय दुर्मेधसाम् ।
इत्यभ्यर्थनया प्रतीतमनसः श्रीवस्तुपालस्य ते
श्रीमन्तो नरचन्द्रसूरिगुरवः साहित्यतत्त्वं जगुः ॥
तेषां निदेशादथ सद्गुरूणां श्रीवस्तुपालस्य मुदे तदेतत् ।
चकार लिप्यक्षरसंनिविष्टं सूरिर्नरेन्द्रप्रभनामधेयः ॥ "
काव्यालङ्कारसूत्राणि स्वानि किञ्चिद् विवृण्महे ।
तन्मनस्तन्मयीकृत्य विभाव्यं कोविदोत्तमैः ॥
नास्ति प्राच्यैरलङ्कारकारैराविष्कृतं न यत् ।
कृतिस्तु तद्वचःसारसङ्ग्रहव्यसनादियम् ॥ "
—अलङ्कारमहोदधि-प्रारम्भे [ श्लो. १७-२१ ]

श्लोकपरिमितमित्यादि महोदधिकारेणात्र स्वयं स्फुटं निरदेशि। रचनास्थानस्य निर्देशस्तु नाकारि, गूर्जरराजधान्यां पत्तनेऽथवा वीरधवलपालिते मन्त्रीश्वरवस्तुपालप्रतिष्ठाबहुले स्थले धवलक्कके रचना सम्भावयितुं शक्यते।

अत्र मूले काव्यप्रयोजन–कारणस्वरूपभेदनिर्णय–शब्दवैचित्र्य–ध्वनिनिर्णय–गुणीभूतव्यङ्ग्यगतार्थवैचित्र्य–दोषव्यावर्णन–गुणालङ्कार–शब्दालङ्कारार्थलङ्कारप्रति–पादकेष्वष्टसु तरङ्गेषु क्रमशः १८, ३९, ६६, ९, २४, ३२, २९, ९९ सङ्ख्याकानि ३०४ प्रमितानि सुललितानि पाठ्यानि पद्यानि विद्यन्ते। प्रतितरङ्गप्रान्ते चैकैकं विशिष्टमुपसंहारकं पद्यं विस्तृते वृत्तेऽन्यानि चानुष्टुप्सु। विवरणे च प्राचीनमहाकविप्रयुक्तानि रसमयानि रम्याणि ९८२ परिमितानि पद्यानि विविधकाव्य–नाटकादिसाहित्यग्रन्थेभ्य उद्धृत्योदाहृतानि साहित्यकलामर्मज्ञानामाकर्षकाणि भवेयुर्येषां मूलस्थलादिज्ञापिका सूची प्राकृतगाथानां च संस्कृतच्छाया भूरिपरिश्रमेणात्रास्माभिः सङ्कलितोपयुक्ता ज्ञास्यते। एवं ग्रन्थकृद्–ग्रन्थादिनामज्ञापिकोपयुक्तानामैतिहासिकनाम्नां सूची प्रदर्शिता, विस्तरेण च विषयानुक्रमोऽपि पृथक् प्रदर्शित इति नेह विशेषेण प्रयत्यते।

'प्रस्तुतग्रन्थकृत्कृतं' काकुत्स्थकेलिसंज्ञकं नाटकं १५००' परिमितं सूचितं गणिकान्तिविजयलिखितायां प्रायः शतत्रयवर्षेभ्यः प्राचीनायां ग्रन्थसूच्याम् [पुरातत्त्वे पु. २, पृ. ४२६] ग्रन्थकर्तुरन्ये ग्रन्थास्तूपरि ज्ञापिताः।

## आचार्यभावदेवसूरिः।

कालिकाचार्यसन्तानीयस्य खण्डिल्लगच्छीयस्य विक्रमीयपञ्चदशशताब्दीप्रारम्भे

---

" ततो गुणानामधिदैवतं परं जयन्त्यमी श्रीनरचन्द्रसूरयः।
यद्वाचि विन्यस्तभराऽथ भारती बिभर्ति भास्वत्सद्मं चिरात्॥
एते काव्यकलारहस्यमतुलं शिष्यप्रकाण्डेषु यद्
व्याचक्षुर्नरचन्द्रसूरिगुरवो वात्सल्यकल्लोलिताः।
तत् किञ्चित् सुधियां चमत्कृतिकृते व्युत्पत्तये चात्मन–
स्तत्पादद्वयपङ्कजालिरलिखत् सूरिर्नरेन्द्रप्रभः॥
" नयन–वसु–सुर १२८२ वर्षे निष्पन्नायाः प्रमाणमेतस्याः।
अजनि सहस्रचतुष्टयमनुष्टुभामुपरि पञ्चशती॥ "

—अलङ्कारमहोदधि–प्रान्ते ( श्लो. ९–११ )

पत्तनादौ पार्श्वनाथचरितमहाकाव्य(वि. सं. १३(४)१२)–कालिकाचार्यकथा(प्रा.)–[1]साधुदिनचर्यादिकर्तुरस्य विदुषः सङ्क्षिप्तोऽप्युपयोगी काव्यालङ्कारसारोऽप्यत्रालङ्कार-महोदधिपरिशिष्टे प्रकाशितो जिज्ञासूनां प्रमोदावहः सम्पत्स्यते ।

## जैनसिद्धान्ते काव्यालङ्काराः ।

गद्य-पद्यमयप्राकृतप्रचुरेषु विशालेषु प्राचीनजैनसिद्धान्तसूत्रग्रन्थेषूपमादिविविधालङ्काराणामुपयोगः कृतो ज्ञायते । अनुयोगद्वारसूत्रे सप्तस्वराष्टवचनविभक्ति–नव-काव्यरसादिनिर्देशो वर्तते । तत्रैव च गेयगीतसूत्रनिबन्धविशेषणेषु–

"[3]निद्दोसं सारमंतं च हेउजुत्तमलंकियं। उवणीयं सोवयारं च मिअं महुरमेव य ॥"

[ —अनुयोगद्वारसूत्रे आ. समिति, ऋ. के. प्र. ]

इत्यादावलङ्कृतमपि समसूचि । विक्रमीयाष्टमशताब्दीतः प्राचीनैर्जिनदासगणिमहत्तर–हरिभद्रसूरिप्रभृतिभिस्तस्य चूर्णि–व्याख्याकारैस्तत्पदम् 'कव्वालंकारेहिं जुत्तं अलंकियं' [ काव्यालङ्कारैर्युक्तम् अलङ्कृतम् ] इति, मलधारिहेमचन्द्रसूरिणा च–'उपमाऽऽद्यलङ्कारयुक्तम्' इति च व्याख्यायि ।

प्राचीनैः पुष्पदन्त(दि.)प्रभृतिकविभिर्निजकवित्वे रुद्रटादीनां काव्यालङ्कारिकाणां स्मरणमकारि । वि. सं. ११६७ वर्षे स्वर्गभाग् जिनवल्लभगणी रुद्रटोद्भट–दण्डि–वामन–भामहाद्यलङ्कारेषु निष्णात आसीदिति सुमतिगणिवचो गणधरसार्धशतक-बृहद्वृत्तितो मया समसूचि 'अपभ्रंशकाव्यत्रयी' (गा. प्रा. ग्रं. ३७)–भूमिकायाम् पृ. २०

## काव्यालङ्कारशास्त्रे जैनविदुषां प्रयत्नाः ।

अलङ्कारदर्पणकारः । यस्य प्रकटं नाम न परिज्ञातम्, तथापि तस्य प्राचीनं

---

१ " आसीत् स्वामिसुधर्मसन्ततिभवो देवेन्द्रवन्द्यक्रमः
श्रीमान् कालिकसूरिरद्भुतगुणग्रामाभिरामः पुरा ।
जीयादेष तदन्वये जिनपति–प्रासाद–तुङ्गाचल–
भ्राजिष्णुर्मुनिरत्नगौरवनिधिः खण्डिल्लगच्छाम्बुधिः ॥ * *
" तेषां विनेयविनयी बहु भावदेवसूरिः प्रसन्नजिनदेवगुरुप्रसादात् ।
श्रीपत्तनाख्यनगरे रवि–विश्व(१४१२)वर्षे पार्श्वप्रभोश्चरितरत्नमिदं ततान ॥ "
—पार्श्वनाथचरितमहाकाव्य–प्रशस्तौ ( ४, १४ य. वि. ग्रं. )

२ " सिरिकालिकसूरीणं वंसुब्भवभावदेवसूरीहिं ।
संकलिया दिणचरिया एसा थोवमइजण(ई)जोग्गा ॥ "
—यतिदिनचर्या–प्रान्ते ( गा. १५४ )

३ " निर्दोषं सारवच्च हेतुयुक्तम् अलङ्कृतम् । उपनीतं सोपचारं च मितं मधुरमेव च ॥ "

प्राकृतभाषामयं संक्षिप्तमप्युपयोगि 'अलङ्कारदर्पणम्' विज्ञायते, यदस्माभिर्जेसलमेरुदुर्गभाण्डागारीयग्रन्थसूच्याम् ( गा. ओ. सि. २१, पृ. २४, अप्रसिद्ध० पृ. ६२ ) सूचितम् ।

वाग्भटः (१) । गूर्जरेश्वरसिद्धराजजयसिंहसमकालीनस्य तत्प्रशंसकस्य सोमसूनोरस्य महामतिमहामात्यस्य कृतिः 'वाग्भटालङ्कार' नाम्ना विख्यातिं गता सिंहदेवगणिविहितया व्याख्यया साकं प्रकाशिता ( नि. सा. काव्यमालायाम् ),जिनवर्धनसूरि(ख.)–क्षेमहंसगणि--ज्ञानप्रमोदगणि(ख.)–वादिराज( दि )–राजहंसोपाध्याय–समयसुन्दरादिर्जैनविबुधैरितरैरपि च–कृष्णशर्म–गणेशादिभिस्तद्व्याख्या विरचिता ज्ञायन्ते ।

## काव्यानुशासनम् (१)

हेमचन्द्राचार्यः । सिद्धहेमचन्द्रशब्दानुशासनादिप्रणेतृत्वेन सुप्रसिद्धस्य गूर्जरेश्वरसिद्धराजजयसिंहमहाराजसन्मानितस्य परमार्हतकुमारपालभूपालधर्माचार्यस्यास्यालङ्कारचूडामणिवृत्ति–विवेकादिविभूषितं स्वोपज्ञमष्टाध्यायमयं काव्यानुशासनं सुप्रख्यातम् ( नि. सा., महावीरजैनविद्यालयतश्च )

## ( २ )

वाग्भटः (२) । प्रायो विक्रमीयचतुर्दशशताब्द्यां विद्यमानस्य छन्दोऽनुशासन–ऋषभदेवचरितादिकर्तुर्महाकवेः मेदपाटादिप्रसिद्धनेमिकुमारनन्दनस्य राहडलघुबन्धोरस्य 'अलङ्कारतिलक' व्याख्याऽलङ्कृतं काव्यानुशासनं निर्णयसागरीयकाव्यमालायाम् (४३) प्रसिद्धम् ।

## कविशिक्षा (१)

जयमङ्गलाचार्यः । अद्यावधि प्रसिद्धिं नाधिगता प्रस्तुतकविकृता समीचीना कविशिक्षा स्तम्भतीर्थ( खंभात )स्थाने श्रीशान्तिनाथीयप्राचीनजैनभाण्डागारे ताडपत्रीयपुस्तिकायामुपलभ्यतेऽस्या आद्यन्तांशोल्लेखः पिटर्सनरिपोर्ट–प्रथमपुस्तके ( पृ. ७८–८० ) समजनि । गूर्जरेश्वरजयसिंहस्तुत्युदाहरणाविना विक्रमीयद्वादशशताब्दीसन्निहितः कविसमयो विज्ञायते ।

## ( २ )

अमरचन्द्रसूरिः । वायटगच्छीय–विवेकविलासादिविधातृजिनदत्तसूरिशिष्येणानेन मन्त्रीश्वरवस्तुपाल–सुकृतसङ्कीर्तनकारकविरत्नारिसिंहात् कवितारहस्यं विज्ञाय

तत्कृत-निजकृतसूत्रा काव्यकल्पलताऽऽख्या कविशिक्षा प्रतानचतुष्के स्तबकैरेकविंशत्या कल्पलता—पल्लव—विवेक—मञ्जरी—परिमलादिना च विभूषिता त्वरितकविताकामुकानां चेतोहराऽकारि । सं. १९४२ वर्षे काश्यां वृत्तिसहिता प्रकाशिता । प्रागस्या महाराष्ट्रीयभाषान्तरमपीतो राज्यात् प्रकाशितम् । गूर्जरेश्वरवीसलदेवराजसभा-कविसभारञ्जकेन समस्यापूरकशीघ्रकविनाऽनेनालङ्कारप्रबोधोऽप्यकारि । येन बालभारत—पद्मानन्द( जिनेन्द्रचरित )महाकाव्य—स्यादिशब्दसमुच्चय—छन्दोरत्नावल्यादीनि नैकग्रन्थरत्नानि निष्पादितानि ।

वि. सं. १६६९ वर्षेऽहम्मदावादे शुभविजयेन विदुषा एतत्काव्यकल्पलतावृत्तेरुपरि मकरन्दोऽपि विस्तारितः । यस्य सूचनमस्माभिः जेसलमेरुभा. ग्रन्थसूच्याम् ( गा. प्रा. ग्रं. २१, पृ. ६३, पृ. ९७ ) अकारि ।

( ३ )

आचार्यविनयचन्द्रः । बप्पभट्टिगुरुवागनुसारिणी रविप्रभगणीश्वरगदितशिक्षाशतशिक्षिका विनयाङ्काऽस्य कविशिक्षा विक्रमीयत्रयोदशशताब्दीप्रान्तसम्भवा कृतिरस्माभिः पत्तनस्थप्राच्यजैनभाण्डागारीयग्रन्थसूच्याम् ( गा. प्रा. ग्रं. ७६, पृ. ४६—९० ) सूचिताऽद्यावधि प्रसिद्धिं न प्राप्ता ।

मन्त्रिमण्डनः । विक्रमीयपञ्चदशशताब्द्यां विद्यमानः श्रीमालवंशीयोऽयं ग्रन्थकारो मालवदेशीयमण्डपदुर्गवासी आलम्मसाहिराजप्रसादभाग् मन्त्री । काव्यमण्डन— चम्पूमण्डन—शृङ्गारमण्डन—सङ्गीतमण्डन—सारस्वतमण्डन—कादम्बरीमण्डन—(दर्पण)—चन्द्रविजयादिकर्त्राऽनेन पञ्चपरिच्छेदात्मकोऽलङ्कारमण्डनग्रन्थोऽपि व्यरचि । यद्बन्धुना धनदराजेन शृङ्गार—नीति—वैराग्यधनदशतकत्रयं व्यधायि । कविमहेश्वरेण काव्यमनोहरेऽस्य मण्डनस्य प्रशस्तं चरितं रचितम् ।

जिन( ?अजित)सेनः—यत्कृतः कविशिक्षाप्ररूपण—चित्रा(शब्दा)लङ्कारप्ररूपण—यमकादिवचनार्थालङ्कारविवरण—रसादिनिरूपणसंज्ञकपरिच्छेदपञ्चकविभक्तोऽलङ्कारचिन्तामणिरुपलभ्यते* ।

* सोलापुरनिवासि—दोसी सखाराम नेमिचन्द्रद्वारा कोल्हापुरस्थजैनेन्द्रमुद्रणालयात् १८२९ शकाब्देषु प्रकाशितः ।

रुद्रटीयकाव्यालङ्कारे ।

( १ )

नमिसाधुः—वि. सं. ११२९ वर्षे एतत्कृतं रुद्रटीयकाव्यालङ्कारस्य टिप्पनं सुप्रसिद्धम् ( नि. सा. काव्यमालायाम् )

( २ )

आशाधरः । सपादलक्षदेशान्निर्गत्य मालवमण्डले धारायामुषित्वा विद्यां समुपार्ज्य जैतुगिदेवराज्ये वि. सं. १२९६—१३०० वर्षेषु नलकच्छपुरे सटीकधर्मामृत-( सागारानगार )प्रभृतिविविधग्रन्थकर्त्राऽनेन विदुषा रुद्रटीयकाव्यालङ्कारस्य निबन्धनं विहितमासीत्[1] ।

काव्यादर्शे ।

आचार्यश्रीवादिसिंहनामाङ्कितेन त्रिभुवनचन्द्रेण दण्डिनः काव्यालङ्कार-काव्यादर्शस्य टीका विवेचिता सहस्रद्वयश्लोकपरिमिता वङ्गलिप्यामुपलभ्यते (सं.१७९८ वर्षे लि. )

काव्यप्रकाशे ।

( १ )

माणिक्यचन्द्रसूरिः । सुप्रसिद्धस्य मम्मटीयकाव्यप्रकाशस्य सङ्केतसंज्ञिका व्याख्याऽनेन विदुषा वि. सं. १२४(?)६ वर्षे विरचिताऽऽसीद् या पुण्यपत्तने आनन्दाश्रमसं. ग्रन्थावल्याम् [ ८९ ], मैसूरराजकीयसं. ग्रन्थमालायां (६०) च प्रसिद्धिं नीता ।

( २ )

गुणरत्नगणी । खरतरगच्छाधीशश्रीजिनमाणिक्यसूरिशिष्यविनयसमुद्रगणि-शिष्येणानेन वाचकविदुषा काव्यप्रकाशस्य दशसहस्रश्लोकपरिमिता सारदीपिका-संज्ञिका टीका विविधा टीका विलोक्य विरचिता, सा चात्र प्राच्यविद्यामन्दिरे [ सं. १७४२ वर्षीय ]प्राचीन—नवीनप्रतिद्वये विद्यते ।

( ३ )

उ. भानुचन्द्र—सिद्धिचन्द्रौ । अकब्बरपातशाहिना महोपाध्याय—'खुष्फहम'

---

१ " रौद्रटस्य व्यधात् काव्यालङ्कारस्य निबन्धनम् । "
—सागारधर्मामृते ( मा. दि. ग्रं. २, प्रशस्तौ श्लो. १४ )

प्रभृतिविरुदसन्मानिताभ्यामनेकोपयुक्तग्रन्थकर्तृव्यकारकाभ्यां कादम्बरी-वासवदत्ता-वसन्तराजशकुनशास्त्र-विवेकविलास-शोभनस्तुति-जिनशतक-सप्तस्मरणादिविविधग्रन्थ-व्याख्यातृभ्यामेताभ्यां काव्यप्रकाश-विवृति( दूषणखण्डन )प्रणयनमपि चक्रे ।

विशेषार्थिना सिद्धिचन्द्ररचितं श्रीयुतमोहनलालदेशाईसम्पादितं सिंघीजैन-ग्रन्थमाला[ ग्रं. १९ ]द्वारा प्रकाशितं भानुचन्द्रगणिचरितं द्रष्टव्यम् ।

( ४ )

विक्रमीयाष्टादशशताब्द्याः प्रारम्भे सुप्रसिद्धन्यायविशारदोपाध्याययशोविज-यादिकृताऽपि वृत्तिः श्रूयते ।

सरस्वतीकण्ठाभरणे ।

आजडः । सुप्रसिद्धभोजराजकृतस्य सरस्वतीकण्ठाभरणस्य विषमपदोपनिबन्ध-रूपः पदप्रकाशो भाण्डशालिपार्श्वचन्द्रसूनुनाऽनेन विहितः पत्तनस्थप्राच्यजैन-भाण्डागारीयग्रन्थसूच्यां (पृ. ३७-३९) सूचितोऽस्माभिरद्यावधि प्रसिद्धिं नाधिगतः ।

विदग्धमुखमण्डने ।

अवचूर्णि(रि)कारस्य नाम न परिज्ञातम् , जिनेन्द्रमङ्गलादि दर्शितमन्यत्र जिन-प्रभसूरिरचिताऽवचूर्णिः सूच्यते ( वेबर, बों. ब्रां. री. ए. सो. पु. सूचिपत्रे भा. १, पृ. १९६ ) 'जिनप्रभसूरि अने सुल्तान महम्मद' संज्ञके ग्रन्थे मया तत्परिचयोऽकारि ।

शिवचन्द्र( स. सं. १६६९ )-विनयरत्न-विनयसागर( सं. १६९९ )-प्रभृतिभी रचिता अप्येतद्व्याख्याः श्रूयन्ते ।

अलङ्कारमहोदधि-पुस्तिकात्रय-परिचयः ।

१ अ.

प्रकाशितस्य प्रस्तुतस्यालङ्कारमहोदधेः प्रतिः (अ.), अहम्मदावादनगरे 'डेहला' संज्ञकोपाश्रयस्थजैनग्रन्थभाण्डागारे स्थिता ३९ पत्रात्मिका, १०½×४½ मनोहरसूक्ष्मवर्ण-मयी नागरीलिपिलिखिता प्रायः पञ्चशतवर्षप्राचीना परिपूर्णा प्रायःशुद्धा स्व.केशवलाल प्रे. मोदी बी. ए. एल्एल्. बी. महाशयद्वारा ता. १४-९-३० वर्षे स्वल्पसम-यार्थं प्राप्ताऽऽसीत्, ततः 'फोटोस्टेट' राजकीयसाधनद्वारा शीघ्रं कारिता प्रति-कृतिरत्र विशेषेण समुपयुक्ता समजनि, पाठ-भेद-प्रदर्शनेऽत्र सा अ. संज्ञया निर-देशि । एतस्याः स्वरूपपरिज्ञानाय प्रान्तपत्रस्य प्रतिकृतिरत्र प्रारम्भे प्रदर्शिता ।

जैनश्वे. कॉ. प्र. जैनग्रन्थावल्याम् ३१४ तमे पृष्ठे 'अर्थालङ्कारवर्णन' नाम्नाऽसूचि सैषैव ज्ञायते।

२ प.

पत्तने गूर्जरदेशीयप्राचीनराजधान्यामेतद्राज्यान्तर्गते नगरे 'फोफलियावाडा आगली शेरी' संज्ञके स्थले तपागच्छीयग्रन्थभाण्डागारे स्थिता २१ (१७+४) पत्रात्मिका अमरकविकृतसावचूरिकस्यादिशब्दसमुच्चयसहिता द्वितीया प्रतिः ता. २२-३-३० वर्षे प्रवर्तककान्तिविजयमुनिराजद्वारा कियत्कालं प्राप्ताऽऽसीत्, यदाऽहं वटपद्रराज्यपुस्तकालयपरिषत्प्रदर्शनप्रसङ्गे तत्र गत आसम्। '१०½×४½' तत्पुस्तिकायां मध्ये मूलम्, परितश्च विभागचतुष्टये सूक्ष्माक्षरलिप्यां व्याख्या वर्ततेऽन्तिमद्वादशपत्रद्वयस्य चन्यूनता। सं. १४९३ वर्षे लिखिता चैषा सूचिता सहचरे ग्रन्थे। पाठान्तरप्रदर्शनेऽत्र प. सङ्केतेनोपलक्षिता। 'फोटोस्टेट' राजकीयसाधनत एतस्या द्विगुणा बृहती( एन्लार्ज ) कारिता प्रतिकृतिः प्राच्यविद्यामन्दिरेऽत्र संस्थापिता। एतस्याः स्वरूपप्रबोधो भविष्यत्यत्र प्रारम्भपत्रस्य प्रतिकृतेर्दर्शनेन।

३ व.

वटपद्रीयेऽत्र प्राच्यविद्यामन्दिरे प्रागेव सङ्गृहीता ६२ पत्रात्मिकाऽपूर्णाऽशुद्धा च प्रतिरत्र व. संज्ञयाऽसूचि। एषा प्रतिः प्राक् सम्पादनार्थं मि. ए. पी. बानर्जीशास्त्रिमहाशयायेतः ता. १-९-२९ वर्षे प्रेषिताऽऽसीत्, किन्तु तस्मादशुद्धिबहुलादेकस्मादेवादर्शात् तत्सम्पादनं दुःशकं विचार्य तेन पश्चात् प्रेषिता ता. २४-२-२८ वर्षे ततः प्रत्यागता। तदनन्तरं प्रयत्नवता मया गवेषणातः पूर्वोक्तं प्रतिद्वयं सम्प्राप्तम्।

एवं प्राचीनादर्शपुस्तकत्रयाधारेण भूरिपरिश्रमेण पाठान्तरादिभिः परिष्कृत्य यथामति यथाशक्यं सावधानतयाऽस्य महतो ग्रन्थस्य सम्पादनमकारि।

आचार्यमाणवदेवीयकाव्यालङ्कारसारसङ्ग्रहस्य प्रतित्रयम्।

१ प. संज्ञिता पत्रत्रयात्मिका प्राचीना प्रतिरितिहाससंशोधकश्रीविजयेन्द्रसूरिणोपदीकृताऽत्र प्राच्यविद्यामन्दिरे १३७६६ क्रमाङ्के विद्यते।

२ अ. संज्ञिता पत्रत्रयात्मिका प्रतिः सं. १९९२ वर्षेऽहम्मदावादे नूतना लेखिताऽत्रत्यजैनज्ञानमन्दिरात् प्रवर्तककान्तिविजयमुनिराजीयशास्त्रसङ्ग्रहात् ( क्र. ४८ ) प्राप्ताऽऽसीद्। एषा प्रायशः पूर्वामनुकरोति।

३ का. संज्ञोपलक्षिता कान्तिविजयमुनिराजीयपूर्वोक्तशास्त्रसङ्ग्रहात् ( क्र. ११४९ ) पञ्चपत्रात्मिकाऽपूर्णाऽष्टमाध्यायप्रारम्भं यावन्नूतना लेखिताऽपि प्रायः शुद्धाऽधिगताऽऽसीत् ।

एवं शुद्धाशुद्धादर्शपुस्तकत्रयाधारेण पाठान्तरादिपरिष्कारेणैतत् प्रयोजितं परिशिष्टं शिष्टानां परितुष्टिकरं प्रभविष्यतीत्याशासे ।

मन्त्रीश्वरवस्तुपालस्य प्रशस्तित्रयम् ।

अत्र चतुर्थे परिशिष्टे प्रयोजिता मलधारिनरचन्द्रसूरिकृता २६ पद्यमयी मन्त्रीश्वरवस्तुपालस्य प्रशस्तिः, तथा पञ्चम–षष्ठपरिशिष्टयोः स्थापिते १०४+३७ पद्यपरिमिते द्वे प्रशस्ती प्रस्तुतालङ्कारमहोदधिविधातुर्नरेन्द्रप्रभसूरेः कृती एतासामावश्यकेतिहासप्रकाशिकानां तिसृणामपि प्रशस्तीनां प्रतिस्तु अहम्मदावादनगरे ' डेहला ' संज्ञकोपाश्रयस्थितजैनभाण्डागारे ज्ञायते, ततो लेखिता प्रतिकृतिरस्मत्प्रार्थनया पुण्यप्रज्ञमुनिराजपुण्यविजयेन पत्तनात् सम्राहकृते प्रेषिताऽऽसीत्, तदाधारेणात्र सम्पादन–प्रकाशनं विशेषप्रकाशकरं संजज्ञे ।

अत्र कार्ये पुस्तिकादिप्रदानेन साहाय्यकर्तॄणां तेषां सर्वेषामप्युपकारमत्र प्रकटं संस्मरामि । किञ्च प्रत्यन्तरपाठसम्मेलने पद्यादिसूच्यादौ चात्रान्यकार्यव्यापृतेनापि श्रीमदनन्तज्योतिषिकसुपुत्रेण येन प्रासङ्गिकं साहाय्यमकारि स श्रीमहादेवः स्मरणार्हः ।

एवं विनाऽन्यविशेषसाहाय्यं भूरिपरिश्रमेण सावधानतया सम्पादितेऽगाधे दुस्तरेऽस्मिन् नाम्ना स्वरूपेणापि च महोदधौ मदीयमतिमान्द्येन प्रमादाद् दृष्टिदोषाद् वा याः काश्चन स्खलनाः स्थिता जाता वा भवेयुस्ताः प्रकृतिकृपालवः परिश्रमवेदिनः शास्त्राम्नायविदः सज्जनाः संशोधयिष्यन्ति, संसूचयिष्यन्ति च माम् । अधिकारिणश्च पाठ्यपुस्तकत्वेन पठन–पाठनादौ प्रथयिष्यन्ति, संस्थापयिष्यन्ति च समुचितासु संस्थासु गूर्जरेश्वरमन्त्रीश्वरप्रेरणानिष्पन्नं गूर्जरेश्वरमन्त्रीश्वरप्रोत्साहनप्रकाशितं च गूर्जरगौरवकरं सुदुर्लभमुपयुक्तमिमं ग्रन्थमित्याशास्ते–

श्रीमन्महाराजप्रतापसिंह–
गायकवाड–राज्यारोहणपुण्याब्दे [४]
ता. ७–२–४२ वटपद्रे

विद्वदनुचरः
गान्धीत्युपाह्वभगवान्श्रेष्ठितनुजः
लालचन्द्रः ।

जैनश्वे. कॉ. प्र. जैनग्रन्थावल्याम् ३१४ तमे पृष्ठे 'अर्थालङ्कारवर्णन' नाम्नाऽसूचि सैपैव ज्ञायते ।

२ प.

पत्तने गूर्जरदेशीयप्राचीनराजधान्यामेतद्राज्यान्तर्गते नगरे 'फोफलियावाडा आगली शेरी' संज्ञके स्थले तपागच्छीयग्रन्थभाण्डागारे स्थिता २१ (१७+४) पत्रात्मिका अमरकविकृतसावचूरिकस्यादिशब्दसमुच्चयसहिता द्वितीया प्रतिः ता. २२-३-३० वर्षे प्रवर्तककान्तिविजयमुनिराजद्वारा कियत्कालं प्राप्ताऽऽसीत्, यदाऽहं वटपद्रराज्यपुस्तकालयपरिपत्प्रदर्शनप्रसङ्गे तत्र गत आसम्। '१०½×४½' तत्पुस्तिकायां मध्ये मूलम्, परितश्च विभागचतुष्टये सूक्ष्माक्षरलिप्यां व्याख्या वर्ततेऽन्तिमद्वादशपत्रद्वयस्य चन्यूनता। सं. १४९३ वर्षे लिखिता चैषा सूचिता सहचरे ग्रन्थे। पाठान्तरप्रदर्शनेऽत्र प. सङ्केतेनोपलक्षिता । 'फोटोस्टेट' राजकीयसाधनत एतस्या द्विगुणा बृहती( एन्लार्ज ) कारिता प्रतिकृतिः प्राच्यविद्यामन्दिरेऽत्र संस्थापिता । एतस्याः स्वरूपप्रबोधो भविष्यत्यत्र प्रारम्भपत्रस्य प्रतिकृतेर्दर्शनेन।

३ व.

वटपद्रीयेऽत्र प्राच्यविद्यामन्दिरे प्रागेव सङ्गृहीता ६२ पत्रात्मिकाऽपूर्णाऽशुद्धा च प्रतिरत्र व. संज्ञयाऽसूचि। एषा प्रतिः प्राक् सम्पादनार्थं मि. ए. पी. बानर्जीशास्त्रि-महाशयायेतः ता. १-९-२९ वर्षे प्रेषिताऽऽसीत्, किन्तु तस्मादशुद्धिबहुलादेकस्मा-देवादर्शात् तत्सम्पादनं दुःशकं विचार्य तेन पश्चात् प्रेषिता ता. २४-२-२८ वर्षे ततः प्रत्यागता । तदनन्तरं प्रयत्नवता मया गवेषणातः पूर्वोक्तं प्रतिद्वयं सम्प्राप्तम् ।

एवं प्राचीनादर्शपुस्तकत्रयाधारेण भूरिपरिश्रमेण पाठान्तरादिभिः परिष्कृत्य यथामति यथाशक्यं सावधानतयाऽस्य महतो ग्रन्थस्य सम्पादनमकारि ।

आचार्यभावदेवीयकाव्यालङ्कारसारसङ्ग्रहस्य प्रतित्रयम् ।

१ प. संज्ञिता पत्रत्रयात्मिका प्राचीना प्रतिरितिहाससंशोधकश्रीविजयेन्द्र-सूरिणोपदीकृताऽत्र प्राच्यविद्यामन्दिरे १३७६६ क्रमाङ्के विद्यते ।

२ अ. संज्ञिता पत्रत्रयात्मिका प्रतिः सं. १९९३ वर्षेऽहम्मदावादे नूतना लेखिताऽत्रत्यजैनज्ञानमन्दिरात् प्रवर्तककान्तिविजयमुनिराजीयशास्त्रसङ्ग्रहात् (क्र. ४८) प्राप्ताऽऽसीद् । एषा प्रायशः पूर्वामनुकरोति ।

३ का. संज्ञोपलक्षिता कान्तिविजयमुनिराजीयपूर्वोक्तशास्त्रसङ्ग्रहात् ( क्र. ११४९ ) पञ्चपत्रात्मिकाऽपूर्णाऽष्टमाध्यायप्रारम्भं यावन्नूतना लेखिताऽपि प्रायः शुद्धाऽधिगताऽऽसीत् ।

एवं शुद्धाशुद्धादर्शपुस्तकत्रयाधारेण पाठान्तरादिपरिष्कारेणैतत् प्रयोजितं परिशिष्टं शिष्टानां परितुष्टिकरं प्रभविष्यतीत्याशासे ।

मन्त्रीश्वरवस्तुपालस्य प्रशस्तित्रयम् ।

अत्र चतुर्थे परिशिष्टे प्रयोजिता मलधारिनरचन्द्रसूरिकृता २६ पद्यमयी मन्त्रीश्वरवस्तुपालस्य प्रशस्तिः, तथा पञ्चम-षष्ठपरिशिष्टयोः स्थापिते १०४+३७ पद्यपरिमिते द्वे प्रशस्ती प्रस्तुतालङ्कारमहोदधिविधातुर्नरेन्द्रप्रभसूरेः कृती एतासामावश्यकेतिहासप्रकाशिकानां तिसृणामपि प्रशस्तीनां प्रतिस्तु अहम्मदावादनगरे ' डेहला ' संज्ञकोपाश्रयस्थितजैनभाण्डागारे ज्ञायते, ततो लेखिता प्रतिकृतिरस्मत्प्रार्थनया पुण्यप्रज्ञमुनिराजपुण्यविजयेन पत्तनात् सम्राहकृते प्रेषिताऽऽसीत्, तदाधारेणात्र सम्पादन-प्रकाशनं विशेषप्रकाशकरं संजज्ञे ।

अत्र कार्ये पुस्तिकादिप्रदानेन साहाय्यकर्तॄणां तेषां सर्वेषामप्युपकारमत्र प्रकटं संस्मरामि । किञ्च प्रत्यन्तरपाठसम्मेलने पद्यादिसूच्यादौ चात्रान्यकार्यव्यापृतेनापि श्रीमदनन्तज्योतिषिकसुपुत्रेण येन प्रासङ्गिकं साहाय्यमकारि स श्रीमहादेवः स्मरणार्हः ।

एवं विनाऽन्यविशेषसाहाय्यं भूरिपरिश्रमेण सावधानतया सम्पादितेऽगाधे दुस्तरेऽस्मिन् नाम्ना स्वरूपेणापि च महोदधौ मदीयमतिमान्द्येन प्रमादाद् दृष्टिदोषाद् वा याः काश्चन स्खलनाः स्थिता जाता वा भवेयुस्ताः प्रकृतिकृपालवः परिश्रमवेदिनः शास्त्राम्नायविदः सज्जनाः संशोधयिष्यन्ति, संसूचयिष्यन्ति च माम् । अधिकारिणश्च पाठ्यपुस्तकत्वेन पठन-पाठनादौ प्रथयिष्यन्ति, संस्थापयिष्यन्ति च समुचितासु संस्थासु गूर्जरेश्वरमन्त्रीश्वरप्रेरणानिष्पन्नं गूर्जरेश्वरमन्त्रीश्वरप्रोत्साहनप्रकाशितं च गूर्जरगौरवकरं सुदुर्लभमुपयुक्तमिमं ग्रन्थमित्याशास्ते-

श्रीमन्महाराजप्रतापसिंह-<br>गायकवाड-राज्यारोहणपुण्याहे [४]<br>ता. ७-२-४२ वटपद्रे

विद्वदनुचरः<br>गान्धीत्युपाह्वभगवानूभेष्ठितनुजः<br>लालचन्द्रः ।

# विषयानुक्रमः ।

## तृतीयस्तरङ्गो ध्वनि–निर्णयः

## ४६–१२२

षष्ठस्तरङ्गो गुणालङ्कारविवेकः ।

पृ. १८७-२०३



नरेन्द्रप्रभसूरिनिर्मितः स्वोपज्ञविवरणसमेतः

# अलङ्कारमहोदधिः ।



आनन्दैकपदं यस्य प्रकाशो यत् प्रकाशवत् ।
चकास्ति विश्वतस्तस्मै परस्मै महसे नमः ॥ १ ॥

जयन्तु कल्पद्रुमजैत्रविक्रमा गुरुक्रमाम्भोरुहरेणवश्चिरम् ।
इहैव मर्त्यव्यतिवर्त्ति वैबुधं पदं तदारोप्यत मादृशोऽपि यैः ॥२॥

नन्दन्तु सौजन्यसुधापयोधयः किमप्यपूर्वस्थितयो महाशयाः ।
गुणौघरत्नानि तरन्ति येष्वहो ! निर्नाम मज्जन्ति तु दोषदारवः ॥३॥

गुणावदातेष्वपि दोषदृष्टयो न निन्दनीयाः खलु ते खला अपि ।
दूरेण दोषानपहाय यद्भयान्मुहुर्गुणेष्वेव जनः प्रवर्त्तते ॥४॥

यदि वा दुर्जनः कश्चिन्नास्त्येव विमलात्मनाम् ।
ज्वलितोऽपि दहत्यग्निर्न नाम क्वचिदभ्रकम् ॥ ५ ॥

शिष्यो हर्षपुरीयगच्छसवितुः श्रीमन्मुनीन्द्रप्रभो-
र्देवानन्दमुनीन्द्रपाणिकमलोन्मीलत्प्रतिष्ठोदयः ।
श्रीदेवप्रभसूरिवाङ्मयमहाभैषज्यशाम्यन्मन-
स्तन्द्रः श्रीनरचन्द्रसूरिरवनीचन्द्रश्चिरं नन्दतात् ॥ ६ ॥

---

१ व. ॐ नमः सरस्वत्यै आ० । २ प. रहसे । ३ प. तदोप्यत । ४ प. निर्नान ।
५ अ. ०नींदुप्रभो दे० । ६ व. ०प्रभुसू० ।

१

[1]पीयूषबन्धुरतरास्तरसा निहत्य हालाहलं समदवादमयं बुधानाम् ।
चौलुक्यभूमिपतिसंसदि यस्य वाचः केषां न चेतसि मुदं मदयाम्बभूवुः? ॥७

जाने सम्प्रति प्रोस्तनीफलभराहारैकवैरङ्गिका
मर्त्यास्तेऽपि[2] सुधान्धसो नवसुधागण्डूषविद्वेषिणः ।
यत्काव्योक्तिरसोर्मिनिर्मितमुदस्तिष्ठन्ति सुष्ठूच्छ्रित-
प्रेमाणः सुरभिप्रभञ्जनपरीभोगे च कुम्भीनसाः ॥८॥[3]

इतश्च—

प्राग्वाटान्वयमण्डनं समजनि श्रीचण्डपो मण्डपः
श्रीविश्रामकृते तदीयतनयश्चण्डप्रसादाभिधः ।
सोमस्तत्प्रभवोऽभवत् कुवलयानन्दाय तस्यात्मभू-
राशाराज इति श्रुतः श्रुतरहस्तत्त्वाववोधे बुधः ।.९॥

तज्जन्मा वस्तुपालः सचिवपतिरसौ सन्ततं धर्म्मकर्म्मा-
ऽलङ्कर्मीणैकबुद्धिर्विबुधजनचमत्कारिचारित्रपात्रम् ।
प्राप्तः सङ्घाधिपत्वं दुरितविजयिनीं सूत्रयन् सङ्घयात्रां
धर्मस्यौज्ज्वल्यमाधात् कलिसमयमयं कालिमानं विलुप्य ॥१०॥

यस्याग्रजो मल्लदेव उतथ्य इव वाक्पतेः ।
उपेन्द्र इव चेन्द्रस्य तेजःपालोऽनुजः पुनः ॥ ११ ॥

त्यागाः कुड्मलयन्ति कल्पविटपित्यागक्रियापाटवं
कामं काव्यकलाऽपि कोमलयति द्वैपायनीयं वचः ।
बुद्धिर्धिक्कुरुते च यस्य धिषणां चाणक्यचिन्तामणेः
सोऽयं कस्य न वस्तुपालसचिवोत्तंसः प्रशंसास्पदम् ? ॥ १२ ॥

प्रासादान् दत्तवादानखिलशिखरिभिः पुण्यपालीं प्रपालीं
वापीः साम्भोजतापीविभवविजयिनीः स्तुत्यरूपांश्च कूपान् ।
आरामांश्चाभिरामान् कमलवलयितक्रोडभागांस्तडागान्
स्थाने स्थाने वितन्वन्नकृत सुकृतभूर्यः पवित्रां धरित्रीम् ॥ १३ ॥

---

१ प० जाने० । २ प. ०र्मिश्रर्मि० । ३ प. पीयूष० । ४ व. ०हर० । ५ अ. सर्वक० । ६ अ. द्वीपा० । ७ व. ०रिपुःपु० ।

यः कश्चित् पांशु[1]पूरं गणयति कणशः स्वर्धुनीसैकतानां
यः पाथोनाथपाथः कलयति चुलुकैरप्रपञ्चैरुदञ्चत् ।
यो वा हस्तैः समस्तं गगनतलगतं मानमादातुमीष्टे
सङ्ख्यानं कीर्त्तनानां स खलु यदि विभुर्वस्तुपालस्य कर्तुम् ॥१४॥

केचित् कांचि[3]ज्झलज्झलायितपदव्युत्पादिनः केचन
प्रत्यग्रप्रतिभावभातभणितिव्युत्पत्तिवैहासिकाः ।
वैदग्धीं दधते रसेष्वपि परे सर्वाभिसारोल्वणे
काव्यस्याध्वनि वस्तुपालसचिवस्यैव प्रतिष्ठा पुनः ॥ १५ ॥

अन्येद्युर्भक्तितो मौलौ निधाय करकुड्मलम् ।
तेन विज्ञपितः श्रीमान् नरचन्द्रमुनीश्वरः ॥ १६ ॥

केचिद् विस्तरदुस्तरास्तदितरे संक्षेपदुर्लक्षणाः
सन्त्यन्ये सकलाभिधेयविकलाः क्लेशावसेयाः परे ।
इत्थं काव्यरहस्यनिर्ने(र्ण)यबहिर्भूतैः प्रभूतैरपि
ग्रन्थैः श्रोत्रगतैः कदर्थितमिदं कामं मदीयं मनः ॥ १७ ॥

तन्मे नातिसविस्तरं कविकलासर्वस्वगर्वोद्धुरं
शास्त्रं ब्रूत किमप्यनन्यसदृशं बोधाय दुर्मेधसाम् ।
इत्यभ्यर्थनया प्रतीतमनसः श्रीवस्तुपालस्य ते
श्रीमन्तो नरचन्द्रसूरिगुरवः साहित्यतत्त्वं जगुः ॥ १८ ॥

तेषां निदेशादथ सद्गुरूणां श्रीवस्तुपालस्य मुदे तदेतत् ।
चकार लिप्यक्षरसंनिविष्टं सूरिर्नरेन्द्रप्रभनामधेयः ॥ १९ ॥

काव्यालङ्कारसूत्राणि स्वानि किञ्चिद् विवृण्महे ।
तन्मनस्तन्मयीकृत्य विभाव्यं कोविदोत्तमैः ॥ २० ॥

नास्ति प्राच्यैरलङ्कारकारैराविःकृ(ष्कृ)तं न यत् ।
कृतिस्तु तद्वचःसारसङ्ग्रहव्यसनादियम् ॥ २१ ॥

---

१ अ. प्रांशु० । २ प. अ. ०दंचन् । ३ प. ०चिज्झ० । ४ प. ०ल्वणा । ५ अ. ०र्वहे । ६ अ. ०विस्कृ० । ७ अ. ०तिस्तद्व० ।

अथ शास्त्रारम्भे शास्त्रकारः सकलप्रत्यूहव्यूहव्यपोहाय शास्त्रस्य तत्प्रभावनिर्माप्यत्वात् समुचितामात्मनोऽभीष्टां च भगवतीं वाग्देवतां नमस्करोति—

शब्दब्रह्ममयीं वन्दे देवीमानन्दकन्दलीम् ।
चातूरूप्यनिभाद् यस्याः कोऽपि स्तम्बादिडम्बरः ॥ १ ॥

शब्दब्रह्ममयीं शब्दब्रह्मशरीरां देवीं दिव्यस्वरूपां वन्दे प्रणौमि । शब्द एव ब्रह्म विश्वव्यापी कश्चित् परमज्योतिर्विवर्त्तः स प्रकृतो यस्यामिति मयटि शब्दब्रह्ममयी ताम् । समर्थविशेषणमाहात्म्याच्च विशेष्यप्रतीतिरिति 'वाग्देवता' गम्यते । तां च कीदृशीम् ? आनन्दकन्दलीमानन्दरूपाङ्कुरप्रादुर्भावस्य कन्दली लताविशेषस्ताम् । 'परादिमूर्तिमत्या हि भारत्याः परमानन्दोद्गमः' इत्यागमः । अत्र देव्याः कन्दलीत्वरूपणादानन्दस्याङ्कुरत्वरूपणमित्येकदेशविवर्त्ति परम्परितं रूपकम् । यस्याः कोऽप्यनिर्वचनीयः स्तम्बादिडम्बरः स्तम्ब-पत्र-पुष्पादिरूपपरिस्पन्दो 'वर्त्तते' इति क्रियाध्याहारः । कस्माच्चातूरूप्यनिभात् । भगवती भारती हि परा १ पश्यन्ती २ वैखरी ३ मध्यमा ४ इत्यभिधानाज्ज्ञात्याद्रिरूपत्वाद् वा चतूरूपा तस्या भावश्चातूरूप्यं तन्निभात् तच्छलादित्यर्थः । यथा हि स्तम्बादिशालिनी लता पुष्पादिप्राप्तिहेतुत्वाज्जनानामानन्दयित्री तापादिव्यपगमं च करोति; तथा भगवत्यपि चातूरूप्यवती विशेषप्रतिभोल्लासहेतुत्वाल्लोकानामानन्दयित्री दुरितादिविध्वंसं च सूत्रयतीति नमस्कार्यैवेयमिति ॥ १ ॥

अथाभिधेयमाह—

वाच्य-वाचकवैचित्र्यरत्नसम्भारनिर्भरः ।
कीर्त्यते कृतिनां सोऽयमलङ्कारमहोदधिः ॥२॥

सोऽयं स इत्यनिर्वाच्यस्वरूपोऽयमित्यनुभूयमानोऽलङ्कारमहोदधिरलङ्काररूपामृतस्य महोदधिः सागर इत्यन्वर्थनामा ग्रन्थविशेषः कृतिनां कोविदानां कीर्त्यते कथ्यते इति । कृतिनो हि शास्त्राणामन्वस्तत्त्वनिकषः । स च कीदृशः ?

१ व. ०स्वपतनप्र० । २ प. शब्द एव । ३ व. ०देवस्व० । ४ व. ०पीति क० । ५ व. स कृ० ।
६ ज. ०हमादा० । ७ व. ०वर्त्ते । ८ व. ०पल० । ९ प. ०भात् छ० । १० व. ०गमं क० ।
११ प. ०माल्हाद० । १२ ज. सोऽयमित्य० । १३ व. ०ङ्काररूपा० ।

वाच्या अर्था वाचकाः शब्दास्तेषां वैचित्र्याणि लोकोत्तरचारुताकारणानि तान्येव रत्नानि तेषां सम्भारः समूहस्तेन निर्भरः परिपूर्णः । सागरो हि रत्नपरिपूर्णो भवत्ययं ग्रन्थः शब्दार्थवैचित्र्यपूरित इत्यनयोः साम्यमिति . २ ॥

अथ शास्त्रप्रस्तावनामाह—

हेमहर्म्याङ्गणक्रीडत्कलभाः सुलभाः श्रियः ।
दुर्लभास्तद्विदानन्दकादम्बिन्यो गिरः पुनः ॥ ३ ॥

काञ्चनमन्दिराजिरविलसत्करिपोता अपि श्रियः सम्पदः सुलभाः सुप्रापा[3] एव । गिरो वाचः पुनर्दुर्लभा दुःखसमासाद्याः । कीदृश्यः ? तद्विदां भारतीसौरभ्यवेदिनामानन्दः प्रमोदः स एव पीयूषवर्षं तस्य कादम्बिन्यो नवमेघपङ्क्तयः । अत्राप्येकदेशविवर्ति परम्परितमेव रूपकम् । यथा कादम्बिन्यः सुधावर्षिण्यो दुर्लभास्तथा तद्विदानन्ददायिन्यो गिरोऽपि । तथाविधवाग्विलासालङ्कृतानामल्पीयसामेव दृश्यमानत्वात् । विश्वश्रेयःश्रियस्तु राजादयो भूयांस एव दृश्यन्ते इत्यर्थदर्शिनां गिरां दुर्लभत्वमेवेति ॥ ३ ॥

तत् किमित्याह—

ताश्च सम्भाव्य भूयोभिः प्राक्तनैर्भाग्यवैभवैः ।
काव्ये बद्धादरैर्भाव्यमजस्रमपरिश्रमैः ॥ ४ ॥

ताश्च सहृदयानन्दिनीर्वाचो भूयोभिरनल्पैः प्राक्तनैः प्राच्यैर्भाग्यवैभवैः पुण्यप्राग्भारैः सम्भाव्य प्राप्य । प्राग्जन्मार्जितसुकृतसम्भारमन्तरेण तादृशीनां गिरामनासाद्यत्वात् । यदुक्तम्—

“ न नाम्नामावृत्त्या परिचयवशाच्छन्दसि न वा
न शब्दव्युत्पत्त्या निभृतमुपदेशान्न च गुरोः ।
अपि त्वेताः स्वैरं जगति सुकवीनां मधुमुचो
विपच्यन्ते वाचः सुकृतपरिणामेन महता ॥ १ ॥ ”

---

१ व. ०पूर्णो भ० । २ व. ०मंदा० । ३ प. सुप्राप्ता । ४ व. ०वर्तप० । ५ प. ०न्योऽमृतव० ।
६ प. ०दृशां गि० । ७ प. अमन्दानन्दसन्दोहप्राप्त० । ८ व. ०प्रागृहारैः संप्राप्य । ९ प. ०स्त्राद्यत्वात न ।

तत् किं कर्तव्यमित्याह—काव्ये कविव्यापारे बद्धादरैर्यत्नपरैर्भाव्यं भवितव्यं 'विद्वद्भिः' इति गम्यते। कथमजस्रमविश्रान्तम्। कीदृशैर्विद्वद्भिरपरिश्रमैः परि[1]श्रमं विमुच्येत्यर्थः। तद्विधा हि वाचः काव्यव्यापृता एव साफल्यं भजन्तीति भावः ॥४॥

अथ किम्प्रयोजनं काव्यमित्याह—

अमन्दोद्गतिरानन्दस्त्रिवर्गश्च निरर्गलः ।
कीर्तिश्च कान्तातुल्यत्वेनोपदेशश्च तत्फलम् ॥ ५ ॥

तस्य काव्यस्य फलं प्रयोजनं यथौचित्यं कवेः सहृदयस्य[2] च किमित्याह—सकलप्रयोजनतिलकभूता तत्कालमेव रसपीयूषपान[3]प्रादुर्भूता कवलितवेद्यान्तरा परमब्रह्मास्वादसोदरा प्रीतिरानन्दः। सोऽप्यमन्दोद्गतिरूर्जस्वलोदयः। तथा निरर्गलः सातिशयो धर्मार्थ[4]कामरूपस्त्रिवर्गः। यतो देवता-मुनिस्तुति[5]-विशेषात् सर्वसुखसम्पत्तिहेतुर्धर्मः प्रादुर्भवत्येव। सरसकाव्यपरितोषितेभ्यः पृथिवीपतिप्रमुखेभ्योऽर्थो[6]ऽपि पुरस्सर एव। काव्यरसपरवशीभूताः कामिन्योऽपि[7] कामं कामरसामृतनिर्[8]स्यन्दिन्यो भवन्तीति। तथा शरदिन्दुसुन्दरा कीर्तिश्च। कालिदासादीनां[9] महाकवीनामद्य यावत् काव्यप्रकर्षादद्भुताः कीर्तयः। तथा कान्तासंमि[10]-ततयोपदेशश्च। काव्यमुद्रया हि शब्दार्थौ गुणीकृत्य रसाविष्कारकारणं व्यापारमूरीकुर्वत्या प्रभुप्रायेभ्यः शब्दप्रधानेभ्यो वेदागमादिशास्त्रेभ्यश्च मित्रतुल्ये[11]भ्योऽर्थप्रधानेभ्यः पुराण-प्रकरणादिभ्यश्च किमप्यात्मनो वैलक्षण्यमुन्मीलयन्त्या कान्तयेव रसपारवश्याध्यारोपात् संमुखीकृत्य 'रामादिवद् [12]वर्तितव्यम्, न रावणादिवद्' इत्युपदेशः प्रदीयते। यदाह हृदयदर्पणकारः—

"शब्दप्राधान्यमा[13]श्रित्य तत्र शास्त्रं पृथग् विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ॥ २ ॥
द्व[14]योर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेद् ।" इति ॥ ५ ॥

---

१ प. परिश्रान्ति। २ अ. ०स्य कि०। ३ प. ०पाद०। ४ प. ०र्थरूपत्रि०। ५ प. ०तिल्पाद् वि०। ६ अ. ०भ्योपिर्यो०। ७ प. ०पि कामर०। ८ व. निस्यंदिनो। ९ प. ०नांहि क०, अ. ०दीनां अद्य०। १० प. ०संमत०। ११ अ ०ल्येभ्यः पु०। १२ प. वर्त्तव्यं। १३ व. ०न्यतत्र। १४ व. द्वयोर्व्या०।

अथ काव्यस्य कारणमाह—

**कारणं प्रतिभैवास्य व्युत्पत्त्यभ्यासवासिता।**
**बीजं नवाङ्कुरस्येव काश्यपी–जलसङ्गतम्॥ ६॥**

अस्य काव्यस्य प्रतिभैव नवनवोल्लेखप्रेङ्खितः प्रज्ञाविशेष एव कारणं निमित्तम्। कथम्भूता प्रतिभेत्याह–व्युत्पत्तिः शास्त्रादिप्रागल्भ्यम्, अभ्यासः पुनः पुनः प्रवृत्तिस्ताभ्यां वासिता संस्कृता। किमिव? बीजमिवं। कस्य? नवाङ्कुरस्य प्रथमाङ्कुरस्य। बीजस्य ह्युत्तरोत्तरानङ्कुरान् प्रत्यकारणत्वात्। किंविशिष्टम्? काश्यपी–जलसङ्गतं पृथिवी–पाथःसँमागतम्। किमुक्तं भवति? यथा बीजमेवाङ्कुरोत्पत्तिहेतुर्भूस्यम्भसी तु तदुपष्टम्भबीजके। तथा प्रतिभैव काव्यकामधेनुर्व्युत्पत्त्यभ्यासौ तु तामेवोपस्कुरुतस्तद्द्वारेणैवं काव्योपकारिणौ। विद्यमानयोरपि तयोर्निःप्र(निष्प्र)तिभस्य काव्योत्पत्त्यनुपलम्भादिति॥ ६॥

अथ विशेषतः प्रतिभास्वरूपमाह—

**जगच्चेतश्चमत्कारि कविकर्म्मनिबन्धनम्।**
**काचिदप्यात्मनः शक्तिः प्रतिभेत्यभिधीयते॥ ७॥**

काचिदप्यशक्या निर्वक्तुमात्मनः क्षेत्रज्ञस्य शक्तिः स्फूर्त्तिविशेषः प्रतिभेति नाम्नाऽभिधीयते व्यपदिश्यते 'बुधैः' इति शेषः। कीदृशी? जगच्चेतश्चमत्कारि विश्वमनोविस्मयोत्पादि। न पुनस्तद्विपरीतम्। यल्लोकोत्तरं कविकर्म कविव्यापारः काव्यमित्यर्थः। यदुक्तम्—

" प्रज्ञा नवनवोल्लेखशालिनी प्रतिभा मता।
तदनुप्राणनाजीवद्वर्णनानिपुणः कविः॥ ३॥

तस्य कर्म्म स्मृतं काव्यम्" इति।

तस्य काव्यस्य निबन्धनं कारणम्। न खलु प्रतिभामन्तरेण काव्यमुन्मीलति। कथञ्चिदुन्मीलति चेत् तत् सर्वस्यापि हास्यपात्रतां गच्छेदिति॥ ७॥

---

१ प. का०। २ व. ०व नश०। ३ व. ०पाथः कि०। ४ अ. ०गैवोप०। ५ प. ०स्य हास्यतां।

व्युत्पत्तिं व्याचष्टे—

लोके शब्दादिशास्त्रेषु काव्य–नाट्य–कथासु च ।
आगमादिषु च प्रौढिर्व्युत्पत्तिरिति कथ्यते ॥ ८ ॥

लोके स्थावर–जङ्गमात्मनो लोकस्य वृत्ते, शब्दादिशास्त्रेषु व्याकरण–च्छन्दोऽनुशासनाभिधानकोश–गजाश्वलक्षण–भरत––चाणक्य—वात्स्यायनाध्यात्मप्रभृतिग्रन्थेषु, काव्येषु रघुवंशादिषु, नाट्येष्वभिज्ञानशकुन्तलादिषु, कथासु च कादम्बरीप्रमुखासु, आगमादिष्वागम––श्रुति–स्मृति–पुराणेतिहासप्रभृतिषु धर्म्मशास्त्रेषु च प्रौढिः सम्यक्तत्त्ववेदित्वं व्युत्पत्तिरिति कथ्यतेऽभिधीयते[3] इति । लोकवृत्तादिनैपुण्यसंस्कृतप्रातिभस्य हि काव्यं तदनतिक्रमेणोपनिबद्धं तद्विदावर्जकं भवतीति ॥ ८ ॥

अथाभ्यासं विवृणोति—

केवलेऽथ प्रबन्धस्थे काव्ये काव्यज्ञशिक्षया ।
पुनः पुनः प्रवृत्तिर्या सोऽभ्यासः परिकीर्तितः ॥ ९ ॥

सोऽभ्यासः परिकीर्तितः कथितः । केवले विशकलितरूपेऽथ प्रबन्धस्थे परस्परापेक्षपङ्क्तिस्थापिते हारप्रोतमौक्तिककल्पे काव्ये या पुनः पुनर्भूयो भूयः प्रवृत्तिः प्रवर्तनम् । कथम्? काव्यज्ञशिक्षया काव्यं कर्तुं विचारयितुं च ये जानन्ति ते काव्यज्ञाः कविसहृदयास्तेषां शिक्षयोपदेशेनेत्यर्थः । न खलूपदेष्टारमन्तरेण शिखण्डिताण्डवमिव स्वभ्यस्ताऽपि कला चेतनचमत्कारिणी भवति ॥ ९ ॥

काव्यज्ञशिक्षयेत्युक्तमिति शिक्षां लक्षयति—

सतोऽप्यबन्धः कस्यापि बन्धोऽन्यस्यासतोऽपि हि ।
शिक्षा स्यान्नियमश्छायाद्यपहारादयस्तथा ॥ १० ॥

शिक्षा स्यादुपदेशो भवेत् । केयमित्याह—सतोऽप्यबन्धः कस्यापीति । कस्यापि जाति–द्रव्य–गुण–क्रियाऽऽदेः सतोऽपि विद्यमानस्याप्यबन्धो गुम्फाभावः । तत्र

१ प. ०त्वको । २ अ. ०नात्म० । ३ व. ०ते लो० । ४ व. तद्वदा० । ५ अ. ०त्तिः क० । ६ प. वा । ७ प. ०लु अ० । ८ अ. सतो वि० ।

जातेर्यथा– मालत्या वसन्ते, पुष्पफलस्य चन्दनेद्रुमे, फलस्याशोके। द्रव्यस्य यथा– कृष्णपक्षे सत्या अपि ज्योत्स्नायाः, शुक्लपक्षे त्वन्धकारस्य। गुणस्य यथा– कुन्द–कुड्मलानां कामिदन्तानां च रक्तत्वस्य, कमलादीनां च हरितत्वस्य, प्रियङ्गुपुष्पाणां च पीतत्वस्य। क्रियाया यथा– दिवा नीलोत्पलानां विकाशस्य, शेफालिकाकुसुमानां विश्रंसस्य च। तथा बन्धोऽन्यस्यासतोऽपि हि। अन्यस्य जात्यादेरेवासतोऽपि ह्यविद्यमानस्यापि बन्धो गुम्फनम्। तत्र जातेर्यथा–नदीषु पद्म–नीलोत्पलादीनाम्, जलाशयमात्रेऽपि हंसादीनाम्, यत्र तत्र पर्वतेऽपि सुवर्ण–रत्नादीनां च। द्रव्यस्य यथा–तमसि मुष्टिग्राह्यत्वस्य सूचीभेद्यत्वस्य च, ज्योत्स्नायां च कुम्भोपवाह्यत्वादेः। गुणस्य यथा–यशो–हासादौ शौक्ल्यस्य, अयशः–पापादौ कार्ष्ण्यस्य, क्रोधानुरागयो रक्तत्वस्य च। क्रियाया यथा– चकोरेषु चन्द्रिकापानस्य, चक्रवाकमिथुनेषु निशि भिन्नतटाश्रयणस्य च। नियमो जात्यादेरेवैकत्रावधारणम्। जातेर्यथा– समुद्रेष्वेव मकराः, ताम्रपर्ण्यामेव मौक्तिकानि। द्रव्यस्य यथा– मलय एव चन्दनस्थानम्, हिमवानेव भूर्जोत्पत्तिपदम्। गुणस्य यथा– सामान्योपादाने माणिक्यानां शोणतैव, पुष्पाणां शुक्लतैव, मेघानां कृष्णतैव। क्रियाया यथा–कोकिलरुतं वसन्त एव, मयूराणां वर्षास्वेव विरुतं नृत्तं चेति। अथवा नियमः कविसमयः। यथा– कृष्ण–नीलयोः, कृष्ण–हरितयोः, कृष्ण–श्यामयोः, पीत–रक्तयोः, शुक्ल–गौरयोः, चन्द्रे शश–मृगयोः, कामकेतने मकर–मत्स्ययोः, अत्रिनेत्र–समुद्रोत्पन्नयोश्चन्द्रयोः, द्वादशानामप्यादित्यानाम्, कमला–सम्पदोः, क्षीर–क्षारसमुद्रयोः, दैत्य–दानवासुराणां चैक्यम्। तथा चक्षुरादेरनेकवर्णोपवर्णनं बहुकालजन्मनोऽपि शिवचन्द्रमसो बालत्वम्, कामस्य मूर्त्तत्वममूर्त्तत्वं चेत्यादिः। छायाद्यपहारादयस्तथा। छायायाः परकाव्यात् सादृश्यमात्रस्यादिशब्दात् पद–पादादीनां चापहारः समुपजीवनम्। पुनरादिपदात् समस्यापूरणाद्या शिक्षा। तथेति समुच्चये इति ॥ १० ॥

अथ शिक्षाधिकारिणः कथयति—

**केऽप्यरोचकिनः केऽपि सतृणाभ्यवहारिणः ।**
**तेषु पूर्वे विवेकित्वादेतामर्हन्ति नापरे ॥ ११ ॥**

---

१ व. पुष्पफलस्याशोके। २ अ. चंदने द्रु०। ३ व. अ. द्रव्यस्य यथा कुन्द०। ४ व. हरितत्वस्य क्रि०। ५ प. यथा, व. तथा बन्धोऽन्यस्य जा०। ६ व. ०लानां। ७ अ. ०लाश्रय०। ८ अ. रत्नसुवर्णादी०। ९ व. ०त्वस्यापि शू०। १० अ. ०प्पशु०। ११ व. ०चक्षु०। १२ अ. ०स्यं ०चंद्रस्य। १३ प. चेति।

अत्रारोचकि-सतृणाभ्यवहारिशब्दावुपचरितार्थौं क्रमाद् विचारचतुरान् विचार-रहितांश्च लक्षयतः। तेषु द्वितयेषु मध्ये पूर्वे ये केचिदरोचकिनस्ते विवेकित्वाद् विचारैकनिष्ठत्वादेतां पूर्वोक्तां शिक्षामर्हन्ति तद्योग्या भवन्ति, नापरे न त्वितरे सतृणाभ्यवहारिणस्तद्विपरीतत्वादिति ॥ ११ ॥

अथ काव्यशरीरं निर्दिशति—

**काव्यं शब्दार्थवैचित्र्ययोगः सहृदयप्रियः ।**
**यस्मिन्नदोषत्व-गुणालङ्कृति-ध्वनयः स्थिताः ॥ १२ ॥**

काव्यं निपुणकविकर्म । किमित्याह शब्दार्थवैचित्र्ययोगः । शब्दो वाचकोऽर्थश्च वाच्यस्तयोर्वैचित्र्यं [3]विच्छित्तिवैशिष्ट्यं तच्च प्रत्येकमभिसम्बध्यते । शब्दवैचित्र्यमर्थवैचित्र्यं चेति तयोर्योगः सम्पर्कः । न खलु शब्दार्थावेव काव्यम्, गोरपत्यं बलीवर्द इत्यादेरपि काव्यत्वप्रसङ्गात् । नाप्येकवैचित्र्यमपि चमत्करोति, पुरो दूषयिष्यमाणत्वात् । तस्मादुभयवैचित्र्ययोग एव काव्यम् । सोऽपि सहृदयप्रियः । प्रीणातीति प्रियः सहृदयानां प्रियः सहृदयाह्लादक इत्यर्थः । नहि वैचित्र्ययोगेन तद्विदः प्रीयन्ते । अथाभिधेयतया वैचित्र्यस्य हेतूनाह—यस्मिन्नित्यादि । यस्मिन् यत्र शब्दार्थयोर्वैचित्र्येऽदोषत्वं गुणा अलङ्कृतयो ध्वनिश्च वक्ष्यमाणाः स्थिताः कृतावस्थानास्तैरेव च शब्दार्थयोर्वैचित्र्यमुन्मील्यत इति ॥१२॥

कुतस्तदुन्मील्यत इत्याह—

**निर्दोषः सगुणः सालङ्कृतेः सव्यञ्जनस्तथा ।**
**शब्दश्चार्थश्च वैचित्र्यपात्रतां हि विगाहते ॥ १३ ॥**

हिर्यस्मात् कारणान्निर्दोषत्वाद्यलङ्कृत एव वाचको वाच्यश्च विचित्रतां चुम्बतीति । दोषाभावादयो वैचित्र्यहेतव इति स्थितम् ॥ १३ ॥

अथ काव्यत्वादपवादमाह—

**स्फुटालङ्कारवैचित्र्यवञ्चितोऽप्यपरत्रये ।**
**चमत्कारिणि काव्यत्वं न परिम्लायति कचित् ॥ १४ ॥**

---

१ अ. ०यति । २ अ. ०केचना० । ३ व. वैच्छि० । ४ अ. काव्यं सोऽपि । ५ अ. ०यः स० । ६ व. प्रतीयन्ते । ७ अ. ०थाधे० । ८ व. ०त्र्यहे० । ९ व. स्थानस्थैरे० । १० अ. ०स्तदित्या० । ११ प. व. ०कृतिः । १२ व. ०र्थस्य ।

स्फुटेत्यभिधानान्निरलङ्कारं नाम नास्त्येव काव्यम्। क्वचित् पुनः स्फुटत्वं-मलङ्कारस्य क्वाप्यस्फुटत्वम्। यत्राप्यस्फुटत्वं तत्रापि चमत्कारिण्यपरत्रये निर्दोषत्व–सगुणत्व–सव्यञ्जनत्वलक्षणे सति न काव्यता परिहीयते। यथा—

"गेयं श्रोत्रैकपेयं बकुलवलयितं मल्लिकादाम दत्त-
प्रीतिः कर्पूरपूरः सुरयुवतिजितो वारसारङ्गनेत्राः।
अस्त्येवैतत् समस्तं तदपि वसुमतीवर्णिनीकर्णपूर!
प्रेक्ष्यन्ते ते विपक्षा भृशमरतिपरीभोगदौस्थित्यभाजः ॥ ४ ॥"

अत्र गेयादीनां रतिकारणानामरतिरूपविरुद्धकार्योत्पादेनारतिरूपस्य कार्यस्य गेयादिविरुद्धकारणसमावेशेन च[१] सन्देहसङ्करे विशेषोक्ति–विभावनयोरस्फुटत्वम् ॥ १४ ॥

अथ ध्वनिकाव्यमाह—

**वाच्यवाचकयोरन्यद् विचित्रत्वं तिरो दधत्।**
**व्यञ्जकत्वं स्फुरेद् यत्र तत् काव्यं ध्वनिरुत्तमम् ॥ १५ ॥**

यत्र यस्मिन् शब्दार्थयोरन्यन्निर्दोषत्व–सगुणत्व–सालङ्कारत्वरूपं वैचित्र्यं तिरस्कुर्वाणो व्यञ्जकीभावः प्रदीप्येत तत् काव्यमुत्तमं ध्वनिरित्युच्यते। यतः उच्चरितप्रध्वंसिनां वर्णानामर्थप्रत्यायकत्वाभावात्। संहृतक्रममन्त्यबुद्धिनिग्राह्यं ध्वनिसंज्ञं शब्दब्रह्मापरनामधेयं घण्टानुरणनप्रतिमं तदीयं स्वरूपमेव किञ्चिदर्थ-प्रतीतिं जनयति। तच्च स्फुटत्यर्थोऽस्मादिति स्फोट इत्यभिधीयते। स च शब्देनैव व्यज्यते इति तद्व्यञ्जनक्षमः शब्दोऽप्युपचाराद् वैयाकरणैर्ध्वनिरित्युच्यते। ततस्तन्मतानुगामिभिरानन्दवर्द्धनाद्यैरपि तिरस्कृतवाच्य–वाचकमहिम्नो व्यङ्ग्यार्थस्य व्यञ्जनसमर्थं शब्दार्थद्वितयमपि व्यञ्जकत्वसामान्यात् ध्वनिरिति व्यपदिश्यते सर्वोत्तमत्वं च लभते[२]। यथा—

"वल्मीकः किमुतोद्धृतो गिरिरियत् कस्य स्पृशेदाशयं?
त्रैलोक्यं तपसा जितं यदि मदो दोष्णां किमेतावता?।

---

१ व० त्वं य०। २ व. तथापि। ३ प. न। ४ अ. ०द्रय०। ५ व. लभ्यते। ६ व. ०तोद्धतो।

सर्वं साऽप्यथवा रुणत्सि विरहक्षामस्य रामस्य चेत्
'त्वद्दन्ताङ्कितवालिकक्षरुधिरक्लिन्नाग्रपुङ्खं शरम् ॥ ५ ॥ "

इयं रावणं प्रति रामस्योक्तिः। अत्र दन्ताङ्कितपदेन वालिना तस्य विजयः, कक्षप्रक्षेपणं तथैव चतुरम्भोधिभ्रमणं कृपयैव च परित्यागस्तत्राप्रतीकारस्तथाप्यभिमानदर्प इत्यादिः। रामस्येति पदेन जगत्प्रतीतेनापि रामेण स्वयमुक्तेनानुपयुज्यमानत्वाद् बाधितस्वार्थेन पौरुषोत्कर्षं लक्षयता भार्गवप्रत्यादेशादि, येन त्वं बद्धः सोऽपि वाली मया हत इत्यादि च। विरहक्षामस्य रामस्येत्यनेन चासतां पुष्टाङ्गस्य कृशस्यापि दुर्निवारा एव मम शरा इत्यादि व्यज्यते ॥१५॥

अथ गुणीभूतव्यङ्ग्यमाह—

तयोर्यत्रान्यवैचित्र्याद् व्यञ्जकत्वस्य गौणता।
तन्मध्यमं गुणीभूतव्यङ्ग्यं काव्यं निगद्यते ॥१६॥

तत् काव्यं मध्यमं गुणीभूतव्यङ्ग्यमिति कथ्यते। यस्मिन् शब्दार्थयोरन्येषां निर्दोषत्वादीनां वैचित्र्याद् व्यञ्जनव्यापारस्य गुणीभावः। यथा—

*" वाणीरकुडंगोड्डीणसउणकोलाहलं सुणंतीए।
घरकम्मवावडाए वहूए सीअंति अंगाइं ॥ ६ ॥ "

अत्र वाच्यादङ्गसादाद् रसविशेषपरत्वेन सुन्दरात् स सङ्केतस्थानमागच्छदहं तु न गतेति व्यङ्ग्यमसुन्दरमित्यस्य गुणीभूतत्वम् ॥ १६ ॥

अथावरं काव्यमाह—

यत्र व्यञ्जनवैचित्र्यचारिमा कोऽपि नेक्ष्यते।
काव्याध्वनि सदाऽध्वन्यैस्तत् काव्यमवरं स्मृतम् ॥१७॥

काव्यमार्गे सततपान्थैस्तत् काव्यमधममाम्नातम्। यस्मिन् व्यञ्जनव्यापाररूपविचित्रत्वसौन्दर्यं किमपि नावलोक्यते। अन्यनिर्दोषत्वादिवैचित्र्यं त्वस्त्येव। तच्च द्विविधं सशब्दगुणालङ्कारं सार्थगुणालङ्कारं चेति। तत्राद्यं यथा—

* वानीरकुडङ्गोड्डीनशकुनकोलाहलं शृण्वत्याः। गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥

१ अ. तद्द०। प. ०ना वि०। २ प. ०क्षामस्येत्य०, अ. ०क्षामस्य चे०। ३ प. ०स्यापि। ४ अ. प. सद गु०। ५ प. सीयंति। ६ प. कोपि नेष्यते। ७ अ. श्रुतं।

" अश्यद्विश्वम्भराणि अमितभुवनभृत्कुम्भिकुम्भीनसानि
त्रुट्यत्ताराणि तुङ्गद्धरणिधरशिरःश्रेणिशीर्यद्दृषन्दि ।
दिग्दीर्णोदन्वदाम्पि भ्रमदमरचमूचक्रचञ्चद्वियन्ति
व्यस्यन्तु व्यापदं वस्त्रिपुरविजयिनस्ताण्डवाडम्बराणि ॥ ७ ॥ "

द्वितीयं यथा––

" प्रेङ्खद्भिश्चन्द्रपादैर्विहितपरिकरः स्फाटिकारानुकारै-
रथाज्जूटः पुरारेः शिरसि सुरसरित्तीरदेशारघट्टः ।
बन्धाहेः श्वासवातैः शुषिरकवलितोद्भ्रान्तवारि भ्रमन्ती
कापाली यत्र माला रयचलितघटीचक्रलीलां तनोति ॥ ८ ॥ "

यद्यपि प्रायः शब्दार्थालङ्काराणां नान्तरीयकत्वं तथापि प्राधान्येन निर्देश इति ॥ १७ ॥[3]

**शब्दार्थवैचित्र्यसुधातरङ्गिते सरस्वतीस्रोतसि मांसलश्रियम् । करोति यः काव्यकलामृणालिनीं स एव कश्चित् कविवासरेश्वरः॥**

इत्यलङ्कारमहोदधौ काव्यस्य प्रयोजन–कारणस्वरूपभेदनिर्णयो नाम प्रथमस्तरङ्गः ॥ १ ॥



१ व. शश्वद्ध० । २ अ. प्रेषद्धि० । ३ प. इत्यलङ्कारमहोदधौ काव्यस्य प्रयोजन–कारण–स्वरूपभेद-वर्णनो नाम प्रथमस्तरङ्गः ॥ १ ॥ २ प. भेदाद्यस्त०, व. भेदाय नि० ।

# अथ द्वितीयस्तरङ्गः ।

—•*卐*•—

अथ पूर्वोक्तस्मारणपूर्वमुत्तराभिधेयमुपक्रमते[1]--

पूर्वं शब्दार्थवैचित्र्ययोगः काव्यमुदीरितम् ।
तत्र धीमच्चमत्कारि शब्दवैचित्र्यमुच्यते ॥ १ ॥

तदेव हि वैचित्र्यं यत्र धीमन्तश्चित्रीयन्ते इति ॥ १ ॥

प्रथमं तावत् शब्दस्वरूपमाह[2]--

शब्दः स्याद् वाचकश्चौपचारिको व्यञ्जकस्तथा ।
अर्थैर्वाच्यादिभिस्तत्र तावन्निर्वच्मि वाचकम् ॥ २ ॥

वाच्यादिभिरर्थैर्वाच्योपचरित-व्यङ्ग्यैर्हेतुभिर्वाचकश्चकारस्य भिन्नक्रमत्वा-दौपचारिकश्च तथा व्यञ्जक इति त्रयः शब्दाः। तत्र तेषु मध्ये वाचकं विचारया-मीति ॥ २ ॥

अथ यत् प्रतिज्ञातं तन्निर्वाहयति--

शब्दः सङ्केतितः पूर्वैर्जात्याद्यर्थचतुष्टये ।
तद्वशाद् दृश्यते तस्य चतुर्द्धैव प्रवर्त्तनम् ॥ ३ ॥

यद्यप्यर्थक्रियाकारितया सङ्केतयोग्या व्यक्तिरेव, तथापि व्यक्तीनामानन्त्यात् प्रत्यहं नवनवोत्पादेन व्यभिचाराच्च तत्र सङ्केतः कर्तुं न युज्यते । तथा यदि व्यक्तावेव सङ्केतः स्यात्, तदा गौः शुक्लश्चलतीत्यादीनां[3] विषयविभागो न प्राप्नोति । तावद्विशेषणविशिष्टाया एव गोव्यक्तेः सङ्केतपात्रीकृतत्वेनैकेनैव शब्देनाभिधीयमानत्वादन्यथा शृङ्ग-सास्नादिवैशिष्ट्येऽपि पृथक् पृथक् शब्दा-भिधेयत्वं स्यात् । यदि च विषयविभागं विनाऽप्येकस्मिन्नेव विषये युगपद् भूयसां शब्दानां प्रवृत्तिः स्यात् तदानीमिन्द्रः शक्रः पुरन्दर इत्यादयोऽपि शब्दाः समकालमेकस्मिन्नेव विषये प्रवर्त्तेरन् । तस्मान्न व्यक्तौ सङ्केतः, किन्तु तदुपाधावेवेत्युपपन्नम् । उपाधिश्च वस्तुधर्मो वक्तृयदृच्छासन्निवेशितश्च ।

---

१ प. ०पूर्वमुप० । २ व. शब्दरू० । ३ अ. ०त्यादौ वि० ।

वस्तुधर्मः सिद्धः १ साध्यश्च २। सिद्धोऽपि पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च। प्राणप्रदो जातिः। नहि जातिं विना पदार्थः सत्तामात्रमप्यासादयति। यदुक्तं वाक्यपदीये—'गौः स्वरूपेण न गौर्नाप्यगौर्गोत्वाभिसम्बन्धात् तु गौः' इति। द्वितीयो गुणः शुक्लादिना हि लब्धसत्ताकं वस्तु विशेष्यते। साध्यः पूर्वापरीभूतावयवक्रियारूपः। डित्थादिशब्दानामन्त्यबुद्धिनिग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन संनिवेश्यत इति स संज्ञारूपयदृच्छात्मक इति। 'गौः शुक्लश्चलति डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति महाभाष्यकारः। परमाणुत्वादीनां तु न जातित्वं पार्थिवत्वादिना परापरव्यवहारानुपपत्तेः। यदि हि परमाणुत्वं परं पार्थिवत्वमपरं तत् सर्वाऽपि पृथ्वी परमाणुरूपैव स्यात्। यदि च पार्थिवत्वं परं परमाणुत्वमपरं तत् सर्वेऽपि परमाणवः पार्थिवा एव स्युरपरसामान्यव्यापकत्वात् परसामान्यस्येति। नापि गुणत्वं लब्धसत्ताकस्य वस्तुनो विशेषको गुण इति गुणलक्षणायोगात्। गुणस्य हि द्रव्यं समवायिकारणम्, गुणस्तु कार्यः। कारण-कार्ययोश्च पूर्वापरकालभावित्वं नियतमेव। तच्च नित्ययोः परमाणु-परमाणुत्वयोर्नोपपद्यत एवेति विशेषाधानहेतुत्वाभावान्न गुणत्वमित्युभयभ्रंशे कणादमुनिना चतुर्विंशतिर्गुणमध्येऽणु महद् दीर्घं ह्रस्वं च परिमाणमित्यणुपरिमाणेऽन्तर्भावितत्वात् पारिभाषिकं गुणत्वम्। ननु 'नित्यमेकमनेकवृत्ति सामान्यम्' इति सामान्यलक्षणादयं गौरयं गौरित्यनुवृत्तप्रत्ययाच्च यथा गवादीनां जातिशब्दत्वं तथा सामान्यलक्षणादयं शुक्लोऽयं शुक्ल इत्याद्यनुवृत्तप्रत्ययाच्च शुक्लादीनां कथं न जातिशब्दत्वम्? अत्रोच्यते—गुण-क्रिया-यदृच्छानां वस्तुत एकव्यक्तिकत्वादेकस्वरूपाणामप्याश्रयभेदाद् भेद एव लक्ष्यते, न तु वास्तवो भेदः। यथैकस्य मुखस्य खड्ग-मुकुर-तैलाद्यालम्बनभेदादिति। सामान्यलक्षणायोगात् पूर्वैर्वैयाकरणैर्जात्याद्यर्थचतुष्टये शब्दः सङ्केतितः, तद्वशेन शब्दस्य चतुर्द्धा प्रवृत्तिर्दृश्यते। जातिर्गुणः क्रिया द्रव्यं चेति ॥ ३ ॥

अथ मतान्तराण्याह—

**शब्दस्य जातिमेवार्थमाहुरन्ये विपश्चितः।**

---

१ व. ॰भूतक्रि॰। २ व. वक्तृयदृच्छयोर्डि॰। ३ अ. ॰यापिर्डि॰। ४ अ. तुला॰। ५ अ. तिकागु॰। ६ व. ॰नुप्रत्य॰। ७ प. ॰वृत्तिक॰।

हिम-पयः-शङ्खाद्याश्रितेषु तत्त्वदृत्त्यैव भिन्नेषु शुक्लादिषु गुड-तन्दुलादिपाकादिषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु बाल-वृद्ध-शुक-सारिकाद्युच्चरितेषु डित्थादिशब्देषु च यद्वशादनुवृत्तप्रत्ययोत्पत्तिस्तां शुक्लत्वादि[1]कां पाकत्वादिकां डित्थत्वादिकां च जातिमेव शब्दार्थमाहुर्मीमांसकाः ।

तथा—

केचिज्जातिमतीं व्यक्तिम्

जातेर्वाह-दोहादावनुपयुज्यमानत्वात् केवलव्यक्तेः पूर्वमेव दूषितत्वाच्च जातिमतीं व्यक्तिमेव शब्दार्थं वदन्ति नैयायिकाः ।

तथा—

अपोहमपरे पुनः ॥ ४ ॥

अपरे बौद्धाः पुनर्जातेर्विचारासहत्वात् व्यक्तौ तु क्षणिकत्वेन सङ्केतस्य कर्तुमशक्यत्वाच्चापोहमगोव्यावृत्तो गौरित्यादिरूपामितरव्यावृत्तिमेव शब्दार्थमिच्छन्तीति ॥ ४ ॥

अथ सर्वमताभ्युपगमेनाह—

तैरुक्तो यः स मुख्योऽर्थः शब्दस्तस्याभिधायकः ।
व्यापारस्त्वभिधैवास्य तमर्थमभिधास्यत[2]ः ॥ ५ ॥

तैर्महाभाष्यकारादिभिः । तमर्थेति तं मुख्यमर्थमभिधातुकामस्यास्य शब्दस्याभिधेति नाम्ना व्यापारः क्रिया । न हि क्रियां विना कर्त्ता कर्म निर्मातुमीष्टे इति ॥ ५ ॥

अथ[3] सामान्यतः शब्दस्य स्वरूपमुक्त्वा व्यतिरेकोक्तिपूर्वं काव्याङ्गं वैचित्र्यमुपदिशति—

किन्त्वेकार्थप्रवृत्तेषु शब्देष्वन्येषु सत्स्वपि ।
अभीष्टार्थाभिधायी यस्तस्य वैचित्र्यचारुता ॥ ६ ॥

---

१ अ. ०कां डि० । २ प. ०स्यतां । ३ प. शब्दस्य सा० ।

किन्त्विति व्यतिरेके सन्त्येव तुल्यार्था भूयांसः शब्दाः । किं पुनस्तेषु मध्ये यस्य विवक्षितार्थाभिधायित्वं तस्यैव वैचित्र्यरामणीयकम्, स एव च काव्याङ्गम् । यथा—

"द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥९॥"

अत्रैकार्थाः पिनाकिप्रभृतयः शब्दाः सन्त्येव, परं तानपाकृत्य कविना कपालिशब्द एवोपनिबद्ध इति विवक्षितार्थाभिधायित्वात् तस्यैव वैचित्र्यम् । शम्भुनिन्दा चात्र कविना विवक्षिता, तां चायमेव परिपूर्णां ब्रूते इति ॥६॥

अथ शब्दगतस्य कस्यचिद् वैचित्र्यस्यातिदेशमाह—

**दोषहान–गुणाधान–भूषणन्यासनिर्मितम् ।**
**[3]यत् तु शब्दस्य वैचित्र्यं तत् पुरः प्रथयिष्[4]यते ॥ ७ ॥**

पुर इति स्वस्वप्रस्तावे प्रथयिष्यते कथयिष्यत इति ॥ ७ ॥

अथ बहुप्रकारं शब्दस्य वैचित्र्यमाह—

**तस्यान्यदपि वैचित्र्यमस्ति प्रकृतिसम्भवम् ।**

तस्य शब्दस्य प्रकृतिसम्भूतं वैचित्र्यमन्यदप्यास्ति । वैचित्र्यमित्युत्तरत्रापि सर्वत्र योज्यम् । यथा—

*"रइकेलिहियनियंसणकराकिसलयरुद्धनयणजुअलस्स ।
रुद्दस्स तइअनयणं पव्वइपरिचुंबिअं जयइ ॥१०॥"

अत्र न नन्दतीत्याद्युक्तम्, किन्तु जयतीति इतरस्मान्नयनद्वयादुत्कर्षेण वर्तते लोकोत्तरेण प्रकारेण स्थगितत्वादिति जिरूपप्रकृतिजनितं वैचित्र्यम् ।

*रतिकेलिहृतनिवसनाकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

१ प. वाच्यांगं । २ प. शब्दस्य, अ. शब्दगतस्य वै० । ३ व. यद् पुनः शब्दवै० । ४ ब. नः ०ष्यति । ५ अ. ते अथ । ६ अ. ०अंस० ।

यथा वा—

"क्रीडारसेन रहसि स्मितपूर्वमिन्दोर्लेखां विकृष्य विनिबध्य च मूर्ध्नि गौर्या ।
किं शोभिताऽहमनयेति पिनाकपाणेः पृष्टस्य पातु परिचुम्बनमुत्तरं वः ॥११॥"

अत्र चुम्बनादन्यत्र समर्थमुत्तरमिति चुम्बिप्रकृतेरेव वैचित्र्यावहत्वम् । तथा प्रकरणादिसहाया काचिन्नामप्रकृतिरपि वैचित्र्यकारिणी । यथा—

" नाभियोक्तुमनृतं त्वमिष्यसे कस्तपस्विविशिखेषु चादरः ।
सन्ति भूभृति हि नः शराः परे ये पराक्रमवसूनि वज्रिणः ॥ १२ ॥ "

अत्र सत्यपि वज्रे शक्रस्य त एव पराक्रमवसूनीति शराणामुत्कर्षं द्योतयन् वज्रशब्दो वैचित्र्यकृत् ।

तथा—

धातु—नामात्मनस्तस्याः किमपि प्रत्ययोद्भवम् ॥ ८ ॥

प्रकृतिर्द्विधा धातुरूपा नामरूपा च । तस्या द्विरूपाया अपि किमपि किञ्चित् प्रत्ययादुद्भवतीति । तत्र धातुरूपाया आख्यातप्रत्यया यथा—

" असमसमरसम्पल्लम्पटानां भटानामवधिरवधि युद्धे येन हम्मीरवीरः ।
स किल सकलदृप्तक्षत्रनक्षत्रलक्ष्मीहरणकिरणमाली कस्य न स्यान्नमस्यः ? ॥१३॥

यथा वा—

" सोपवादमुपशान्तविचारं सानुतर्षमनुतर्षपदेन ।
ते मुहूर्तमथ मूर्त्तमपीप्यन् प्रेममानमवधूय वधूः स्वाः ॥ १४ ॥"

अनयोर्द्वयोरपि हन्तेः पाययतेश्चाद्यतन्यां वधि-पीप्यादेशौ ।

कृत्प्रत्ययाद् यथा—

" दिशः प्रियाः स्वा इव कान्तिमद्भिरलङ्करिष्णुर्नवमौक्तिकौघैः ।
देवः प्रभाणामधिभूर्विवेश नीरेशितुर्मध्यमुदग्ररागः ॥ १५ ॥ "

१ अ. ०पाणिः । २ अ. यस्त० । ३ प. ०शिशेषु, व. ०शेषेषु ।

यथा वा—

" समूलघातमघ्नन्तः परान् नोद्यन्ति मानिनः ।
प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥ १६ ॥ "

अनयोरिष्णु-णमुप्रत्ययौ ।

नामरूपायाः स्यादिप्रत्ययाद् यथा—

" पद्भ्यां गता यौवनिनश्च जाता दारैश्च संयोगमिताः प्रसूताः ।
दृष्टाः सुतास्तत्तनयप्रसूतिं द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा ॥ १७ ॥ "

अत्र पद्भ्यामिति तृतीया ।

यथा वा—

" आराद्धो मूर्द्धभिर्यत् तुहिनकरकलालङ्कृतिर्विंशतिर्यद्
दोष्णामुष्णांशुमित्रं भुवनपरिभवी यत्प्रतापप्ररोहः ।
यत् तत् कैलाश(स)शैलोद्धरणमपि मृषा तत् समस्तं तवाभूत्
विप्रल्लुण्टाकलीलां यदपहरसि नः पङ्कजाक्षीं परोक्षे ॥१८॥ "

अत्र दोष्णामिति षष्ठी ।

ङीप्रत्ययाद् यथा—

" कन्या काचिदिहापि कर्मणि पणः स्यादित्यसूयाचलैत्-
सीतापाङ्गमयूखमांसलमुखज्योत्स्नाविलुप्तीं दिवम् ।
कुर्वाणेन रघूद्वहेन चकृषे नारायणीयं धनुः
सन्धायाथ शरश्च भार्गवगतिच्छेदादमोघीकृतः ॥ १९ ॥ "

यथा च—

" मुनिरपि गुरुर्दिव्यास्त्राणां बभूव दिवौकसा-
मजगवधनुर्भङ्गे तावानहो ! स महोत्सवः ।

---

१ अ. ०रार्धमू० । २ अ. ०र्तिर्य० । ३ व. च यद् सीतोपां० ।

रघुपतिगुणक्रीतीमेतामवेहि जगत्त्रयीं
विपरिणमते दौर्जन्यं तु प्रभुत्वपदेन नः ॥ २० ॥ "

अनयोर्विलुप्ती-क्रीतीति च विशेषलक्षणात् स्त्रियां ङीप्रत्ययान्तौ ।

तद्धितप्रत्ययाद् यथा—

" उत्तालतालीवनसम्प्रवृत्तसमीरसीमन्तितकेतकीकाः ।
आसादिरे लावणसैन्धवीनां सेनाचरैः कच्छभुवां प्रदेशाः ॥ २१ ॥"

अत्र लावणसैन्धवीनामित्यत्रेदमर्थेऽण् ।

यथा वा—

" विन्ध्यस्य संस्तम्भयता महाद्रेर्निःशेषपीतोज्झितसिन्धुनाथः ।
प्रीत्योऽश्वमेधावभृथार्द्रमूर्त्तेः सौस्नातिको यस्य भवत्यगस्त्यः ॥२२॥"

अत्र पृच्छतीत्यर्थे इकण् ॥ ८ ॥

एवमन्यप्रत्ययोद्भवमपि बोद्धव्यं तद् यथा—

कर्तृत्यागात् क्रियानिष्ठैः कृतमन्यद् विशेषणैः ।

तादृग्विच्छित्त्यभावात् कर्तारं परिहृत्य क्रियामाश्रितैर्विशेषणैरन्यद् विहितम् ।

यथा—

" धिसं पुरो न जगृहे मुहुरिक्षुकाण्डं नापेक्षते स्म निकटोपगतां करेणुम् ।
सस्मार वारणपतिर्विनिमीलिताक्षमिच्छाविहारवनवासमहोत्सवानाम् ॥२३॥ "

यथा वा—

" इत्युद्गते शशिनि पेशलकान्तदूतीसंलापसंचलितलोचनमानसाभिः ।
अग्राहि मण्डनविधिर्विपरीतभूषाविन्यासहासितसखीजनमङ्गनाभिः ॥२४॥ "

यथा—

किञ्चिद्विशेषणस्फीत्या विशेष्यप्रतिपत्तिजम् ॥ ९ ॥

---

१ प. अ. कत्समु० । २ अ. प्रीताश्व० । ३ व. ०न्यथा प्र० । ४ प. ०व्यं य० । ५ व. ०निष्ठे । ६ व. अ. ०क्षा० । ७ अ. कान्ति० ।

किञ्चिदन्यद्विशेषणस्य स्फीत्या सामर्थ्येन विशेष्यप्रतीतिं करोतीति । यथा—

" वि(व)शिष्टो(ष्ठो)क्तैर्मन्त्रैर्दधति जगतामाभ्युदयिकीं
धुरं सम्प्रत्येते दिनकरकुलीनाः क्षितिभुजः ।
गृहे येषां रामादिभिरपि कलाभिश्चतसृभिः
स्वयं देवो लक्ष्मीस्तनविषमचारीगजपतिः ॥ २५ ॥ "

अत्र च लक्ष्मीस्तनेत्यादिविशेषणं स्वसामर्थ्यान्नारायणप्रतीतिं तनोतीति ॥९॥

तथा—

सर्वनामादिसंस्थाप्यसंवृतिस्थापितं परम् ।

परं किञ्चित् सर्वनाम्नाऽऽदिशब्दात् प्रातिपदिकेन वा संस्थाप्या[2]ऽवस्थापनीया याऽसौ संवृतिः संवरणं तया स्थापितं निर्मितम् । यथा—

" याते द्वारवतीं तदा मधुरिपौ तद्दत्तझम्पानतां
कालिन्दीतटरूढवञ्जुललतामालम्ब्य सोत्कण्ठया ।
तद् गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥ २६ ॥ "

अत्र राधायाः प्रेमोत्कण्ठाभरस्तच्छब्देन संवृत्य कार्यद्वारेण प्रकाशितचारुत्वमुन्मीलयति ।

यथा च—

" निद्रानिमीलितदृशो मदमन्थरायाः नाप्यर्थवन्ति न च यानि निरर्थकानि ।
अद्यापि मे वरतनोर्मधुराणि[3] तस्यास्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥२७॥"

अत्र स्वानुभवसंवेद्यमपि वस्तु वक्तुमशक्यमपि किमपीति पदेन संवृतं चमत्कुरुते ।

यथा वा—

" नृचारम्भाद् विरतरभसस्तिष्ठ तावन्मुहूर्तं
यावन्मौलौ श्लथमचलतां भूषणं ते नयामि ।

---

१ व. ०प्रीतिं । २ प. ०प्या ऽनवस्थापनीयोऽसौ । ३ अ ०तनौ म० ।

इत्याख्याय प्रणयमधुरं कान्तया योज्यमाने
चूडाचन्द्रे जयति सुखिनः कोऽपि शर्वस्य गर्वः ॥ २८ ॥ "

अत्र शर्वगर्वस्य वचनागोचरोत्कर्षशालित्वं कोऽपीत्यनेन संवृतं सौन्दर्यमधिरोहति ।

प्रातिपदिकोदाहरणं यथा—

" दुर्वचं तदथ मा व(च)भून्मृगस्त्वय्यसौ यदकरिष्यदोजसा ।
नैनमाशु यदि वाहिनीपतिः प्रत्यपत्स्यत शितेन पत्रिणा ॥ २९ ॥ "

अत्र त्वामहनिष्यदिति महापातकमिव वक्तुमयुक्तमेवेति दुर्वचपदेन संवृतं नितरां कमनीयम् ।

यथा च—

"तत् तादृशं कथमुदेति मनुष्यलोके तेजोऽद्भुतं निरभिसन्धि न तावदेतत् ।
तान्येव चास्य चरितानि दशाननस्य हा वत्स ! शान्तमथवा दशकन्धरोऽसि ॥३०॥"

अत्र हा वत्सेत्यादिना किमप्यमङ्गलं वक्तुमारभ्य शान्तमथवेत्यादिप्रातिपदिकैः संवृतं वैचित्र्यमुन्मुद्रयति ।

**सामानाधिकरण्येऽन्यद् भिन्नसङ्ख्यान–लिङ्गयोः ॥ १० ॥**

अन्यदपरं सङ्ख्यान–लिङ्गयोर्भिन्ने सङ्ख्याने लिङ्गे च सङ्ख्यान–लिङ्गे वा ययोः शब्दयोस्तौ तथा तयोः सामानाधिकरण्ये तुल्याधिकरणत्वे । यथा–

" द्विरुक्तिः क्षीरोदः स्फुरति पुनरुक्तं हिमगिरिः
समस्या कैलाश(स)स्तुहिनरुचिरोचींषि यमकम् ।
तवारातिव्रातद्विरदकुलशार्दूल ! यशसा–
मनुप्रासः काशत्रिपुरहरहासप्रभृतयः ॥ ३१ ॥ "

अत्र पूर्वत्रये लिङ्गयोरुत्तरद्वये तु वचनयोर्भेदः ।

---

१ प. ०क्षिपु० । २ प. ०रत्नये । ३ प. ०नभे० ।

यथा वा—

" ते रत्नाकरसीमभूतलमिलद्भूपालमालस्थल-
स्वेदक्षालितपादपङ्कजरजसस्तस्यान्ववायेऽभवन् ।
दुर्वारासुरचक्रविक्रमकथासम्भ्रान्तजम्भान्तक-
प्राणत्राणपवित्रपौरुषकलापात्रं धरित्रीभुजः ॥ ३२ ॥ "

अत्र लिङ्गसङ्ख्ययोर्द्वयोरपि भेदः ॥ १० ॥

तथा—

**सम्भवेऽप्यन्यलिङ्गस्य स्त्रीलिङ्गविधिजं परम् ।**

परं किञ्चित् सम्भवत्यप्यन्यस्मिन् लिङ्गे स्त्रीलिङ्गविधानजनितं स्त्रीति नाम्नोऽप्यानन्ददायित्वात् । यथा—

" प्रवृद्धतापाश्चिरविप्रयोगतो मुहुर्वहन्ती जनशोचनीयताम् ।
श्लिष्यन्ति सर्वाङ्गममी महीभृतां तटीरिदानीमुचितं पयोमुचः॥३३॥ "

अत्र सत्यपि त्रिलिङ्गत्वे तटशब्दस्य स्त्रीलिङ्गनिर्देशो नायकव्यवहारव्यञ्जकत्वाच्चमत्कारी ।

यथा च—

" मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन् माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥३४॥"

अत्र मृगाश्चेति सम्भवत्यपि कृपामयत्वख्यापनाय मृग्यश्चेत्युक्तम् ।

तथा—

**अमुख्ये कारके मुख्याध्यारोपाध्यासि किञ्चन ॥ ११ ॥**

परममुख्ये कारके करणादौ मुख्यस्य कर्तुरध्यारोपस्तत्त्वव्यपदेशस्तमध्यास्त इत्येवंशीलम् । यथा—

---

१ व. तथा । २ प. ०न्यस्मिन् । ३ व. ०नी दिल० । ४ व. यन्तो दि० ।

" चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्द्धस्तव परशुना लज्जते चन्द्रहासः ॥ ३५ ॥"

यथा वा—

" याच्ञादैन्यपरिग्रहप्रणयिनी नेक्ष्वाकवः शिक्षिताः
सेवासंचलितः कदा रघुकुले मौलौ निबद्धाञ्जलिः ।
सर्वं तद् विहितं तदप्युदधिना नैवोपरोधः कृतः
पाणिः सम्प्रति मे हठात् किमपरं स्प्रष्टुं धनुर्वाञ्छति ? ॥३६॥ "

अनयोश्चन्द्रहासस्य पाणेश्च करणभूतस्यापि कर्तृत्वाध्यारोपः ॥ ११ ॥

तथा—

## धातूपसर्गयोर्योगात् कारकोऽन्यत्वजं परम् ।

परं किञ्चिद् धातुयोगादुपसर्गयोगादुभययोगाच्च कारकेभ्योऽन्यः सम्बन्धादिस्तस्य भावस्तत्त्वं तस्माज्जातम्, यदि वा कारकस्यान्यत्वं कारकान्तरत्वं तस्माज्जातम् । तत्र धातुयोगे यथा—

" प्रवृत्त एव स्वयमुज्झितश्रमः क्रमेण पेष्टुं भुवनद्विषामसि ।
तथापि वाचालतया युनक्ति मां मिथस्त्वदाभाषणलोलुपं मनः ॥३७॥"

अत्र पिष्धातुयोगे कर्मत्वाभावाद् भुवनद्विषामित्यत्र सम्बन्धे षष्ठी ।

यथा च—

" मनः समाधिस्थिरतामुपेत्य किमङ्ग ! तस्याः स्मरसि प्रियायाः ? ।
एवं हि लक्ष्मी(क्ष्यी)भवसि प्रकामं स्मरस्य चापार्पितसायकस्य ॥३८॥"

अत्र स्मृधातुयोगे प्रियाया इत्यत्र पूर्ववत् षष्ठी ।

१ प. शब्दव्य० । २ अ. मूलौ निबद्धो । ३. प. मोहवान् । ४ व. स्रष्टुं । ५ प. ०णान्य० । ६ व. ०द्रुम० । ६ अ. ०व का० । ७ व. ०वद्विषा० । ८ प. अ. ०धिः स्थि० । ९ अ. लक्ष्मीभ० ।

उपसर्गयोगे यथा—

" भीष्मग्रीष्मप्रगुणितवपुस्तापनिर्वापहेतो-
र्वृक्षं वृक्षं प्रतिविनिहिता दृष्टयः पान्थसार्थैः ।
छायाभोगात् कवलितवता चण्डरोचिःप्रचारं
किन्तु ध्वस्तो वटविटपिना क्लेशलेशोऽप्यमीषाम् ॥ ३९ ॥"

अत्र वृक्षे वृक्षे विनिहिता इत्यधिकरणप्राप्तौ प्रत्युपसर्गयोगे वीप्सायां द्वितीया। प्रतेश्चात्र योग्यतयोपसर्गत्वम् ।

उभययोगे यथा—

" अध्यासामासुरुत्त(त्तु)ङ्गहेमपीठानि यान्यमी ।
तैरूहे केसरिक्रान्तत्रिकूटशिखरोपमा ॥ ४० ॥"

अत्र धातूपसर्गयोगे हेमपीठानीत्याधारस्य कर्मत्वम् । एवमन्यदपि ज्ञेयम् ।

तथा—

**किञ्चिदप्यव्ययीभावसमासग्रथितोदयम् ॥ १२ ॥**

किञ्चिदप्यपरमव्ययीभावसमासेन रचितोदयम् । यथा—

" पारेजलं नीरनिधेरपश्यन् मुरारिरानीलपलाशराशीः ।
वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः ॥ ४१ ॥"

मध्येसौधमग्रेवणमित्याद्यप्यनुसर्तव्यम् ॥ १२ ॥

तथा—

**किमप्यलुप्तसमासोत्थम्**

किमप्यन्यदलुप्तसमासादुत्तिष्ठति । यथा—

" त्वं तास्ताः स्मृतवान् ऋचो दशतयीस्त्वत्प्रीतये यज्वभिः
स्वाहाकारमुपाहितं हविरिह त्रेताग्निराचामति ।
त्वां क्षीरोदजलेशयं क्रतुलिहः पृथ्वीमवातीतरन्
दुर्वृत्ता दशकन्धरप्रभृतयो निग्राहितारस्त्वया ॥ ४२ ॥"

---

१ ब. ०गुणीत० । २ प. ०पमाः । ३ ब. कर्मक० । ४ अ. ०द्प८ । ५ ब. किम० । ६ ब. ०लाश० ।

एवमन्तेवासि–वनेवासि–प्रावृषिज–पश्यतोहरप्रभृतयोऽपि द्रष्टव्याः ।

तथा—

**अन्यदन्यसमासजम् ।**

अन्यत् किमप्यव्ययीभावादेरन्यस्मात् तत्पुरुषप्रमुखात् समासाज्जातम् ।

यथा—

" यः क्षत्रदेहं परितक्ष्य टङ्कैस्तपोमयैर्ब्राह्मणमुच्चकार ।
परोरजोभिः स्वगुणैरगाधः स गाधिपुत्रोऽपि गृहान्नुपैति ॥ ४३ ॥ "

अत्र परोरजोभिरिति तत्पुरुषसमासः ।

यथा च—

" उभौ भुवनजङ्घालतेजसौ तौ रघोः कुलम् ।
मण्डयामासतुर्व्योम सूर्याचन्द्रमसाविव ॥ ४४ ॥ "

अत्र द्वन्द्वसमासे सूर्यशब्दस्यात्वम् । एवं वृषस्कन्धाविव स्कन्धौ यस्य स वृषस्कन्ध इति बहुव्रीह्यादयोऽपि बोद्धव्याः ।

तथा—

**विपर्यासवशं किञ्चित् सङ्ख्यायाः पुरुषस्य च ॥ १३ ॥**

किञ्चिदितरत् सङ्ख्यान्यथाभावस्य पुरुषान्यथाभावस्य च वशंवदम् । यथा—

" कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति बाष्पस्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥ ४५ ॥ "

अत्राहमिति वक्तव्ये वयमिति[5] बहुवचनमनन्तरङ्गत्वख्यापनेन ताटस्थ्यद्योतनार्थम् ।

पुरुषविपर्यासो यथा—

" कौशाम्बीं परिभूय नः कृपणकैर्विद्वेषिभिः स्वीकृतां
जानास्येव तथा प्रमादपरतां पत्युर्नयद्वेषिणः ।

---

१ अ. ०सिप्रा० । २ ब. महा० । ३ अ. तृतीयास० ४ अ. ०श्रीह्रिप्रभृतयो । ५ ब. ०तिव० ।

स्त्रीणां च प्रियविप्रयोगविधुरं चेतः सदैवात्र मे
वक्तुं नोत्सहते मनः परमतो जानातु देवी स्वयम् ॥ ४६ ॥"

अत्र जानीहि त्वमिति मध्यमपुरुषे प्रयोक्तव्ये 'जानातु देवी'' इति प्रथमपुरुषप्रयोगश्चमत्कारी ॥ १३ ॥

तथा—

किञ्चित् काले परत्रैव कालान्तरविभक्तिजम् ।

किञ्चिदपरं परस्मिन् काले तदन्यकालोद्भवविभक्तिसम्भवम् । यथा—

" स्मरस्यदो दाशरथिर्भवन् भवानमुं वनान्त[ा]द् वनिताऽपहारिणम् ।
पयोधिमाविद्धचलज्जलाविलं विलङ्घ्य लङ्कां निकषा हनिष्यति ॥ ४७ ॥"

अत्र स्मृधातावुपपदस्थे यच्छब्दाप्रयोगे हनिष्यतीत्यतीतकाले भविष्यन्ती ।

तथा[3]—

अन्यद् विडम्बिप्रमुखधातुस्थाप्योपमानजम् ॥ १४ ॥

अन्यत् किमपि विडम्बिप्रमुखैर्धातुभिः स्थाप्यं यदुपमानं तस्माज्जातम् । यथा—

" तमेवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम् ।
अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः ॥ ४८ ॥"

प्रमुखशब्दात् सन्धत्तेप्रभृतयोऽपि । यदुक्तम्—

" विडम्बयति सन्धत्ते द्रुह्यति प्रतिगर्जति ।
आक्रोशत्यवजानाति कदर्थयति निन्दति ॥ ४९ ॥

स्पर्धते जयति द्वेष्टि हसतीर्ष्यत्यसूयति ।
तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ॥ ५० ॥

तेन सार्द्धं विगृह्णाति तुलां तेनाधिरोहति ।
तत्पदव्यां पदं धत्ते तस्य लक्ष्मीं विगाहते ॥ ५१ ॥

तमन्वेत्यनुबध्नाति तच्छीलं च निषेवते ।
तस्य चानुकरोतीति धातवः साम्यसूचिनः ॥ ५२ ॥" ॥ १४ ॥

---

१ अ. य. ध्वी प्र० । २ अ. ०बन्ध० । ३ ब. यथा ।

तथा—

**अपरं प्रत्ययान्तेभ्यः प्रत्ययान्तरनिर्मितम् ।**

अपरं किमपि प्रत्ययान्तेभ्यः[1] शब्देभ्यः परं यत् प्रत्ययान्तरं तेन निर्मितम् ।

यथा—

" लीनं वस्तुनि येन सूक्ष्मसुभगं तत्त्वं गिरा कृष्यते
निर्मातुं प्रभवेन्मनोहरमिदं वाचैव यो वा बहिः ।
वन्दे द्वावपि तावहं कविवरौ वन्देतरां तं पुन-
र्यो विज्ञातपरिश्रमोऽयमनयोर्भारावतारक्षमः ॥ ५३ ॥ "

अत्र वन्देतरामिति त्यादिप्रत्ययात् तराम्प्रत्ययः ।

यथा वा—

" पदं सपदि कस्य न स्फुरति शर्करापाकिमं
रसालरससेकिमं भणितिवैभवं कस्य न ? ।
तदेतदुभयं किमप्यमृतनिर्झरोद्गारिभि-
स्तरङ्गयति यो रसैः स पुनरेक एव क्वचित् ॥ ५४ ॥ "

अत्र भावप्रत्ययान्तेभ्य इमप्रत्ययः । एवं व्यात्युक्षी-सांराविणादयोऽपि ज्ञेयाः ॥

तथा—

**भागमोन्मीलितं किञ्चित्**

किञ्चिदन्यन्भागमोन्मीलितमाविष्कृतम् । यथा—

" जाने सख्यास्तव मयि मनः संभृतस्नेहमस्मा-
दित्थम्भूतां प्रथमविरहे तामहं तर्कयामि ।
वाचालं मां न खलु सुभगम्मन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद् भ्रातरुक्तं मया यत् ॥५५॥ "

यथा च—

" भुजविटपमदेन व्यर्थमन्धम्भविष्णुर्विगपसरसि चौरङ्कारमाक्रुश्यमानः ।
त्वदुरसि विदधातु स्वौमपस्कारकेलीं कुटिलकरजकोटिक्रूरकर्मा जटायुः॥५६॥"

---

१ ब. ०भ्यः परं । २ ब. ०व्याहृत । ३ भ. रसः । ४ ब. ०द प्रा० । ५ ब. ०त्वाम० ।

अत्रोपस्कारेति वैचित्र्यान्तरमप्यस्ति । 'दाहोऽम्भः प्रसृतिं पच' इत्याद्यन्यदपि स्वयमेवाभ्यूह्यम्[1] ॥

तथा—

**समासान्तकृतं परम् ॥ १५ ॥**

परं किञ्चन[3] समासान्तेन कृतं विहितम् । यथा—

"पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तत्र हेतुस्त्वद्ब्रह्मवर्चसम्[4] ॥ ५७ ॥"

अत्र पुरुषायुष[5]-ब्रह्मवर्चसशब्दयोः समासान्तः ।

यथा च—

"कौन्तेयादिपुराणपार्थिवकथासङ्कीर्तनप्रक्रमे
वैरञ्चे सदसि त्वदीययशसि ब्रह्मर्षिभिः संस्तुते ।
सृष्टिं कीटमुखार्पितां लिपिमिवानैदंयुगीनां तव
ध्यात्वाऽन्तर्मनसं विभुः स मुमुदे राजेन्द्रराजो वभ्रुः ॥५८॥"

अत्र चान्तर्मनसमित्यत्र, अनैदंयुगीनामित्यपि वैचित्र्यान्तरम् ॥ १५ ॥

तथा—

**किमप्यचेतनस्यापि चेतनव्यवहारजम् ।**

किमप्यपरमचेतनस्यापि वस्तुनश्चेतनव्यवहाराध्यारोपसम्भवम् । यथा—

"स्तनद्वन्द्वं मन्दं स्नपयति बलाद् बाष्पनिवहो
हठादन्तःकण्ठं लुठति सरसः पञ्चमरवः ।
शरज्ज्योत्स्नापाण्डुः पतति च कपोलः करतले
न जानीमस्तस्याः क इव हि विकारव्यतिकरः ॥५९॥"

यथा च—

"त्वं रक्षसा भीरु ! यतोऽपनीता तं मार्गमेताः कृपया लता मे ।
अदर्शयन् वक्तुमशक्नुवत्यः शाखाभिरावर्जितपल्लवाभिः ॥६०॥"

---

१ प. ०स्मार० । २ प. व. ०मूह्यम् । ३ व. किंचित् । ४ व. ०स्तद्ब्र० । ५ व. ०षजीवयोः । ६ व. ०ठमिवा० ।

अनयोरचेतनानामपि बाष्पनिवहादीनां च लतानां च चेतनव्यवहारा-व्यारोपाद् विरहव्यथाऽतिशयेन नायिकायाः स्वयमकिञ्चित्करत्वं लतानां च कृपार्द्रत्वं क्रमात् प्रतीयते ।

तथा—

## सुप्–तिङ्व्युत्पत्तिजं किञ्चित्

किञ्चिदितरत् सुपां स्यादीनां तिङां त्यादीनां च या व्युत्पत्तिर्विशेषविधि-रूपा तस्याः सकाशाज्जातम् ।

तत्र सुपां यथा—

" तवार्हतो नाभिगमनेन तृप्तं मनो नियोगक्रिययोत्सुकं मे ।
अप्याज्ञया शासितुरात्मनो वा प्राप्तोऽसि सम्भावयितुं वनान्माम् ॥६१॥ "

अत्र नियोगक्रिययेत्युत्सुकशब्दयोगादधिकरणे तृतीया ।

तिङां यथा—

" पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा वशी य इत्थमस्वास्थ्यमहर्निशं दिवः ॥६२॥ "

अत्र चक्रेरूपसामान्यार्थधातुसम्बन्धिधात्वर्थानां समुच्चयेऽतीतकाले हिप्रत्ययः ।

यथा च—

" जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः ।
असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥६३॥ "

अत्र स्थेयोपदिष्टनिर्णयवृत्तेस्तिष्ठतेरात्मनेपदम् । एवमन्याऽपि सुप्–तिङ्व्यु-त्पत्तिर्ज्ञेया ।

तथा—

## किञ्चिद् बन्धनिबन्धनम् ॥ १६ ॥

किञ्चिदन्यद् बन्धो गुम्फविशेषः स निबन्धनं कारणं यस्य तद् बन्ध-निबन्धनं शब्दस्य वैचित्र्यम् । बन्धस्वरूपं चानन्तरमेव वक्ष्यते ।.१६॥

१ व. नाभिगमेन । २ अ. प. हर्दिवं । ३ अ ०र्थानां स० । ४ प. चैनं ।

अथ बन्धमाह—

शाणोल्लिखितमाणिक्यकान्तिकेलिपदं पदम् ।
अर्धनारीश्वरस्पर्द्धी यत्र संघट्टनक्रमः ॥ १७ ॥

गिरां किमपि लावण्यं तरङ्गयति यः परम् ।
वस्तु किञ्चिदिवाभाति न किञ्चिदपि यद्वशात् ॥१८॥

मज्जतीव क्षणं चेतः स्नातीव सुधया क्षणम् ।
माद्यतीव क्षणं यत्र विलीयत इव क्षणम् ॥१९॥

अमन्दताद्विदानन्दकन्दकन्दलनाम्बुदः ।
कोऽप्यसौ वाक्यविन्यासः कवेर्बन्ध इति स्मृतः ॥२०॥

असौ कोऽप्यनिर्वाच्यमहिमा कवेः प्रतिभापल्लवितवर्णनानिपुणस्य वाक्यविन्यासो वाक्यस्य पदसमुदायरूपस्य यो विन्यासो विशिष्टमितरवैलक्षण्येन न्यसनं स बन्ध इति स्मृतः पूर्वैराम्नातः । कीदृशो वाक्यविन्यासः ? अमन्देति अमन्द उल्लाघो लक्षणया स्फूर्तिमान् यस्तद्विदानन्दस्तद्विदां बन्धसौन्दर्यवेदिनामानन्दः स एव कन्दः प्रथमं स्तम्भादिकारणं । तस्य कन्दलनमङ्कुरोद्भेदस्तस्याम्बुदः पयोदः । वाक्यविलासो हि सहृदयाह्लादक एव काव्योपकारी । पुनः कीदृश इत्याह—'शाण'इति यत्र यस्मिन् पदं वर्तते । कीदृशं शाणायामुल्लिखितमुत्तेजितं यन्माणिक्यं प्रधानरत्नं तस्य कान्तिरौज्ज्वल्यं तस्याः केलिपदं क्रीडाऽऽस्पदम् । काव्ये हि पदमुज्ज्वलमेव कार्यम् । तथा यत्र संघट्टनक्रमः पदसन्दर्भक्रमः । कीदृशः ? अर्धनारीश्वरस्पर्द्धी अर्धनारीश्वरेण स्पर्द्धते नितरामलक्ष्यसन्धित्वात् । पदयोजना ह्येकपदवत् प्रतिभातीव विधेया । तथा यः परं प्रकृष्टं गिरां वाचां लावण्यं कान्तिविशेषः किमप्यपूर्वं तरङ्गयति पुष्णाति । तथा यद्वशाद् यत्पारतन्त्र्याद् वस्तु काव्यार्थरूपं न किञ्चिदप्यकाम्यमपि किञ्चिदिव काम्यमिवाभाति शोभते । यदाह—

---

१ व. कृपया । २ म. किंविशिष्टो । ३ अ. व. ०भांतीति ।

" किन्त्वस्ति काचिदपराऽपि पदानुपूर्वी यस्यां न किञ्चिदपि किञ्चिदिवावभाति ।
आनन्दयत्यथ च कर्णपथं प्रयान्ती चेतः सताममृतवृष्टिरिव प्रकृष्टा ॥६४॥ "

तथा यत्र यस्मिन्नानन्दामृतैकसरासि सहृदयानां मनः क्षणं मज्जतीव मग्नमिव । क्षणं सुधया स्नातीव पीयूषाब्धस्नानमिव । क्षणं माद्यतीवात्मविस्मृत्या जातोन्मादमिव । क्षणं विलीयत इव निःस्पन्दत्वाद् विलीनमिव भवतीत्येवम्भूतो हि कवेर्वाक्यविन्यासो बन्धशब्दाभिधेयः कवितामलङ्करोति । तदपि शब्दवैचित्र्यमेव । अत्रोदाहरणं यथा—

" नेत्रेन्दीवरिणी मुखाम्बुरुहिणी भ्रूवल्लिकल्लोलिनी
वाहुद्वन्द्वमृणालिनी यदि पुनर्वापी भवेत् सा प्रिया ।
तल्लावण्यजलावगाहनजडैरङ्गैरनङ्गानल—
ज्वालाजालमुचस्त्यजेयमसमाः प्राणच्छिदो वेदनाः ॥६५॥" इति॥२०॥[2]

एवमभिधामूलं शब्दवैचित्र्यमभिधायोपचारमूलमाह—

**कथञ्चिल्लब्धबाधस्य तत्प्रत्यासत्तिशालिनि ।**
**मुख्यस्यार्थस्य सामान्यमन्यार्थेऽतिशयाय यत् ॥२१॥**

**शब्देनारोप्यते सेयमुपचारविचित्रता ।**
**रूपकादीनलङ्कारान् या प्रसूते रसोत्तरान् ॥२२॥[3]**

गङ्गायां घोष इत्यादौ गौर्वाहीक इत्यादौ च मुख्यस्यार्थस्य प्रवाहादेर्गोपिण्डादेश्च कथञ्चिद् घोषाद्यधिकरणत्वासम्भवादिना सास्नादिमत्त्वाद्यदर्शनाच्च प्रत्यक्षादिप्रमाणादिना केनापि प्रकारेण लब्धबाधस्य शब्देनाभिधातुमशक्यत्वाद् बाधितस्वरूपस्य यत् सामान्यं गङ्गात्वादिलक्षणं गोत्वादिलक्षणं च तदन्यस्मिन्नर्थे तटादिरूपे वाहीकादिरूपे च शब्देन गङ्गादिना गवादिना च यदारोप्यते सम्रुपचर्यते । कीदृशे पुनरन्यस्मिन्नर्थे तत्प्रत्यासत्तिशालिनि तस्य मुख्यस्यार्थस्य या प्रत्यासत्तिः सम्बन्धादिरूपा निकटता तया शालमाने शोभमाने । न ह्यप्रत्यासन्ने क्वाप्युपचारः प्रवर्तते, यत्र तत्राप्युपचारप्रसङ्गात् । किमर्थमारोप्यत

१ अ. प. वृष्टि० । २ प. चतुर्भिः कुलकम् । ३ प. यामलम् । ४ प. प्रमाणेन ।

इत्याह—अतिशयाय पावनत्वादिधर्मप्रतिपत्तिरूपं ताद्रूप्यप्रतिपत्तिरूपं च कमप्यतिशयमाविष्कर्तुम् । एतदेवोपचारस्य फलम्, न हि निष्फला प्रवृत्तिः प्रेक्षावतामिति । सेयं प्राप्तप्रसिद्धिरुपचारविचित्रता । उपचरणमन्यस्मिन्नन्यस्यारोपणमुपचारः स च लक्षणाऽपरपर्यायः शब्दस्य व्यापारविशेषस्तेन विचित्रता । तत्स्वरूपान्तरमाह—'रूपकेति' या रूपकप्रभृतीनलङ्कारान् जनयति । रूपकापह्नुत्यतिशयोक्तिप्रभृतयो ह्यलङ्कारा उपचारमूला इति । रूढिर्लक्षणा त्वभिधातुल्यैव, तेनात्र नोदाह्रियत इति ॥ २१–२२ ॥

अथ प्रत्यासत्तिभेदानाह—

अभिधेयेन सम्बन्धात् सादृश्याद् वैपरीत्यतः ।
क्रियायोगाच्च तामाहुः प्रत्यासत्तिं चतुर्विधाम् ॥ २३ ॥

अभिधेयेन मुख्यार्थेन सम्बन्धात् समीप-समीपिभाव-धार्य-धारकभाव-कार्यकारणभाव—तादर्थ्य-स्व-स्वामिभावादिरूपात् । यथा गङ्गायां घोष इत्यादिषु समीपसमीपिभावादिसम्बन्धः । तथाऽभिधेयेनैव सादृश्याद् गुणसाम्यरूपात् । यथा गौर्वाहीक इत्यादिषु जाड्य—मान्द्यादिगुणसाम्यम् । तथाऽभिधेयेनैव वैपरीत्यतो विपर्ययरूपात् । यथा अभद्रमुखे भद्रमुख इत्यादिषु प्रत्यक्षादिप्रमाणसिद्धं वैपरीत्यमस्त्येव । तथाऽभिधेयेनैव क्रियायोगात् संदृशव्यापारसम्बन्धात् । यथा अतक्षा तक्षा इत्यादिषु काष्ठतक्षणरूपसंदृशव्यापारसम्बन्धः ।

यथा वा—

" पृथुरसि गुणैर्मूर्त्या रामो नलो भरतो भवान्
महति समरे शत्रुघ्नस्त्वं तथा जनकः स्थितेः ।
इति सुचरितैर्मूर्तो विभ्रच्चिरन्तनभूभृतां
कथमसि न मान्धाता देव ! त्रिलोकविजय्यपि ॥६६॥ "

अत्र पृथुप्रभृतिशब्देषु श्लेषसमुद्दीपितेन गुणसाम्यनिबन्धनेनोपचारेण वर्ण्यमानस्य पुराणभूपालरूपधारकत्वम् । शत्रुघ्न—जनकशब्दयोस्तु घात-जनन-

---

१ ब. किम० । २ ब. ०मान्य० । ३ ब. शब्दः सव्या० । ४ ब. रूपल० । ५ प. युगलम् । ६ अ. ०वकार्य० । ७ प. ०कभा० । ८ प. ०सामान्यरू० । ९ अ. मांद्यजा० । १० ब. सादृस्य० । ११ ब. ०कस्थि० ।

लक्षणसहशब्दव्यापारजन्यनैवोपचारेण ताद्रूप्यप्रतिपत्तिरिति सम्बन्धादिभ्यस्तु-र्म्यस्तां पूर्वोक्तां प्रत्यासत्तिं चतुर्विधां चतुःप्रकारामाहुः कथयन्तीति ॥ २३ ॥

अथोपचारविचित्रताभेदानाह—

**सारोपा लक्षणाऽऽरोपविषयारोप्यभेदभृत् ।**
**आरोप्यापह्नुतेऽन्यस्मिन् सैव साध्यवसानिका ॥ २४ ॥**

लक्षणा प्रस्तुतोपचारविचित्रता । आरोपविषयो वाहीकादिरारोप्यं च मुख्यवृत्त्या गोत्वादिसामान्यम् । तच्चाश्रयाविनाभूतत्वादाश्रयं गोपिण्डादिकमाक्षिपतीति गुणवृत्त्या स एवारोप्यस्तयोर्भेदं सामानाधिकरण्येन पृथक् पृथक् प्रयोगं या बिभर्ति सा सारोपेत्युच्यते । यथा गौर्वाहीकः, आयुर्घृतं च । तथा आरोप्येण गोत्वादिसामान्याश्रयेणापह्नुते निगीर्णेऽन्यस्मिन्नारोपविषये वाहीकादौ सति सैवोपचारविचित्रता साध्यवसानेति कथ्यते । यथा गौरेवायम्, आयुरेवेदम् ॥ २४ ॥

**द्विप्रकाराऽपि साद्दश्याद् या सा गौणीति गीयते ।**
**प्रत्यासत्तेस्तु याऽन्यस्याः सा शुद्धेति प्रकीर्तिता ॥२५॥**

द्विप्रकाराऽपि सारोपा साध्यवसाना च या साद्दश्याद् गुणसाम्याज्जायते सा गुणेभ्य आगतत्वाद् गौणीति गीयते कथ्यते । यथा गौर्वाहीकः, गौरेवायम् । अत्र जाड्य–मान्द्यादिगुणसाद्दश्यादुपचारः । ते च स्वार्थसहचारिणो गुणा जाड्य–मान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित् । अत्र गोशब्दस्य गोत्वं स्वार्थस्तेन सह गोपिण्डे चरन्तीति स्वार्थसहचारिणः । तांश्च गोपिण्डगतान् गुणान् लक्षयित्वा तत्साद्दश्याद् वाहीकगुणान् लक्षयन् गोशब्दो वाहीकं लक्षयतीत्यर्थः । अत्र गोशब्दप्रवृत्त्या गोत्वसहचराणां गुणानां लक्ष्यमाणत्वम् । लक्ष्यमाणानां च गोशब्दप्रवृत्तिनिमित्तत्वमित्यन्योन्याश्रयमाशङ्कमानाः स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते । न तु परार्थोऽभिधीयते ' इत्यन्ये । अत्र गोशब्देनेति शेषः । तथाऽभिधीयते लक्षणाव्यापारेणेति शेषः । गौणलक्षणायां गुणानां

१ व. अ. ०त्रभे० । २ व. ०व्यवि० । ३ प. ०यवि० । ४ अ. ०क् प्र० । ५ व. ०विसा० । ६ प. गौणेति । ७ व. लक्ष० । ८ व. ०चारि० । ९ व. ०णा च । १० अ. ०रिणो भे० ।

निमित्तत्वमेव, न पुनर्लक्ष्यत्वमित्यभिसन्धाय साधारणगुणाश्रयणेन परार्थ एव लक्ष्यत इत्यपरे। अस्माकमप्ययमेव पक्षः। अत्र [1]भेदद्वयेऽपि क्रमात् ताद्रूप्य-प्रतीतिरूपः सर्वथैवाभेदावगमरूपश्चातिशयो व्यङ्ग्यः। या पुनर्द्विप्रकाराऽपि सादृश्यादन्यस्याः सम्बन्ध-वैपरीत्य-क्रियायोगरूपायाः प्रत्यासत्तेः प्रवर्त्तते सा शुद्धेति[2] प्रकीर्तिता कथिता। यथा[3] आयुर्घृतमायुरेवेदमित्यादि। अत्र कार्यकारण-भावादिलक्षणात् सम्बन्धात् शुद्धा। इह द्वयोरपि भेदयोः क्रमादन्यवैलक्षण्येना-व्यभिचारेण च कार्यकारित्वादिरतिशयो व्यङ्ग्यः। क्वचित् तादर्थ्यादुपचारो यथा– इन्द्रार्था स्थूणा इन्द्रः १। क्वचित् स्वस्वामिभावाद् यथा–राजकीयः पुरुषो राजा २। क्वचिदवयवावयविभावाद् यथा– अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः। सर्वाऽप्येषा शुद्धा। एवं वैपरीत्य-क्रियायोगाभ्यामपि शुद्धैव ॥ २५ ॥

शुद्धाया एव पुनर्भेदद्वयमाह—

**स्वार्थसिद्ध्यै पराक्षेपे साऽप्युपादानजा क्वचित्।**
**परस्मै चार्पणे स्वस्य क्वापि लक्षणलक्षिता ॥ २६ ॥**

साऽपि शुद्धा कुन्ताः प्रविशन्ति, यष्टयः प्रविशन्ति, मञ्चाः क्रोशन्ति, गिरिर्दह्यत इत्यादौ कुन्तादिभिः स्वार्थसिद्ध्यै आत्मनः प्रवेशादिलक्षणस्वार्थ-सिद्धये परेषां स्वसंयुक्तपुरुषवृक्षादीनामाक्षेपे स्वीकारे सति क्वचिदुपादानजा, उपादानात् स्वसंयोगिग्रहणाज्जातेत्यन्वर्थाश्रयणात्। अत्र भयङ्करत्व–मनुष्य-निचितत्व–बह्वयेकमयत्वादिप्रतिपत्तिरतिशयः। गौरनुबन्ध्य इत्यादौ श्रुतिनो-दितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते। 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे।' इति न्यायादित्युपादानलक्षणा तु नोदाहर्तव्या। न ह्यत्र कश्चिदतिशयः स्थाप्योऽस्ति। व्यक्त्यविनाभावित्वात् तु जात्या व्यक्तिराक्षिप्यते। यथा क्रियतामित्यत्र कर्ता, कुर्वित्यत्र कर्म, प्रविश, पिण्डीमित्यादौ गृहं, भक्षयेत्यादि च। तथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रिभोजनं लक्ष्यते, तस्यार्थापत्तिविषयत्वादिति। तथा शुद्धैव गङ्गायां घोष इत्यादौ गङ्गादिशब्देन स्वस्य स्वकीयस्य गङ्गात्वादि-

१ ब. ये भे०। २ प. शुद्धा। ३ प. तथा। ४ अ. न. व्य०। ५ प. ०नुब०। ६ ब. ०भिग०। ७ प. ०णा नो०। ८ अ. वि तु। ९ ब. ०त्यादिव्य०। १० अ. प. ब. ०नं न ल०। ११ ब. ०दिस्वश०। १२ प. ०यकस्य।

सामान्यस्य परस्मै तटप्रभृतये यदर्पणं दानं तस्मिन् सति लक्षणलक्षिता लक्षणेनो-पलक्षणीभूतगङ्गादिशब्देन लक्षिता ज्ञापितेत्यन्वयात्। अनयोर्भेदयोर्लक्ष्यस्य लक्ष-कस्य चाभेदप्रतीतिरेव। यत् तु-'तटस्थे लक्षणा शुद्धा' इति मुकुलेनोक्तं व्याख्यातं च यथा—' तटस्थे लक्षकार्थानुपरक्तत्वेन प्रतीयमाने लक्षणीये[3] शुद्धा लक्षणा ' तदसत्, यतोऽभेद एव श्रेयान्। तटादीनां हि गङ्गादिशब्दैः प्रतिपादने तत्त्व-प्रतीतौ प्रतिपिपादयिषितातिशयसम्प्रत्ययः। भेदे तु गङ्गासम्बन्धमात्रप्रतीतौ गङ्गातटे घोष इति मुख्यशब्दाभिधानादुपचारस्य को विशेष इति। इदं च भेदद्वयं कैश्चिन्न्यूनगुणाधिकगुणयोरन्यस्मिन्नन्यस्य साधर्म्यप्रतिपत्त्यर्थमारोप उप-चार इति लक्षणाक्रान्तेनोपचारेणामिश्रत्वादेव शुद्धमिति कथ्यते। अस्माभिः पुनरन्यस्मिन्नन्यस्यारोप उपचार इत्येतावदेवोपचारलक्षणमङ्गीकृतम्। स चोपचारः सर्वत्राप्यस्तीति सादृश्यात् प्रत्यासत्त्यन्तरेण युक्तत्वादेवास्य भेदद्वय-स्य शुद्धत्वमभिहितम्। एवं च द्विभेदा गौणी चतुर्भेदा च शुद्धेति षड्प्रकारो-पचारविचित्रता ॥ २६ ॥

उपचारव्यापारे वाच्यार्थस्य काव्यावस्थेत्याह—

**वाच्यार्थस्याविवक्षैव लक्षणायां भवेद् ध्रुवम्।**
**स चार्थान्तरसङ्क्रान्तो यद्वाऽत्यन्तं तिरस्कृतः ॥ २७॥**

लक्षणायामुपचारवैचित्र्ये गङ्गायां घोष इत्यादौ वाच्यार्थस्य प्रवाहादेर्ध्रुवम-विवक्षैव न वक्तुमिच्छा भवेत्। ततः स कथं स्यादित्याह-'स चेति' स च वाच्योऽ-र्थोऽनुपयुज्यमानत्वादर्थान्तरे तटादिरूपे सङ्क्रामति स्वात्मानं तस्मिन् अर्पयती-त्यर्थः। यद्वाऽनुपयुज्यमानत्वादत्यन्तं तिरस्कृतरूप एव भवतीति। तत्राद्यो यथा—

*" ताला जायंति गुणा जाला ते सहिअएहिं घिप्पंति।
रविकिरणाणुग्गहिआइं [12]हुंति कमलाइं कमलाइं ॥ ६७ ॥ "

अत्र द्वितीयकमलशब्दः[13] पौनरुक्त्येनानुपयुज्यमानत्वाद् बाधितस्वार्थः

---

* तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

---

१ व. ०क्षणे। २ व. ०स्योत क्ष०। ३ व. ०युशु०। ४ व. ०शब्दः। ५ अ. ब. प्रतिप०। ६ व, ०न्नस्य। ७ अ. ०णमि०। ८ अ. ०न्नस्य। ९ अ. ०पदार्थोप०। १० ब. ०न्तासंक्रांतोत्यंततिरस्कृत एव वा। ११ अ. प. तस्यार्प्य०। १२ अ. हवंति। १३ ब. ०ब्दैः पौनरुक्त्यैऽनु। १४ प. ०नाप०।

सआधाराधेयभावरूपात् सम्बन्धाज्जगद्धिलक्षणश्रीनिवासित्वरूपमतिशयमावि-ष्कर्तुं स्ववाच्यं विकासकमनीयत्वे सङ्क्रमयति ।

द्वितीयो यथा—

" भुवनश्रियमङ्कुरयति सहैव सहकारकाननैः सुरभिः ।
जागरयति कुसुमशरं सममेव च मधुकरक्वणितैः ॥ ६८ ॥ "

अत्राङ्कुरणं लतादिधर्मो जागरणं च विशिष्टचेतनधर्मस्ते च भुवनश्रियां मधुकरक्वणिते च न सम्भवत इत्यनुपयुज्यमानत्वाद् बाधितस्वार्थे छायाति-शयधारित्वात् सङ्कोचपरित्यागाच्च सादृश्यान्निखिलजनविलासोल्लासकत्वं जग-तामप्यतिदुःसहत्वं चातिशयमाविष्कर्तुं प्रवृद्धिं कार्य-कारणाभिमुखत्वं च लक्षय-न्ती वाच्यमत्यन्तं तिरस्कुरुतः । एवं द्विप्रकार एवोपचारः ॥ २७ ॥

अथार्थान्तरसङ्क्रान्तस्यात्यन्ततिरस्कृतस्य च वाच्यस्य विषयविभागमाह—

सादृश्ये वैपरीत्ये च वाच्यस्यातितिरस्क्रिया ।
सम्बन्धेऽन्यार्थसङ्क्रान्तिः क्रियायोगे तु तद् द्वयम् ॥२८॥

सादृश्ये गुणसाम्यरूपायां वैपरीत्ये वाच्यविपर्ययरूपायां च प्रत्यासत्तौ सत्यां वाच्यस्याभिधेयस्यार्थस्यातिशयेन तिरस्कारः । तत्र सादृश्ये यथा—

" मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ६९ ॥ "

दलविघटनरूपस्य पुष्पधर्मस्य विकासितत्वस्य स्मिते, वशीभूतत्वस्य चेतनधर्म-स्य वक्रिमणि, ऊर्ध्वोल्लसनरूपस्य मूर्तधर्मस्य समुच्छलितत्वस्य विभ्रमेषु, मूर्तवस्तु-चितस्यापास्तत्वस्य संस्थायाम्, अविकासरूपस्य कलिकाधर्मस्य मुकुलितत्वस्य स्तनयोः, स्कन्धबलावलिप्तत्वरूपस्य पुरुषधर्मस्यांसबन्धोद्धुरत्वस्य जघने,

---

१ व. सवा० । २ अ. ०श्रिया० । ३ व ०क्रम० । ४ व. ०श्रांत० । ५ व. ०पपयमा० । ६ व. ०र्थच्छा० । ७ व. वाचिशयमाकिः कर्तुं प्रवर्धं । ८ व. ०स्य वा० । ९ व. ०योग्ये । १० प. तवेन्दु० । ११ व. ०पस्य स० । १२ व. ०पराक० । १३ व. स्वांधाव० । १४ व. ०स्य प्रत्यक्षो० ।

इन्दुत्वस्य प्रत्यक्षतो वदनेऽङ्कुरादिनवोद्भेदरूपस्योद्गमस्य तरुणिम्नि, मोदत इति क्रियावाच्यस्य चेतनधर्मस्य प्रमोदस्योद्गमे सम्भवाभावात् बाधितस्वार्थैर्विकसितादिशब्दै रामणीयकप्रसरणादीनां तदेकनिष्ठत्वादीनामकस्मादुल्लसनादीनां दूरव्यवहितत्वादीनामभिनवोद्भिद्यमानतादीनामुन्नतत्वानमनवृत्त्यादीनां नेत्रानन्दनत्व-वृत्तत्वादीनामभिनवप्रभवत्वादीनामुत्कर्षवत्त्वादीनां च गुणानां क्रमेण सादृश्यात् स्मितादीन् पदार्थान् लक्षयद्भिः स्वसामान्यं विकसितत्वादिरूपं तेष्वेव समारोप्यते । अत्र च तादूप्यप्रतिपत्तिद्वारेण स्पृहणीयत्व-सुरभित्वादयः सदासन्निहितत्व-निदेशवर्तित्वादयः सविस्मयजनैर्विलोकनीयत्वादयः पुनरस्वीकारादयः काठिन्यवृत्तित्व-वर्द्धिष्णुत्व-स्मरोद्दीपनत्वादयो जगज्जेतृत्व-स्मरसेनापुरस्सरत्व-जनमनःक्षोभकत्वादयः सन्तापापहारित्व-जगदाह्लादकत्वादयो मनोज्ञत्व-प्रसृमरत्वादयः स्फारत्वोच्छृङ्खलत्व-स्पृहणीयत्वादयश्च क्रमादतिशया ध्वन्यन्ते । इथं च सर्वत्र विकसितस्मितमित्यारोप्यारोपविषययोरुक्तत्वात् सादृश्यनिबन्धना सारोपोपचारविचित्रता । अस्यां चोपमानवाचिनां विकसितादिशब्दानां स्वार्थोपमितस्मितादिवस्तुपरत्वाद् वाच्यस्यात्यन्ततिरस्कारः । उपमेयानां च स्मितादीनामुपमानीभूतविकसितपुष्पाद्यर्थसारूप्यप्रतिपत्तिद्वारेण सकलतद्धर्मध्वननं फलमत्रसेयम् ।

वैपरीत्ये यथा—

"उपकृतं बहु य(त)त्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधेदीदृशमेव सदा सखे! सुखितमास्स्व ततः शरदां शतम् ॥७०॥"

अत्र साक्षात्प्रतिकूलवर्तित्वदर्शनाद् बाधितस्वार्था उपकृतादयः शब्दा वैपरीत्यात् 'त्वं सर्वदैवास्माकं शत्रुत्वमाचरसि' इत्यादिप्रकाशनरूपमतिशयं द्योतयितुमपकृतादीन् लक्षयन्ति । तैरेव चामीषां वाच्यमत्यन्तं तिरस्क्रियते । तथा सम्बन्धे कार्य-कारणभावादिरूपायां प्रत्यासत्तौ सत्यां वाच्यस्यान्यार्थसङ्क्रान्तिरर्थान्तरसङ्क्रमणम् । यथा—

---

१ व. ०मल्पस्य । २ प. ०भाव० । ३ प. आरो० । ४ प. ०वृत्तत्व० । ५ व. ०जनःवि० । ६ अ. ०वर्तित्व० । ७ अ. प. ०ष्णुता । ८ प. ०मितादि० । ९ व. ० सितसितपु० । १० प. भवता प्र. । ११ व. चिरं । १२ प. धतीदृ० । १३ प. ०कृतत्वाद० । १४ अ. ०र्वदास्मा० । १५ व. ०न्धेन का० ।

" ततः प्र[1]हस्याह पुनः पुरन्दरं व्यपेतभीर्भूमिपुरन्दरात्मजः ।
गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ॥७१॥ "

जगत्प्रतीतस्यापि रघोः स्वनामोच्चारणे[2]स्यानुपयुज्यमानत्वेन मुख्यार्थबाधादाधाराधेयभावरूपाच्च सम्बन्धात् त्रिजगद्विजेतृत्वप्रतीतये र[3]घुशब्दः पौरुषातिशयं लक्षयति । तत्रैव च स्वै[4]र्वाच्यं सङ्क्रमयतीति । क्रियायोगे तु क्रियासम्बन्धरूपायां प्रत्यासत्तौ सत्यां पुनस्तत् पूर्वोक्तं द्वयं क्वचिदत्यन्ततिरस्कृतत्वं क्वचिदन्यार्थसङ्क्रान्तत्वमित्यर्थः । क्रियायोगे हि शब्दगतावयवशक्त्यनुसरणात् शब्दशक्तिमूलत्वं लक्ष्य[5]माणस्यार्थस्य । तत्र च[6] वाच्यस्यार्थस्यात्यन्ततिरस्क्रिया । यथा पुरुषः पुरुष इति । अत्र हि द्वितीयः पुरुषशब्दः पौनरुक्त्याद् बाधितस्वार्थो विशिष्टजातीयं स्वमर्थमत्यन्तं तिरस्कुर्वन् क्रियायोगनिबन्धनेनोपचारेण पूरयितृत्वं लक्षयति । यत्र तु निमित्तसद्भावाद् वाच्यस्यार्थस्या[7]पि विवक्षा स्यात् तत्रार्थान्तरसङ्क्रान्तत्वम् । यथा तक्षाऽयं मैत्रः । अत्र तक्षन्शब्दो मुख्यया वृत्त्या काष्ठतद्जातीयवाची । मैत्रस्य[8] च तज्जातीयत्वाभावाद् बाधितस्वार्थः सदृशक्रियायोगात् सकलतद्धर्मप्रतिपत्तये मैत्रं लक्षयति । तत्र तक्षन्शब्दो यद्यपि तक्षणक्रियाकर्तृत्वं क्रियायोगनिबन्धनया लक्षणयाऽवगमयति, तथापि काष्ठतद्जातीयं स्वार्थमभ्युपमानतया प्रतिपादयतीति स्वार्थस्य विवक्षितत्वमेव । ततो यद्युपमानस्योपमेयपरत्वाद् वाच्यस्यात्यन्ततिरस्कृतत्वं पूर्वाचार्यैरुक्तम् । तथापि क्रियायोगविषये शब्दशक्तिमूलत्वेन लक्षणाप्रवृत्तौ[9] काष्ठतद्लक्षणो वाच्योऽर्थो विवक्षामपरित्यजन् विज्ञानातिशयशालित्वेऽर्थान्तरे सङ्क्रामतीत्यर्थान्तरसङ्क्रान्तत्वमेव । एवं 'महति समरे शत्रुघ्नस्त्वम्' इत्यादिष्वपि ज्ञेयम् ॥ २८ ॥

अथ यः फलभूतः कोऽप्यतिशयः प्रोक्तस्तत्प्रतिपत्तिस्वरूपमाह—

**शब्दैरत्रोपचारेण विषयः प्रतिपाद्यते ।**
**क्रियान्तरस्यासद्भावात् व्यक्त्यैवातिशयः पुंसः[10] ॥२९॥**

अत्रास्यामुपचारविचित्रतायामारोपस्य विषयस्तटादिः शब्दैर्गङ्गादिभिरुप-

---

१ प. प्रविश्याह । २ अ. ०णानु० । ३ व. न र० । ४ प. स्वां वाच्यं संक्रा० । ५ व. लक्षमा० ।
६ व. तत्र वा० । ७ अ. व. ०स्य विवक्षापि । ८ अ. ०स्य तज्जा० । ९ व. ०वृत्तौ वा० । १० व. स्मृतः ।

चारेणोपचाराख्यव्यापारेण प्रतिपाद्यते प्रतिपत्तिगोचरतां नीयते । पावनत्वादिधर्मप्रतीतिरूपस्त्वतिशयो व्यक्त्यैव व्यञ्जनव्यापारेणैव प्रतिपाद्यते । कुतः क्रियान्तरस्य व्यापारान्तरस्यासद्भावादसत्त्वात् । यतः पावित्र्यादिधर्म्माणां प्रतीतौ नाभिधा प्रवर्तते । गङ्गादिशब्दानां तेष्वसङ्केतितत्वात् । नाप्युपचारस्तन्निमित्तानां मुख्यार्थबाध–तत्प्रत्यासत्त्यतिशयप्रतीतीनामभावात् । न ह्यत्र लक्षणीयं तटादि मुख्योऽर्थः । नाप्यत्र प्रवाहादिवत् कश्चिद् बाधः । न चास्य पावित्र्यादिनाऽतिशयेन काऽपि प्रत्यासत्तिः । न चाप्यतिशये लक्ष्ये किञ्चिदतिशयान्तरारोपणमस्ति । नाप्यत्र तटादाविव गङ्गादिशब्दाः स्खलद्गतयः, तत् कथं पावित्र्यादयो लक्ष्याः ? एवं स्थितेऽपि यद्यतिशयभूतास्ते लक्ष्यन्ते, तत् केनाप्यतिशयेन सोऽप्यतिशयान्तरेणेत्यनवस्थाप्रसङ्गः । नापि पावित्र्याद्यतिशयरूपफलयुक्तमेव तटादिलक्षणाया विषय इति युक्तं विषय–फलयोरत्यन्तं भेदात् प्रत्यक्षादेः प्रमाणस्य घटादिर्विषयः, फलं त्वर्थाधिगतिः प्राकट्यं संविि[2]त्तिर्वा । तदेवं फलविशिष्टेषु लक्षणा[3]लक्षितानामेव फलविशिष्टत्वप्रतीतिरिति पावनत्वाद्यतिशयो गङ्गादिशब्दैरभिधोपचाराभ्यां विलक्षणेन केनापि व्यापारेण प्रतिपाद्यत इति स्थितम् । स च व्यञ्जन–ध्वननादिशब्दवाच्योऽवश्यं मन्तव्यः । तत्प्रतिपाद्यश्चातिशयोऽत्र वस्तुमात्ररूप एव न रसालङ्काररूपः । स च क्वचिद् गूढः, क्वचिदगूढः । तत्र गूढो यथा—

> " यथा लीलामभ्यस्यति गतिरुरः स्मेरति वचोऽ
> प्यधीते वैदग्धीं परिचरति लज्जामपि वपुः ।
> स्मितश्रीरप्यास्यं तिलकयति तारा‌ऽपि च तर–
> त्यपाङ्गाङ्के शङ्के विकसति तथाऽस्यां मनसिजः ॥७२॥ "

अत्र पुनः पुनः प्रवृत्तिरूपस्याभ्यासस्य चैतन्यशून्यायां गतौ, पुष्पधर्मस्य दलविघटनरूपस्य स्मेरत्वस्योरसि, प्राज्ञधर्मस्याध्ययनस्य वचसि, चेतनारहितां लज्जां प्रतिसेवारूपस्य परिचरणस्य वपुषि, निपुणकार्यस्य तिलकस्य स्मितश्रियाम्, पयसि विधेयस्य तरणस्यापाङ्गाङ्के, कमलादिधर्मस्य विकासस्य मनोजन्मनि च सम्भवाभावात् मुख्यार्थबाधे क्रमशस्तद्भाभवत्त्वे त्रिशालीभवने क्रमात्

---

१ प. ०ता ल०, ब. ०स्ते व ल० । २ ब. ०विवृतिर्यावां । ३ अ. ०क्षणल० । ४ व्यंजनादि० । ५ ब. तरामपि चर० । ६ अ. ०हितं । ७ अ. ०बाधः, ब. ०बोधः ।

क्रमात् तद्ग्रहणशालित्वे मिथः संङ्गतत्वे शोभाकारित्वे तत इतः संवरणे प्रसरणे च यथाक्रमं सादृश्यरूपे प्रत्यासत्तिविशेषे सत्यभ्यासादिसामान्यानां गत्यादिष्वारोपः । सम्यग्ग्रहणं सस्पृहकामिजनावलोकनमखिललोकप्रोक्षस्वमाभिजात्यं झटिति कामिजनमनोवशीकरणं प्रागल्भ्यप्रकटनं क्रमात् प्रौढीभवनं चेत्याद्यतिशया व्यङ्ग्याः । अगूढो यथा—

" दुर्मेधसोऽपि भूधवशरौघताण्डवनचण्डपाण्डित्यम् ।
अध्यापयति धनुस्तव विरोधिनो नतिविधीन् सहसा ॥ ७३ ॥"

अत्र विद्वत्कार्यस्याध्यापनस्य विचेतने धनुष्यसम्भवात् मुख्यार्थबाधे कार्यनिर्मापकत्वे सादृश्ये चाध्यापकत्वं सामान्यं धनुष्यारोप्यते । अक्लेशेनैव ते नतिं कारिता इत्यतिशयो व्यङ्ग्यः । स च सद्यःप्रतीतिविषयत्वादगूढ एव । काव्यद्वयेऽप्यस्मिन् सारोपा गौणी चोपचारविचित्रता । वाच्यश्चार्थः स्वोपमेयभूतलक्ष्यार्थपरत्वादत्यन्ततिरस्कृतः । तदेवं यद्यपि भेदभूयस्त्वमुपचारस्य, तथापि तन्मूलस्यातिशयध्वनेः क्रोडीकृतापरप्रभेदमर्थान्तरसङ्क्रान्तवाच्यात्यन्ततिरस्कृतवाच्यरूपं भेदद्वयमेवेति ॥ २९ ॥

तदेवं शब्दस्यौपचारिकत्वमभिधाय व्यञ्जकत्वं स्थापयति—

**तेन व्यञ्जनवैचित्र्यमप्यास्ते शब्दगोचरम् ।**
**विदग्धत्वं कवीन्द्राणां यस्मिन् परिसमाप्यते ॥ ३० ॥**

यतो व्यञ्जनेनातिशयं शब्दः प्रत्याययति । तेन कारणेन शब्दगोचरं शब्दाश्रयं न केवलमभिधोपचारवैचित्र्यं व्यञ्जनवैचित्र्यमप्यास्ते इति प्रतीयते । यस्मिन् व्यञ्जनवैचित्र्ये कवीन्द्राणां विदग्धत्वं नैपुण्यं परिसमाप्यते परां काष्ठामधिरोहति । व्यञ्जनव्यापारभूषिता हि भारती कवीनां महन्माहात्म्यमुन्मुद्रयति । यदाह—

" सरस्वती स्वादु तदर्थवस्तु [10] निःस्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥ ७४ ॥"

---

१ व. सङ्गत्वे । २ व. ०कश्चव्यत्व०, अ. ०क अव्यकत्व० । ३ प. ०पने वि । ४ अ. व. ०बाधे० । ५ अ. चारोपवि० । ६ प. सोप० । ७ व. तयोर्व्य० । ८ प. ०भूता । ९ व. ०मुन्मिद्र० । १० प.व. निस्य० ।

अत्र तदिति प्रतीयमानम् ॥ ३० ॥

एवमुपचारान्मूलव्यङ्ग्यप्रस्तावात् शब्दस्य सामान्यतो व्यञ्जनवैचित्र्यमवस्थाप्य तदेवेदानीमभिधामूलमाह—

**वस्त्वलङ्कारयोर्मुख्यशब्दतो व्यञ्जनाद् ध्वनिः ।**

**शब्दशक्तिभवो द्वेधा**

शब्दशक्तिभवः शब्दशक्तिसमुत्थो ध्वनिर्द्वेधा द्विप्रकारो भवति वस्तुध्वनिरलङ्कारध्वनिश्च। कुत इत्याह—वस्त्वलङ्कारयोरित्यादि। मुख्यादनुपचारात् शब्दाद् वस्तुनोऽलङ्कारस्य च व्यञ्जनात् परिभासनात्। तत्र वस्तुध्वनिर्यथा—

"शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥ ७५ ॥"

अत्र त्वदनुवर्त्तनाय विरुद्धावप्येकं कार्यं कुरुत इति वस्तु ध्वन्यते।

अलङ्कारध्वनिर्यथा—

"अमित्रक्षेत्रेषु प्रसभमसिधेनुस्तव नवं
चिरं चीर्णा भूमीतलतिलकपत्राङ्कुरवनम् ।
यशोदुग्धं स्निग्धं किमपि तदसूत प्रतिमुहुः
प्रतेने येनायं त्रिभुवनपुटीपूरणविधिः ॥ ७६ ॥"

अत्रैकार्थः कृपाणीवाचकोऽसिधेनुशब्दो मध्यानुप्रविष्टधेनुशब्दमाहात्म्यात् सुरभ्या सार्द्धमौपम्यं व्यनक्ति।

यथा च—

"तिग्मरुचिरप्रतापो विधुरनिशाकृद् विभो ! मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥ ७७ ॥"

तिग्मो रुचिरप्रतापो यस्य, विधुराणां वैरिणां निशामुपचारात् मूर्च्छान्धकारं करोति। मधुरा लीला यस्य। मतौ सद्बुद्धौ माने पूज्यपूजने तत्त्वे परमार्थे च वृत्तिर्यस्य। प्रतिपदं स्वपक्षेऽग्रणीः। एतेषां च पदानां द्विपदत्वे तिग्मरुचिः

१ अ. ०चारमू० । २ अ. शब्दशा० । ३ अ. ०धाय मू० । ४. अ० अनध्व० । ५ अ. प्रतिभा०। ६ अ. ब. व्यज्यते । ७ अ. मावे पूजने।

अम्रतापः। विधुः अनिशाङ्कव्। मधुः अलीलः । मतिमान् अतत्त्ववृत्तिः। प्रतिपत्
अपक्षाग्रणीरिति विरोधाभासो व्यङ्ग्यः ।

चतस्रोऽस्य भिदास्ततः ॥ ३१ ॥

ततः कारणादस्य शब्दशक्तिमूलस्य ध्वनेरर्थान्तरसङ्क्रान्तवाच्यात्यन्ततिरस्कृतवाच्यभेदाभ्यां सह चत्वारो भेदाः ॥ ३१ ॥

ननु संयोगाद्यैर्नियमितादप्यनेकार्थात् शब्दाद् या काचिदर्थान्तरप्रतीतिस्तस्यां किं शब्दस्याभिधैव व्यापारः ? किं वाऽपरः कश्चिदित्याह—

या च शब्दादनेकार्थात् संयोगाद्यैर्नियन्त्रितात् ।
अपरार्थमतिः काचित् व्यञ्जनादेव सा मता ॥ ३२ ॥
संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ ३३ ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ ३४ ॥[4]

इत्युक्तानुसारेण शब्दानामेकस्मिन्नर्थे नियमनं यथा—

‘ वनमिदमभयमिदानीं यत्रास्ते लक्ष्मणान्वितो रामः । ’ इति
‘ विना सीतां रामः प्रविशति महामोहसरणिम् । ’

इति च संयोगाद् विप्रयोगाच्च दाशरथौ २ ।
‘ बुधो भौमश्च तस्योच्चैरनुकूलत्वमागतौ । ’ इति साहचर्याद् ग्रहविशेषे ३ ।
‘रामार्जुनव्यतिकरः साम्प्रतं वर्तते तयोः।’ इति विरोधाद् भार्गव--कार्तवीर्ययोः४।
‘स्थाणुं भज भवच्छिदे’ इत्यर्थात् प्रयोजनादीश्वरे ५ ।
‘ सर्वं जानाति देवः ’ इति प्रकरणाद् युष्मदर्थे ६ ।
‘कोदण्डं यस्य गाण्डीवं स्पर्द्धते कस्तमर्जुनम् ?। ’ इति लिङ्गाच्चिह्नात् पार्थे ७ ।

---

१ ब. ०ब्दस्य श० । २ प ०प्येका० । ३ प. ०स्यैवाभिधा । ४ प. त्रिभिः कुलकम् ।

'देवस्य पुराराते:' इति शब्दान्तरसन्निधानात् पशुपतौ ८।
'मधुना मत्तः कोकिलः' इति सामर्थ्याद् वसन्ते ९।
'तन्व्या यत् सुरतान्तकान्तनयनं वक्त्रं रतिव्यत्यये। तत् त्वां पातु'
इत्यौचित्यात् प्रसादसाम्मुख्ये पालने १०।
'भात्यत्र परमेश्वरः' इति राजधानीरूपाद् देशाद् राजनि ११।
'चित्रभानुर्विभात्यत्र' इति कालविशेषाद् दिने रवौ, रात्रौ च वह्नौ १२।

'मित्रं भाति'इति 'मित्रो भाति'इति च व्यक्तिविशेषाल्लिङ्गविशेषात् सुहृदि रवौ च प्रतीतिः १३।

उदात्तादेः स्वरविशेषात् पुनर्वेद एव विशेषार्थप्रतिपत्तिर्न काव्यमार्गे। तथाहि—'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥' इति कय्यटोक्तन्यायान्मिथ्या प्रयुक्तो मन्त्रः प्रयोक्तारमेव हन्ति। यथेन्द्रशत्रुरिति मन्त्रः। पूर्वं हि इन्द्रस्याभिचारो वृत्रेणारब्धस्तत्रेन्द्रशत्रुर्वर्धस्वेति मन्त्र ऊहितः। तत्र चेन्द्रस्य शमयिता शातयिता वेति क्रियारूपः शत्रुशब्दः समाश्रितो न तु रूढिशब्दः। तदाश्रयणे हि बहुव्रीहि-तत्पुरुषयोरर्थभेदः। ततश्चेन्द्रशत्रुरित्यन्त्योदात्ते षष्ठीतत्पुरुषे प्रयोक्तव्ये आद्योदात्तो बहुव्रीहिर्ब्राह्मणेन प्रयुक्तस्तेनेन्द्रस्तस्यैव शमयिता जात इति स्वरो वेद एवोपयोगी, न काव्यमार्ग इति १४।

आदिशब्दादभिनयादिभ्यो यथा—

* इद्दहमित्तत्थणिया इद्दहमित्तेहिं अच्छिवत्तेहिं।
इद्दहमित्तावत्था इद्दहमित्तेहिं दिअहेहिं॥ ७८॥

एवं संयोगादिभिर्नियन्त्रितादप्येकस्मिन्नर्थे स्थापितादप्यनेकार्थात् शब्दाद्

* एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम्। एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः॥

१ अ. तन्वा। २ अ. प. ०भातीति। ३ व. तदर्थ०। ४ व. शातयिता जा०, प. शमयति शातयता चेति। ५ अ. ०स्ते इन्द्र०। ६ अ. ०व वृत्रस्य शातयिता। ७ प. इत्तह०। ८ प. अ. ०थणिआ। ९ व. दियए०।

या काचिदपरस्यार्थस्य मतिर्बुद्धिर्भवति सा नाभिधातस्तस्या नियमितत्वात्, नाप्युपचारात् तन्निमित्तानामभावादपि तु व्यञ्जनव्यापारादेव । यथा—

" स सैन्यसैन्धवोद्धूतैः पांशुभिः पूरयन् दिशः ।
न सेहे मिहिरस्यापि पृथिव्यां पततः करान् ॥ ७९ ॥"

अत्र मिहिरशब्दप्रत्यासत्तेः किरणेषु नियमितोऽपि करशब्दो दण्डरूपमर्थान्तरं व्यञ्जयन् 'एकछत्रां धरित्रीं स भुक्तवान्' इति वस्तु प्रकाशयति ।

तथा—

" यदीयोऽसिः कालः प्रतिकरटिसिन्दूररुचिभि—
र्व्यधात् सन्ध्यां मुक्तास्तदनु किल ताराः समुदगुः ।
यशःश्वेतज्योतिस्त्वदथ समभूद् येन जयिना
चिरं चक्रे राकाँरजनिमयमेव त्रिभुवनम् ॥ ८० ॥"

अत्र काल-तारा-श्वेतज्योतिःशब्दा असि-मुक्ता-यशःशब्दानां सन्निधानात् कृष्णगुण-नैर्मल्य-विशदद्युतित्वेषु नियन्त्रिता अप्यनेहो-नक्षत्र-शीतांशून् व्यञ्जयन्तस्तैः सार्धमुपमानोपमेयतां ध्वनयन्ति ॥ ३२-३४ ॥

न शब्दवैचित्र्यमिदं विनाऽश्नुते श्रियं कवीनां भणितिर्महत्यपि ।
मरीचयश्चण्डरुचो हि दर्पणे निपेतिवांसो विकसन्ति नाश्मनि ॥

इत्यलङ्कारमहोदधौ शब्दवैचित्र्यवर्णनो नाम द्वितीयस्तरङ्गः ॥ २ ॥



१ व. ०स्रामाना मि० । २ अ. ०त्वात् सस० । ३ प. ०दिति । ४ व. वोद्भूतैः । ५ व. पांशु० ।
६ प. यथा । ७ प. राजा ।

# अथ तृतीयस्तरङ्गः ।

अथ पूर्वोक्तानुवादपूर्वमुत्तराभिधेयमुपक्रमते—

इत्युक्तं शब्दवैचित्र्यमर्थवैचित्र्यमुच्यते ।
महाकविरिति ख्यातिं लभन्ते कवयो यतः ॥ १ ॥

इति पूर्वोक्तप्रकारेण शब्दवैचित्र्यमुक्तं प्रतिपादितम् । इदानीमर्थवैचित्र्यमुच्यते । यतो यस्मादर्थवैचित्र्यात् कवयो महाकविरिति ख्यातिं प्रसिद्धिं लभन्ते प्राप्नुवन्ति । न ह्यद्भुतार्थवैचित्र्यमन्तरेण महाकवित्वलाभः ॥ १ ॥

अथ यत् प्रतिज्ञातं तदेवाह—

अक्लिष्टप्रतिभादृष्टः सौकुमार्यमनोरमः ।
रससंवलितानेकभङ्गीसर्वाङ्गभूषितः ॥ २ ॥
अयोनिरपरच्छायायोनिर्वा परभागभाक् ।
स चेतनचमत्कारी धत्तेऽर्थः कविताङ्गताम् ॥ ३ ॥[4]

अर्थोऽभिधेयं वस्तु कविताङ्गतां काव्यकारणत्वं धत्ते धारयति । कीदृशः ? अक्लिष्टप्रतिभादृष्टः अक्लिष्टा कदर्थनारहिता या प्रतिभा नवनवोल्लेखशाली प्रज्ञाविशेषस्तया दृष्टो विभावितोऽत एव सौकुमार्यमनोरमः । सुकुमारसम्भूतं हि वस्तु सुकुमारमेव भवति । पुनः कीदृशः ? । रसैः शृङ्गारादिभिः संवलिता मिश्रीभावशालिनी याऽनेका भङ्गी विच्छित्तिस्तया सर्वाङ्गमामूलचूलं भूषितः समलङ्कृतः । अर्थो हि रसकल्लोलिनीं नवनवां विच्छित्तिमूरीकुर्वन्नेव चारिमाणमारोहति । यथा—

“ आराद्धं किमु दैवतं कुवलयैस्तेपे तपश्चन्द्रमाः
किन्नामाऽयमिदं च काञ्चनरुचां किं भाग्यमुज्जृम्भते ? ।
दैवं वाऽद्य किमानुकूलिकमभूद् बालप्रवालश्रिया—
मस्याः स्मेरदृशो दधत्यवयवौपम्यं यदेतान्यपि ॥ ८१ ॥ ”

---

१ अ. ०दमु० । २ प. सौकर्मम० । ३ ब. ०विच्छित्तिमू० । ४ प. युगली । ५ प. ०णतां
६ ब. ०शालिप्र०, प. ०प्रतिभा । ७ ब. ०हयति । ८ ब. चाय ।

पुनः कथम्भूतः ? अयोनिः न विद्यते योनिरुत्पत्तिभूमिर्यस्य स तथा। पूर्वकविभिरस्पृष्ट इत्यर्थः । यथा—

" किं ब्रूमो जलधेः श्रियं स हि खलु श्रीजन्मभूमिः स्वयं
वाच्यः किं महिमाऽपि यस्य हि किल द्वीपं महीति श्रुतिः ।
त्यागः कोऽपि स तस्य बिभ्रति जगद् यस्यार्थिनोऽप्यम्बुदाः
शक्तेः कैव कथाऽपि यस्य भवति क्षोभेण कल्पान्तरम् ॥ ८२ ॥"

किमयोनिरेवायमुतास्य प्रकारान्तरमप्यस्तीत्याह—अपरच्छायायोनिर्वाऽपरस्य काव्यार्थस्य या छाया सादृश्यमात्रं सा योनिर्यस्य स तथा। वाऽथवार्थे। किमुक्तं भवति ? यदपूर्व एवं तावदर्थः काव्ये निबन्धनीयस्तदसम्पत्तावपरच्छायाप्रभवोऽपि विशेषं कमप्युन्मेषयन् न विरुध्यते। अत एवोक्तं परभागभाक् पूर्वस्माद् गुणोत्कर्षवान् इति । यथा—

" मानिनीजनविलोचनपातानुष्णबाष्पकलुषान् प्रतिगृह्णन् ।
मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः ॥ ८३ ॥"

अयमेवार्थः कविप्रतिभाविशेषितो यथा—

" क्रमादेक–द्वि–त्रिप्रभृतिपरिपाट्या प्रकटयन्
कलाः स्वैरं स्वैरं नवकमलकन्दाङ्कुररुचः ।
पुरन्ध्रीणां प्रेयोविरहदहनोद्दीपितदृशां
कटाक्षेभ्यो बिभ्यन् निभृतमिव चन्द्रोऽभ्युदयते ॥८४॥"

सोऽयमपरच्छायायोनिः । युग्मम् ॥ २–३ ॥

अर्थवैचित्र्यस्य कियतोऽप्यतिदेशमाह—

**विचित्रत्वमदोषत्व–गुणालङ्कारनिर्मितम् ।**
**यदर्थस्यास्ति तत् सर्वं पुरस्तादभिधास्यते ॥ ४ ॥**

---

१ व. ०मीय० । २ प. ०भूमी । ३ अ. यस्य वि० । ४ व. कला । ५ अ. काव्यस्य च्छा० । ६ प. मता । ७ अ. एवार्थः । ८ अ. तदसम्भवे अप० । ९ अ. प्रायो० । १० प. बिभ्रन् । ११ व. ०भूपि० ।

यत् किमप्यर्थस्य निर्दोषत्वादिजनितं वैचित्र्यं विद्यते तत् समग्रमग्रे वक्ष्यते इति ॥ ४ ॥

सम्प्रति यद् वक्तव्यं तदाह—

यत् तु वैचित्र्यमर्थस्य व्यञ्जकत्वमुपेयुषः ।
व्यङ्ग्यार्थप्रत्ययाधायि तदत्रैव प्रतन्यते ॥ ५ ॥

यत् पुनरर्थस्य व्यञ्जकत्वं प्राप्तवतः प्रतीयमानार्थप्रतीतिकारि विचित्रत्वं तदत्रैव प्रतन्यते विस्तरेण कथ्यते ॥ ५ ॥

अथ व्यङ्ग्यार्थस्वरूपाण्याह—

यद्यप्यनेकधा व्यङ्ग्यं व्यञ्जकादिविभेदतः ।
तथापि वस्त्वलङ्कार–रसात्मत्वात् त्रिधैव तत् ॥ ६ ॥

यद्यपि व्यञ्जकानामादिशब्दाद् व्यञ्जनीयानामपि विभेदादनेकरूपं व्यङ्ग्यं व्यङ्ग्योऽर्थः । सामान्यविवक्षयाऽत्र नपुंसकत्वम् । तथापि वस्तु किमप्यर्थमात्रमलङ्काराश्चोपमाऽऽदयो रसाश्च शृङ्गारादयस्तदात्मत्वात् तद्रूपत्वात् तद् व्यङ्ग्यं त्रिविधमेव, न चतुर्थः प्रकारोऽस्तीति ॥ ६ ॥

कथितं व्यङ्ग्यार्थस्वरूपम् । अथ मुख्याद्यर्थानां व्यञ्जकत्वमाह—

वक्तृ–बोद्धव्य–काकूनां वाक्य–वाच्यान्यसन्निधेः ।
प्रस्ताव–देश–कालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ॥ ७ ॥
मुख्योपचरित–व्यङ्ग्याः क्वचिदर्थास्त्रयोऽप्यमी ।
बिभ्रति व्यञ्जकीभावं निजप्रागल्भ्यसम्पदा ॥ ८ ॥

मुख्याद्यास्त्रयोऽप्यर्थाः प्रतिभाजुषां वैदग्ध्यशालिनां विदग्धान् प्रतीत्यर्थं व्यञ्जकत्वं धारयन्ति । कया ? निजप्रागल्भ्यसम्पदा । तत् किञ्चित् सन्निवेशनै-

---

१ प. यद्य्य० । २ प. व्यञ्जनादि० । ३ अ. व्यञ्जना० । ४ प. च. त्वात् व्य० । ५ प.० सन्निधिः । ६ प. त्रुपरूम् ।

पुण्यमुन्मीलति येन ते व्यञ्जका जायन्ते। परं क्वचित्, न सर्वत्र। कुत एतदित्याह—वक्त्रादीनां वैशिष्ट्यादिति। किमुक्तं भवति? यत्र वक्त्रादीनां वैशिष्ट्यं प्रागल्भ्यशालिनोऽपि त्रयोऽप्यर्थास्तत्रैव व्यञ्जका नान्यत्र। तत्र वक्ता प्रतिपादकस्तस्य वैशिष्ट्याद् यथा—

* " माए! घरोवयरणं अज्ज हु नत्थि त्ति साहिअं तुमए।
ता भण किं करणिज्जं एमेव न वासरो ठाइ॥ ८५॥ "

अत्र विज्ञातस्वैरिणीत्वरूपाद् वक्तृवैशिष्ट्यात् काचित् स्वैरविहारार्थिनी तटस्थेन प्रतिभावता व्यज्यते। तटस्थेनेत्यादिकं चोत्तरेष्वपि ज्ञेयम्।

प्रतिपाद्यो बोद्धव्यस्तद्वैशिष्ट्याद् यथा—

\+ " उन्निद्दं दोबल्लं चिन्ता अलसत्तणं सनीससिअं।
मह मंदभाइणीए केरं सहि! तुह वि अहह! परिहवइ॥८६॥ "

महकेरं मम सम्बन्धि। तुह वि त्वामपि। अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते। तथाविधदूतीत्वं च बोद्धव्यस्य वैशिष्ट्यम्।

काकुवैशिष्ट्याद् यथा—

" तथाभूतां दृष्ट्वा नृपसदसि पञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥ ८७॥ "

अत्र मयीत्यत्र प्रयत्नविशेषोच्चारणे कोपोपालम्भपरत्वेन काकोर्वैशिष्ट्याद् मयि न योग्यः खेदः, कुरुषु तु योग्य इति भीमाभिप्रायः प्रतीयते। न च

* मातर्गृहोपकरणमद्य खलु नास्तीति कथितं त्वया।
तद् भण किं करणीयमेवमेव न वासरस्तिष्ठति॥

\+ औन्निद्र्यं दौर्बल्यं चिन्ताऽलसत्वं सनिःश्वसितम्।
मम मन्दभागिन्याः सखि! त्वामप्यहह! परिभवति॥

१ ब. °साहिअं। २ प. हा स्वै°। ३ प. °सहिअं, ब. °तास्वैरिणी बहुरू°। ४ प. गुरुं।

वाच्यसिद्ध्यङ्गं काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्कनीयम्, भजतीत्यत्र प्रयत्नविशेषोच्चारणे काकुमात्रेणापि प्रश्नमात्रनिष्ठश्लोकार्थोपपत्तौ मयीति विशिष्टकाक्वनुसरणस्य विशिष्टव्यङ्ग्यार्थप्रतीतिहेतुत्वात्।

वाक्यवैशिष्ट्याद् यथा—

" प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्यात्
निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात–
स्त्वय्यायाते विकल्पानिति दधत इवाभाति कम्पः पयोधेः ॥८८॥ "

अत्र प्राप्तश्रीरित्यादीनां वाक्यानां वैशिष्ट्यान्नारायणरूपता राज्ञः प्रतीयते।

वाच्यवैशिष्ट्याद् यथा—

" उद्देशोऽयं सरसकदलिश्रेणिशोभाऽतिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः।
किं चैतस्मिन् सुरतसुहृदस्तन्वि! ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥ ८९ ॥ "

कदलीति बाहुलकाद् ह्रस्वः। अत्र कदली–कुञ्जयोर्जनालोकवारण–रविकरनिग्रहप्रकाशनं वायोः सुरतखेदच्छेदित्वं सर्वेषामपि च मदनोद्दीपनत्वं चेति रतसामग्रीप्रकाशकवाच्यार्थवैशिष्ट्यात् ' सम्भोगक्रीडार्थमत्र प्रविश ' इति युज्यते।

अन्यसन्निधिवैशिष्ट्याद् यथा—

*" णुल्लेइ अणुल्लमणा अत्ता मं घरभरंमि सयलम्मिं।
खणमित्तं जइ संझाइ होइ न व होइ वीसामो ॥ ९० ॥ "

अत्र कयाचित् सखीं प्रति वदन्त्या प्रच्छन्नकामुकस्य सन्ध्या सङ्केतकालो ज्ञाप्यत इति प्रतीयते। तथाविधपुरुषकृतत्वं च सन्निधिवैशिष्ट्यम्।

* नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः॥

१ प. वाक्य०। २ प. सरसि। ३ व. कदलि०। ४ अ. बुल्लें०। ५ प. सयलं ति। ६ प. ०मेतं।

प्रस्ताववैशिष्ट्याद् यथा—

*" सुव्वइ समागमिस्सइ तुज्झ पिओ अज्ज पहरमित्तेण ।
एमेव किं ति चिट्ठसि ता सहि ! सज्जेसु करणिज्जं ॥ ९१ ॥"

अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता काचिन्न युक्तमिति सख्या निवार्यत इति व्यज्यते । सर्वदाऽभिसरणद्वारेण हेतुत्वेन प्रतीतत्वं च प्रस्तावस्य वैशिष्ट्यम् ।

देशवैशिष्ट्याद् यथा—

" अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः ! ।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥ ९२ ॥ "

अत्र विविक्तोऽयं देशस्ततः प्रच्छन्नकामुकस्त्वया प्रस्थाप्य इति विश्वस्तां प्रति कयाचिन्निवेद्यते इति ध्वन्यते । उद्देशोऽयमित्यत्र सकलस्यापि वाच्यस्य वैशिष्ट्यमिह तु सङ्केतयोग्यत्वं देशमात्रस्यैवेति वाच्यवैशिष्ट्याद् भेदः ।

कालवैशिष्ट्याद् यथा—

÷" गुरुअणपरवस ! पियं ! किं भणामि तुह मंदभाइणी अहयं ।
अज्ज पवासं वच्चसि वच्च सयं चेव सुणसि करणिज्जं ॥ ९३ ॥"

अत्र मधुसमये यदि व्रजसि तदहं तावन्न भवामि । तत्र तु न जानामि गतिमिति पतिं प्रति कस्याश्चिदभिप्रायः प्रतीयते । विरहिप्राणापहारित्वं च कालवैशिष्ट्यम् ।

आदिग्रहणाच्चेष्टादीनां परिग्रहः । तत्र चेष्टावैशिष्ट्याद् यथा—

---

* श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि ? तत् सखि ! सज्जय करणीयम् ॥

÷ गुरुजनपरवश ! प्रिय ! किं भणामि त्वां मन्दभागिनी अहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव जानासि करणीयम् ॥

---

१ अ. व. ०मेव० । २ अ ०सज्जे० । ३ अ. व. ०परगहे० । ४ अ. पिअ । ५ अ. ०विशेषाद् ।

" द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समापादितम्।
आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते ॥९४॥"

अत्र चेष्टाभिः प्रच्छन्नकान्तविषया सानुरागता ध्वन्यते। अनुरागकल्लोलितेलज्जाजनितत्वं च चेष्टानां वैशिष्ट्यम्।

एवं वक्त्रादीनां द्विकादियोगेऽपि व्यञ्जकत्वमवसेयम्। तत्र वक्तृ-बोद्धव्ययोगे यथा—

*" अत्ता इत्थ णुमज्जइ इत्थ अहं पियँ सयं पलोएसु।
मा पँहिअ! रत्तिअंधय! सिज्जाइ महं णुमज्जिहसि ॥ ९५ ॥"

अत्ता श्वश्रूः। णुमज्जइ निषीदति। महं आवयोः, ममेति व्याख्यायमाने व्यङ्ग्यप्रतीतिर्न स्यात्। अत्र स्वैरिण्यां तथाविधपुरुषं प्रति वदन्त्यां द्वयवैशिष्ट्याद् मेति निषेधेन मम शय्यायामेव त्वया समागन्तव्यमिति विधिः प्रतीयते।

एवमन्यदपि द्विक-त्रिकयोगे स्वयमभ्यूह्यम्।

इदानीमुपचरितार्थस्य व्यञ्जकत्वमुच्यते। तत्र वक्तृवैशिष्ट्याद् यथा—

" दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायो नास्य शिशोः पिताऽतिविरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि तद् वरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः पुनरुल्लिखन्तु जरठच्छेदा नलग्रन्थयः ॥ ९६ ॥"

अत्र स्वैरिण्याः पत्यर्थं सरसजलानयनाय तत्त्ववृत्त्या गमनं न सम्भवतीति मुख्यार्थबाधादसत्येन यामीत्यनेन वैपरीत्यप्रत्यासत्त्या लोकेषु सतीत्वख्यापनरूपे

---

* श्वश्रूरत्र निमज्जत्यत्राहमपि च (प्रिय!) स्वयं (दिवसं) प्रलोकय।
मा पथिक! राज्यन्धक! शय्यायामावयोर्निमङ्क्ष्यसि ॥

---

१ प. ०कामुक०। २ प. तज्जनित०। ३ प. दिय, अ. दिअ०। ४ अ. एहि र०। ५ अ. व्यक्तिवैचित्र्याद् व०।

फले सति सत्यं परपुरुषान्तिकगमनं लक्ष्यते। तेन च रतोपमर्दजनितनखक्षतादि-गोपनं ध्वन्यते । विदितस्वैरिणीत्वं चात्र वक्तुर्वैशिष्ट्यम् ।

बोद्धव्यवैशिष्ट्याद् यथा—

*" सांहंती सहि ! सुहयं खणे खणे दूमिआँ सि मज्झ कए ।
सब्भाव- नेह- करणिज्जसरिसयं दाव विरइयं तुमए ॥ ९७ ॥ "

साधयन्ती मदनुकूलं कुर्वती, यदि वा प्रतिपादयन्ती युक्तायुक्तं बोधयन्ती । अत्र प्रत्यक्षदृष्टप्रियोपभोगचिह्नाया दूत्याः सद्भावस्नेहरूपं मित्रत्वं न सम्भवतीति मुख्यार्थबाधे वैपरीत्यरूपायां प्रत्यासत्तौ त्वमसद्भावपरा निःस्नेहा च सदाप्यभूरिति गुप्तासत्यार्थप्रतिपादने च फले शत्रुत्वं लक्ष्यते । तेन च तस्याः स्नेहपात्रमियं सद्य एव तत्पार्श्वं यास्यतीति जानन्नपि यस्त्वां दूतीमपि कामयते तेनातिधृष्टेन किं कार्यमिति कामुकविषयं सापराधत्वं व्यज्यते । एवं काक्वादिवैशिष्ट्यादपि लक्ष्यार्थव्यञ्जकत्वं ज्ञेयम् ।

अथ व्यङ्ग्यार्थव्यञ्जकत्वम् । तत्र वक्तृवैशिष्ट्याद् यथा—

÷" भम धम्मिअ ! वीसत्थो सो सुणओ अज्ज मारिओ तेण ।
गोलाणइकच्छकुडंगवासिणा दरिअसीहेण ॥ ९८ ॥ "

अत्र भ्रमेत्यादिविधिना गोदावरीतीरे सिंहसद्भावाद् धार्मिकस्य भ्रमणनिषेधो व्यज्यते । तेन च तत्रोपपतिना सह निष्प्रत्यूहसुरतव्यापाराभिलाषित्वं कस्याश्चित् प्रतीयते ।

बोद्धव्यवैशिष्ट्याद् यथा—

---

* साधयन्ती सखि ! सुभगं क्षणे क्षणे दूनाऽसि मम कृते ।
सद्भाव–स्नेह–करणीयसदृशं तावद् विरचितं त्वया ॥

÷ भ्रम धार्मिक ! विश्वस्तः स श्वाऽद्य मारितस्तेन ।
गोदानदीकच्छकुडङ्गवासिना दृप्तसिंहेन ॥

---

१ प. ०क्षिता०, अ. क्षतादि ध्व० । २ अ. ब. साहिंती । ३ ब. ०मिया । ४ अ. करिज्ज । ५ अ. ०रयियं । ६ प. ०दिति । ७ प. ०सभ्या० । ८ ब. ०रियसी० ।

" निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तथेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमा
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ? ॥९९॥ "

अत्र न पुनरिति निषेधेन निःशेषच्युतादिपदसमूहसहायाऽधमपदबलात् तदन्तिकमेव रन्तुं गताऽसीति विधिर्व्यज्यते । तथाहि—च्युतं भ्रष्टं, क्षालितमित्युक्ते तु व्यङ्ग्यार्थप्रतीतिर्न स्यात्, क्षालनस्य वाप्यामेव भावात् । नितरां मृष्टरागो न तु किञ्चित् । दूरमनञ्जने, निकटे तु साञ्जने । पुलकिता तन्वीत्युभयं विधेयम् । व्यङ्ग्यपक्षे इत्येकं व्यङ्ग्यम् । तेन च त्वमिव सोऽधमस्तावत् यस्त्वां कामयते । स इव त्वमप्यधमा या प्रीतिपात्रभूताऽपि मम प्रियोपभोगं कुरुषे । तत् तेन च त्वयाऽपि च न मे कार्यमित्याद्युपमेयोपमागर्भं बहु ध्वन्यते । एवं काक्वादिवैशिष्ट्यादपि व्यङ्ग्यार्थव्यञ्जकत्वमुदाहार्यम् ॥ ७-८ ॥

अथ व्यञ्जकत्वमापन्नस्य मुख्यार्थस्य का वार्तेत्याह—

**व्यज्यतेऽर्थान्तरं यत्र मुख्यार्थेन स्वनिह्नवात् ।**
**तस्मिन् विवक्षितस्यापि तस्यान्यपरता भवेत् ॥ ९ ॥**

मुख्यार्थस्य हि परोपकारित्वे सति क्वाप्यविवक्षितत्वं क्वापि विवक्षितत्वम् । तत्राविवक्षितस्य स्वरूपमुपचारप्रस्तावे कथितमेव । विवक्षितस्य तु कथ्यते । यत्र यस्मिन् काव्ये मुख्यार्थेन स्वनिह्नवादात्मानं निह्नुत्य पश्चात्कृत्य किमप्यर्थान्तरं व्यज्यते तस्मिन् काव्ये तस्य मुख्यार्थस्य विवक्षितस्यापि वक्तुमिष्टस्याप्यन्यपरता व्यङ्ग्यार्थनिष्ठता भवेत् । न स्वातन्त्र्यमित्यर्थः ॥ ९ ॥

कथितं मुख्यार्थस्वरूपम् । अथ व्यङ्ग्यार्थस्य भेदान् वक्तुकामः प्रथमं द्वैविध्यमाह—

**तत्सङ्कते ध्वनौ काव्ये क्वाप्यसंलक्षितक्रमः ।**
**संलक्षितक्रमः क्वापि व्यङ्ग्योऽर्थः प्रकटीभवेत् ॥ १० ॥**

---

१ अ. निर्वघ० । २ अ. ०त्रापि त्रि० । ३ प. ०तस्व० । ४ अ. व. ०स्यान्य० ।

तत्सञ्ज्ञते व्यङ्ग्यार्थनिष्ठमुख्यार्थयुक्ते ध्वनाविति ध्वनिसंज्ञे काव्ये व्यङ्ग्योऽर्थो द्विधा स्फुटीभवति । क्वचिदसंलक्षितक्रमः न संलक्षितः सन्नपि न सम्यग् ज्ञातः क्रमो यस्य । रसादयो हि विभावानुभाव-व्यभिचारिभिः प्रथममाविर्भूतैरनन्तरमाविष्क्रियन्ते इत्यस्ति क्रमः । स चाशुभावित्वान्न लक्ष्यते, विभावादिसमकालमेव रसादीनां प्रतीयमानत्वात् । क्वचिच्च संलक्षितक्रमो मुख्यार्थप्रतीत्यनन्तरं हि घण्टानुरणनप्रतिमः सहृदयप्रतिभासमर्पितो वस्त्वलङ्कारवपुर्व्यङ्ग्योऽर्थः प्रतिभातीति ॥ १० ॥

अथासंलक्षितक्रममाह—

**तयोराद्यो रसा भावाः स्थायि-सञ्चारिमूर्तयः ।**
**तदाभासास्तथाभावस्थिति-शान्त्युदयादयः ॥ ११ ॥**

तयोः पूर्वोक्तयोर्द्वयोर्मध्ये आद्यः प्रथमोऽसंलक्षितक्रमः । स च किंस्वरूप इत्याह-रसाः शृङ्गारादयो भावा द्विधा स्थायि-सञ्चारिमूर्तयः स्थायि-सञ्चारिरूपाः स्थायिनो रत्यादयः, संचारिणो हर्षादयश्च । तदाभासास्तेषां रसानां भावानां चाभासास्तथा भावानां स्थिति-शान्त्युदयादयोऽवस्थाविशेषा आदिशब्दात् सन्धिशबलत्वपरिग्रहः ॥ ११ ॥

अथ रसस्वरूपमाह—

**विभावैरनुभावैश्च व्यक्तोऽथ व्यभिचारिभिः ।**
**स्थायी रत्यादिको भावो रसत्वं प्रतिपद्यते ॥ १२ ॥**

स्थायिनां विभावानुभाव-व्यभिचारिणां च स्वरूपं वक्ष्यते । विभावै रत्यादेरुन्मीलनकारणैरनुभावैस्तस्यैव कार्यैर्व्यभिचारिभिरस्यैव सहकारिभिर्व्यक्तः प्रादुष्कृतः स्थायी सर्वेषामपि वासनात्मतया स्थितो रत्यादिको रतिप्रभृतिर्भावो रसत्वं शृङ्गारादिरसरूपतां प्रतिपद्यते समाश्रयति । यदुक्तं भरतमुनिना—"विभावानुभाव-व्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति । तदेतट्टीकाकृतो व्याकुर्वते । तथाहि—" विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैर्जनितोऽ-

१ प. ०यो वि० । २ अ. ब. ०मिव । ३ प. ०नुसर० । ४ अ. ०योऽसं० ।

नुभावैः कटाक्ष-भुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतिविषयं नीतो व्यभिचारिभिर्हर्ष-प्रमुखैः सहकारिभिरुपचितः स्थायी रत्यादिको भावो मुख्यया वृत्त्या रामादावनु-कार्ये तद्रूपताऽनुसन्धानान्नर्तकेऽपि प्रतीयमानो रसः।" इति भट्टलोल्लटप्रभृतयः।

"तदिदमत्यन्तं रसैवीथीपृथग्भूतमेव, सामाजिकानामवलोकनागमनादि-प्रयासवैयर्थ्यात्।" इति शङ्कुकोऽन्यथा व्याचष्टे।

"राम एवायमयमेव राम इति सम्यक्प्रतीतेर्न रामोऽयमित्यौत्तरकालिके बाधके रामोऽयमिति मिथ्याप्रतीते रामः स्याद् वा न वाऽयमिति संशयप्रतीते रामसदृशोऽयमिति सादृश्यप्रतीतेश्च विलक्षणया चित्रतुरगादिन्यायेन रामो-ऽयमिति प्रतिपत्त्या ग्राह्ये नटे

"मुखमहह! मृगाक्ष्याः कोऽप्यहो! भ्रूविलासः
कैटिरि! कुचकिशोरौ साधु मध्यस्य भङ्गिः।
जयति जगदशेषं शेषमङ्गं पुनस्तद्
ध्रुवमभवदमुष्याः कश्चिदन्यो विधाता॥ १००॥"

इतो विपिनपङ्क्तयस्तिलकिता रसालाङ्कुरै-
र्मरुन्मलयभूरितः कलमितः पिकीनां रुतम्।
इतश्च नवचम्पकैः सुरभिताः समन्ताद् दिश-
स्तदद्य मयि तां विना भजतु घस्मरत्वं स्मरः॥ १०१॥"

इत्यादिकाव्यानुसन्धानबलादालम्बनोद्दीपनरूपैः कारणैस्तद्विदां शिक्षया पुनः पुनरभ्यासात् सप्रेमावलोकन-स्तम्भ-स्वेद-रोमाञ्चादिभिः कार्यैः सत-ताभ्यासनिर्वर्तिततत्कार्यप्रकटनेन सहकारिभिश्च नटेनैव प्रकाशितैः कृत्रिमैरपि तथाऽनभिसंवेद्यमानैर्विभावादिशब्दव्यपदेश्यैः संयोगाद् गम्यगमकभावरूपात् सम्बन्धादनुमीयमानोऽपि वस्तुतस्तत्र नटे सत्त्वेन वस्तुसौन्दर्यबलाद् रसनीयत्वेन च दूरमन्यानुमीयमानविलक्षणः स्थायित्वेन सम्भाव्यमानो रत्यादिर्भावः सामा-जिकानां चर्व्यमाणो रसः।" इति श्रीशङ्कुकः।

---

१ प. ०वस्तिः। २ प. रथवी०। ३ व. ०कानां ग०। ४ प. ०विपक्त्या०। ५ व. कटरि।

एतदपि न समीचीनम्। रसस्य ह्यनुमीयमानत्वं युक्तिविरुद्धम्, 'त्रिरूपाल्लिङ्गाल्लिङ्गिविज्ञानमनुमानम्' इति वचनाद् वेद्यान्तरसम्पर्कशून्यत्वेनैव च तस्य भाव्यमानत्वाद् इति भट्टनायकोऽन्यथा व्याकुरुते—"न ताटस्थ्येन रसः प्रतीयते, स्वव्यतिरिक्ताश्रयप्रतीतौ रसनीयत्वाभावात्। नाप्यात्मगतत्वेन सीतादावपि कामित्वप्रसङ्गात्। नाप्युत्पद्यते विभावादिकारणानां निवृत्तावपि घटादिवत् तस्यावस्थानप्रसङ्गात्। न च व्यज्यते प्रदीपाद्यभिव्यङ्ग्य-घटादिवत् पूर्वसिद्धत्वाभावात्। किन्तु काव्ये नाट्ये वाऽभिधानान्तरोद्भवेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वो-द्रेकप्रकाशितपरमानन्दसंवलितसंविद्विश्रान्तिस्वरूपेण भोगेन भुज्यते।" इति भट्ट-नायकः।

अत्रापि भावकव्यापारस्य व्यञ्जनव्यापारादाधिक्यममृष्यन् श्रीमानभि-नवगुप्तः प्राह—"लोके प्रमदाद्यैः कारणादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारकत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकि-कविभावादिशब्दव्यवहार्यैर्ममैवैते परस्यैवैते न ममैते न परस्यैते इति सम्बन्धवि-शेषस्वीकारपरिहारनियमानवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनाऽऽत्मतया स्थितः स्थायी रत्यादिकः कतिपयविदग्धसरसप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृतावशादुल्लसितं वेद्यान्तरसम्पर्कशून्यं प्रमातृणामपरिमितभावमनुभवता प्रमात्रा सकलसहृदयसंवाद-भाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभा-वादिजीवितावधिः पानकरसन्यायेन चर्वणीयः पुर इव परिस्फुरन् हृदयमिव प्र-विशन् सर्वाङ्गीणमिवालिङ्गन्नन्यत् सर्वमिव तिरोदधद् ब्रह्मास्वादमिवानुभावय-न्नलौकिकचमत्कारकारी शृङ्गारादिको रसः। स च न कार्यो विभावादिविना-शेऽपि तस्य सम्भवप्रसङ्गात्, नापि ज्ञाप्यः सिद्धस्य तस्याभावादपि तु प्रदीपघटा-द्यपरव्यञ्जकव्यङ्ग्यवैलक्षण्येन विभावादिभिर्व्यञ्जितश्चर्वणीयतागोचरः। कारक-ज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेन्न क्वचिद् दृष्टमित्यलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिक-प्रत्यक्षादिप्रमाणेभ्यः स्वात्मव्यतिरिक्तपदार्थप्रकटनेन ताटस्थ्यावबोधशालिनः

---

१ अ. ०नि ज्ञा०, व. ०पाल्लिङ्गिज्ञा०। २ व. स्वव्यक्तिव्य०। ३ प. ०स्यानवस्थाप्रसङ्गात् न च प्र०। ४ अ. ० ङ्गात् किं। ५ अ. ०न्धवि०, प. ०न्धविशेषस्वी०। ६ अ. ०व स्फु०।

परिमिताद् योगिज्ञानात् तत्त्वविषयोपरागविरहाद् वेद्यसंस्पर्शरहितत्वेन स्वात्म-मात्रपर्यवसितात् जगद्व्यापकत्वेन परिमितेतराद् योगिसंवेदनाच्च विलक्षणस्य लोकोत्तरसंवेदनस्य गोचर इति प्रत्य(त्ये)योऽप्यभिधीयताम् । तद्ग्राहकं च न निर्विकल्पकं विभावादिपरामर्शनप्रधानत्वात् । नापि विकल्पकं चर्व्यमाणस्य सदोल्लेखरहितत्वेनालौकिकानन्दमयस्य तस्य स्वसंवेदनासिद्धत्वात् । उभयाभाव-रूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामवगमयति, न तु विरोधम् ।" इति श्रीमानभिनवगुप्तः ।

विभावादीनां च समस्तानामेव व्यञ्जकत्वम्, न व्यस्तानां व्यभिचारात् । व्याघ्रादयो हि विभावा भयानकस्येव वीराद्भुत-रौद्राणाम् । अश्रुपातादयोऽनु-भावाः करुणस्येव शृङ्गार-वीर-भयानकानाम् । चिन्तादयो व्यभिचारिणः शृङ्गा-रस्येव वीर-करुण-भयानकानाम्, यत्रापि व्यस्तानामुपादानम् । यथा—

" माकन्दालीमरन्दप्रसरभरनमन्मञ्जरीमञ्जुलश्री-
वायुर्वात्येष योषित्प्रणयकलिभिदादक्षिणो दाक्षिणात्यः ।
नादः श्रोत्रैकपेयः परिलुठति कुहूकण्ठकण्ठोदरेषु
ज्योत्स्ना स्वच्छन्दमिन्दोः स्फुरति च मयि तद् देवि ! दासे प्रसीद ॥१०२॥"

इत्यादौ विभावानामेव ।

यथा च—

"परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदपाण्डुः कपोलः॥१०३"

इत्यादावनुभावानामेव ।

यथा वा—

" एष्यत्युत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किञ्चाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णं क्षणा-
च्चक्षुर्जातमहो ! प्रपञ्चचतुरं जातागसि प्रेयसि ॥ १०४ ॥"

---

१ अ. ब. नात्यवि० । २ अ. च नि० । ३ अ. ०रः प्रार्थना निः । ४ ब. च । ५ ब. विचलि० ।

इत्यादौ च औत्सुक्य–व्रीडा–हर्ष–कोपासूया–प्रसादानां व्यभिचारिणामेव । तत्राप्येतेषामसाधारणत्वादन्यतमद्वयापेक्षत्वे सति न व्यभिचार इति ॥ १२ ॥

उक्तं सामान्येन रसस्वरूपमिदानीं तद्भेदानाह—

शृङ्गार–हास्य–करुणा रौद्र–वीर–भयानकाः ।
बीभत्साद्भुत–शान्ताश्च नव नाट्ये रसा अमी ॥ १३ ॥

तत्र सकलप्राणिगणप्रीणकत्वात् पूर्वं शृङ्गारः । तदनुगामी च हास्यः । तद्विपरीतः करुणः । तन्निमित्तमर्थप्रधानो रौद्रः । कामार्थयोर्धर्ममूलत्वाद् धर्मप्रधानो वीरस्तस्य भीताभयप्रदायित्वात् । दुर्विनीतघातोत्थरुधिरास्थिपिच्छिलितरणाङ्गणत्वाच्च तदनन्तरं भयानक–बीभत्सौ । वीरस्य पर्यन्तफलभूतत्वादद्भुतः । ततः सर्वरसप्रतिपक्षभूतो निर्वृतिधर्मात्मकः शिवफलः शान्तः । इत्येते नवैव नाट्यप्रसिद्धा रसाः । ये तु कैश्चिदार्द्रतादिस्थायिनः स्नेहादयो रसाः प्रोक्तास्ते सर्वेऽपि रत्यादिष्वेवान्तर्भवन्तीति न पृथक् प्रतिपादिताः ॥ १३ ॥

अथ शृङ्गारं लक्षयति—

व्यक्ता स्त्री–पुंस–माल्यादिविभावैराश्रिता रतिः ।
व्यभिचारिभिरालस्य–जुगुप्सौग्र्यविवर्जितैः ॥ १४ ॥
सम्भोगविप्रलम्भात्मा शृङ्गाराख्यो रसो भवेत् ।

स्त्री–पुंसाभ्यां परस्परमालम्बन–विभावाभ्यां माल्यादिभिर्माल्यर्तु–शैल–हर्म्यतल–मलयानिल–कौमुदी–कानन–दीर्घिका–जलक्रीडाऽऽदिभिरुद्दीपनविभावैर्व्यक्ता व्यञ्जिता । तथा क्वचित् कैश्चिदालस्य–जुगुप्सौग्र्यरहितैर्व्यभिचारिभिराश्रिता परिवृता कामिनोः परस्परास्थाबन्धात्मिका रतिः स्थायी भावश्चर्वणागोचरं गतः शृङ्गारनामा रसः । स च कीदृशः ? सम्भोग–विप्रलम्भात्मा सम्भोग–विप्रलम्भावात्मा यस्य, न त्वात्मानौ तेन नैतौ तस्य

१ अ. ०ङ्गाको० । २ भ. व. ०याक्षेपकत्वे स० । ३ अ. ०पर्रो० । ४ प. व. निवृत्तिध० ।
५ अ. ०व प्र० । ६ अ. ०भ्यां माल्यर्तु० । ७ व. ०दीर्घि० । ८ व. श्रिता का० । ९ प. संयो० ।
१० प, ०त्माय० ।

भेदौ किन्तु द्वयात्मकं स्वरूपमेव । ततः सम्भोगे विप्रलम्भे च ग्रामैकदेशे ग्राम-शब्दवदुपचारेण शृङ्गारशब्दस्य प्रवृत्तिस्तत्त्वतो द्वयात्मकत्वमेवास्य । तथाहि-सम्भोगे यदि न विरहाशङ्का तदा स्वाधीनेऽनुकूले चानादर एव स्याद् वामत्वात् कामस्य । विप्रलम्भेऽप्यनवच्छिन्न एव सम्भोगमनोरथो निराशत्वे करुण एव स्यादत एव तद्दशाद्वयमीलने सातिशयश्चमत्कारः । यथा—

> " एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
> रन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
> दम्पत्योः शनकैरपाङ्गमिलनामिश्रीभवच्चक्षुषो-
> र्भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहम् ॥ १०५ ॥ "

अत्र व्यभिचारिपङ्क्तौ स्थायिन्या जुगुप्सायाः सन्निवेशः क्वापि स्थायि-नामपि व्यभिचारित्वख्यापनार्थो यथाऽस्या एव शान्ते, रोषस्य भयस्य च शृङ्गारे, तयोर्द्वयोरप्यनुभावास्त्वनन्तरमेव पृथक् पृथग् दशाद्वयलक्षणे वक्ष्यन्ते ॥ १४ ॥

तत्र सम्भोगमाह—

**सौख्यैकमयधृत्यादिसञ्चारी पुलकादिकृत् ॥ १५ ॥**
**सम्भोगः**

यत्र कामिन्यामिष्टानि दर्शनादीनि सम्यग् भुज्यन्ते स सम्भोगः । स च कीदृशः ? सौख्यैकमया आनन्दैकमया धृत्यादयो धृति-व्रीडा-जाड्यादयः सञ्चारिणो व्यभिचारिणो यत्र स तथा । स च पुलकादीन् पुलक-स्वेद-कम्पादी-ननुभावान् करोतीति । अनुभावाः पुरो वक्ष्यन्ते । स च परस्परावलोकनालिङ्गन-चुम्बन-पानाद्यैरनन्तभेदः । यथा—

> " शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
> र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
> विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
> लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ १०६ ॥ "

---

१ प. ०नव० । २ ब. ०न्याम० । ३ प. ०नन्दम० । ४ अ. ०वः पुरो वक्ष्यते ! ५ न. ०बनेक० ।

यथा वा—

" सन्दष्टाधरपल्लवा सचकितं हस्ताग्रमाधुन्वती
मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता ।
सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥१०७॥ " ॥१५॥

अथ विप्रलम्भमाह—

विप्रलम्भस्तु शङ्कादिव्यभिचारिमान् ।
तापादिकृत् स्पृहा–शाप–वियोगेर्ष्या–प्रवासजः ॥ १६ ॥

सम्भोगसुखलोभेन विशेषेण प्रलभ्यते आत्माऽत्रेति विप्रलम्भः । स च पुनः शङ्कादयः शङ्कौत्सुक्य–मद–ग्लानिप्रभृतयस्ते च ते व्यभिचारिणश्च ते विद्यन्ते यस्य स तद्वान् । तापादीन् ताप–जागर–कार्श्य–प्रलापादीननुभावान् करोतीति । स च स्पृहा–शाप–वियोगेर्ष्या–प्रवासेभ्यो जायते । तत्र स्पृहा प्रथमाभिलाष–स्तत्सकाशात् यथा—

" स्मरनवनदीपूरेणोढा मुहुर्गुरुसेतुभि–
र्यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः ।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा
नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥ १०८ ॥ "

शापाद् यथा—

" तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ! ॥ १०९ ॥ "

इदं च शापतिरस्कृतायामुर्वश्यां पुरूरवसो वचनम् ।

---

१ ब. ०ष्टेऽधरपल्लवे । २ प. ०हे आ० । ३ प. ०र्जति० ।

विद्योगाद् यथा—

" अन्यत्र व्रजतीति का खलु कथा नैवास्य तादृक् सुहृद्
यो मां नेच्छति नागतश्च स हहा ! कोऽयं विधेः प्रक्रमः ? ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥ ११० ॥ "

ईर्ष्यातो यथा—

" सा पत्युः प्रथमेऽपराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलना—वक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलोदकैरश्रुभिः ॥ १११ ॥ "

सख्युर्भावः सख्यं सौहार्दं तेनोपदेशैः[3] ।

प्रवासाद् यथा—

" प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वैः समं प्रस्थितं
गन्तव्ये सति जीवित ! प्रियसुहृत्सार्थः किमु त्यज्यते ? ॥ ११२ ॥ "

एवं च यद्यपि चुम्बनालिङ्गनादिभिः सम्भोगस्यानन्त्यमुक्तम्, तथापि पञ्चप्रकारविप्रलम्भानन्तरभावित्वात् तस्यापि पञ्चविधत्वमेव । तत्रे स्पृहानन्तरं सम्भोगो यथा—

*" लीलाइ तुलिअसेलो रक्खउ वो राहिआइ थणवट्ठे ।
हरिणो पढमसमागमसज्झसवसवेविरो हत्थो ॥ ११३ ॥ "

---

*" लीलया तुलितशैलो रक्षतु वो राधिकायाः स्तनपृष्ठे ।
हरेः प्रथमसमागमसाध्वसवशवेपमानो हस्तः ॥

---

१ अ. सहसा । २ अ. ०यमाप० । ३ अ. ०शः तं विना । ४ ब. तत्रापि । ५ ब. ०लिब० ।
६ अ. प. रंख० । ७ प. ०आइ ।

शापानन्तरो यथा वियुक्त-संयुक्तयोः शकुन्तला-दुष्यन्तयोः ।

यथा वा—

" शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानेतान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ११४ ॥ "

अत्र भविष्यतोऽपि सम्भोगस्य शापानन्तरत्वमेव ।

वियोगानन्तरो यथा—

*" रमिऊण पयं पि गओ जाहे अवगूहए पडिनिर्यत्तो ।
अहयं पउत्थवइऔ व्व तक्खणं सो पवासि व्व ॥ ११५ ॥ "

ईर्ष्यानन्तरो यथा—

" ग्रन्थिमुद्ग्रथयितुं हृदयेशे वाससः स्पृशति मानधनायाः ।
भ्रूयुगेन सपदि प्रतिपेदे रोमभिश्च सममेव विभेदः ॥ ११६ ॥ "

प्रवासानन्तरो यथा—

" चिरविरहिणोरुत्कण्ठार्त्या श्लथीकृतगात्रयो-
र्नवमिव जगज्जातं भूयश्चिरादभिनन्दतोः ।
कथमपि दिने दीर्घे याते निशामधिरूढयोः
प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः ॥ ११७ ॥ "

करुणविप्रलम्भस्तु करुण एव । यथा—

---

*रत्वा पदमपि गतो यदाऽवगूहते प्रतिनिवृत्तः ।
अहं प्रोषितपतिकेव तत्क्षणं स प्रवासीव ॥

---

१ प. दुष्क०, अ. दुष्टं० । २ प. ०क्ष्यामः । ३ अ. प. क्षिपा० । ४ अ. ०अत्तो । ५ ब. ०इय ।
६ अ. मियोगः ।

" हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ! ॥ ११८ ॥"

इत्यादि रतिप्रलापेषु ॥ १६ ॥

अथ हास्यमाह—

**व्यक्तो विकृतवेषाद्यैर्नासास्पन्दादिजन्मकृत् ।**
**निद्रादिव्यभिचारी च हासो हास्यत्वमाश्रयेत् ॥ १७ ॥**

देश-काल-वयो-वर्णवैपरीत्याद् विकृतवेषेणाद्यशब्दाद्वर्तनान्यगत्याद्यनुकरणादिभिर्विभावैर्व्यक्तो नासौष्ठ-कपोलस्पन्दन-दृष्टिव्याकोशाकुञ्चनादीनामनुभावानां जन्मकृत् । निद्राऽवहित्थ-त्रपा-ऽऽलस्यादिव्यभिचारी च हासः स्थायिभावो हास्यत्वमाश्रयेत् । स चात्मस्थः परस्थश्च । तत्राद्यो यथा—

" पाणौ कङ्कणमुत्फणः फणिपतिर्नेत्रं ज्वलत्पावकं
कण्ठः कुटितकालकूटकुटिलो वस्त्रं गजेन्द्राजिनम् ।
गौरीलोचनलोभनाय सुभगो वेषो वरस्यैष मे
गण्डोल्लासविभावितः पशुपतेर्हास्योद्गमः पातु वः ॥ ११९ ॥"

परस्थो यथा—

" कनककलशस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् ।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपन्
जयति जनितव्रीडा-हासः प्रियाहसितो हरिः ॥ १२० ॥" ॥ १७ ॥

अथ करुणः—

**इष्टनाशादिभूर्दैवोपालम्भाद्यनुभावभाक् ।**
**दुःखैकमयसञ्चारी शोकः करुणतां भजेत् ॥ १८ ॥**

---

१ अ. ०रमिदं । २ अ. ०री हा० । ३ ब. गंगोम्ल० । ४ ब. द्युतिं । ५ ब. भजेत् ।

इष्टनाशानिष्टसंयोगादिभ्यः प्रादुर्भूतो दैवोपालम्भ–निःश्वासाश्रुक्रन्दादीनामनुभावानां भजनशीलः, निर्वेद–ग्लानि–दैन्यादिदुःखैकमयव्यभिचारी शोकः करुणत्वं श्रयेत् । यथा—

“ यस्याः कुसुमशय्याऽपि कोमलाङ्ग्या रुजाकरी ।
साऽधिशेते कथं देवी हुताशनवतीं चिताम् ! ॥ १२१ ॥ ” ॥१८॥

अथ रौद्रः—

स्म(स्मे)रन् दारापहाराद्यैर्नेत्ररागादिकारणम् ।
औग्र्यादिव्यभिचारी च क्रोधो रौद्ररसो भवेत् ॥ १९ ॥

दारापहार–देशादिनिन्दा–स्वभृत्याधिक्षेप–स्वोपहासादिभिर्विकसन् नेत्ररागे–भ्रुकुटीकरणौष्ठपीडनादीनां जनकः । औग्र्यावेगामर्षादिव्यभिचारी च क्रोधो रौद्ररसो भवति । यथा—

“ अद्राक्षुर्ये नरेन्द्रा द्रुपदतनुभुवः केशपाशावकृष्टिं
चक्रुर्वाऽकारयन् वा मनसि किमपरं येऽन्वमन्यन्त मोहात् ।
सर्वेषामेव तेषां समरमखभुवि क्रोधवह्नौ जुहोति
द्वित्रैर्हुङ्कारमन्त्रैरभिजनसमिधो मध्यमः पाण्डवेयः ॥१२२॥ ” ॥१९॥

अथ वीरः—

न्यायादिबोध्यः स्थैर्यादिहेतुर्धृत्याद्युपस्कृतः ।
उत्साहो दान–युध्–धर्मभेदो वीररसः स्मृतः ॥ २० ॥

प्रतिनायकस्थितन्याय–विक्रम–बलासंमोहादिजागरणीयः स्थैर्य–धैर्य–शौर्यादीनां हेतुर्धृति–स्मृत्यौग्र्य–गर्वादिभिः संस्कृतश्च कोऽप्युत्साहो वीरः स्मृतः । स च दान–युद्ध–धर्मैस्त्रिभेदः । तत्रै दानभेदो यथा—

१ अ. प. ०रोगा०, व. ०कारादि० । २ प. ०रणैः । ३ अ. द्वरसी, व. ०द्रोर० । ४ प. ०रोग० । ५ व. ०दिभिर्व्य० । ६ प. अ. व. रसोभ० । ७ प. ०त्रायो य० ।

"पात्रे पुरोवर्त्तिनि विश्वनाथे क्षोदीयसि क्ष्मावलये च देये ।
व्रीडा स्मितं तस्य तदा तदासीच्चमत्कृतो येन स एव देवः ॥१२३॥"

अत्र तस्येति बलेः ।

युद्धभेदो यथा—

"क्षुद्राः सन्त्रासमेते विजहत हरयः ! क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे ! तिष्ठ पात्रं त्वमपि न हि रुषां नन्वहं मेघनादः
किञ्चित्संरम्भलीलानियमितजलधिं राममन्वेषयामि ॥ १२४ ॥"

धर्मभेदो यथा—

"सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद् विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥१२५॥"

इयमाक्रान्तधेनुं सिंहं प्रति दिलीपस्योक्तिः ।

त्रिभेदोऽपि यथा—

"अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ? ॥ १२६ ॥" ॥२०॥

अथ भयानकः—

**कम्पादिकारणं क्रूरस्वरश्रुत्याद्युदञ्चितम् ।**
**भयं भवति शङ्कादिव्यभिचारि भयानकः ॥ २१ ॥**

पिशाचादिक्रूरश्रवण—तद्दर्शन—स्वजनबन्ध—वधादिभिरुदञ्चितमुल्लासितं कम्प—स्वेद—बलनिरीक्षणादीनां कारणं शङ्काऽपस्मार—मरण—त्रासादिव्यभिचारि[6] भयं भयानको भवति । यथा—

---

१ प. विक्र० । २ अ. ब. विहि० । ३ ब. ०क्रंदत० । ४ ब. रुचैरं स्व० । ५ ब. ०ल्लसि० । ६ अ. ०रि भया०

" ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥१२७॥"२१॥

अथ बीभत्सः—

**अरम्यालोकनाद्युत्था सङ्कोचादिनिबन्धनम् ।**
**बीभत्सः स्याज्जुगुप्साऽपस्मारादिव्यभिचारिणी ॥ २२ ॥**

अरम्याणामुद्धवादीनामालोकन-श्रवणादिभ्य उत्तिष्ठन्ती गात्रसङ्कोच-हृल्लास--नासा--मुखविकूणनादीनां[1] निबन्धनमपस्मारौग्र्य-मोहव्यभिचारिणी जुगुप्सा बीभत्सः । यथा—

" उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा—
न्यंस-स्फिक्-पृष्ठ-पिण्ड्याद्यवयवसुलभान्युग्रपूतीनि[2] जग्ध्वा ।
आत्तस्नाय्वन्त्रनेत्रात् प्रकटितदशनः प्रेतरङ्कः करङ्का—
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥१२८॥"२२॥

अथाद्भुतः—

**दिव्यरूपावलोकादिस्मेरो हर्षाद्यलङ्कृतः ।**
**दूरं नेत्रविकासादिकारणं विस्मयोऽद्भुतः ॥ २३ ॥**

दिव्यरूपदर्शनेप्सितप्राप्ति-रम्यकाननाद्यवलोकनादिभिः स्मेरः सविकासो[3] नेत्रविकास-रोमाञ्च-साधुवादादीनां कारणं हर्षावेग-जडताऽऽदिभिरलङ्कृतश्च[4] चित्तविस्तारात्मा विस्मयोऽद्भुतः । यथा—

" कृष्णेनाम्ब ! गतेन रन्तुमधुना मृद् भक्षिता स्वेच्छया
सत्यं कृष्णक एवमाह मुशली मिथ्याऽम्ब ! पश्याननम् ।
व्यादेहीति विकासिते शिशुमुखे माता समग्रं जगत्
दृष्ट्वा यस्य जगाम विस्मयपदं पायात् स वः केशवः ॥१२९॥"२३॥

---

१ अ. ०क्वण०, प. ०क्वण० । २ व. ०न्युग्रपू०, अ. ०न्यंतपू० । ३ प. ०कारो ने० ।
४ अ. ०तः चि० ।

अथ शान्तः—

**वैराग्यादिविभावोत्थो यमप्रभृतिकार्यकृत् ।**
**निर्वेदप्रमुखोर्जस्वी शमः शान्तत्वमश्नुते ॥ २४ ॥**

वैराग्य-संसारभय-तत्त्वज्ञानादिविभावेभ्य उत्तिष्ठन् यम-नियमाध्यात्मशास्त्रचिन्तादिकार्यकारी[1] निर्वेद-धृति-स्मृति-मत्यादिभिरूर्जस्वी तृष्णाक्षयरूपः शमः शान्तत्वमाप्नोति । यथा—

" गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्येषु ते निर्विशङ्काः
कण्डूयन्ते जरठहरिणाः शृङ्गकण्डूं विनेतुम् ॥ १३० ॥ " २४ ॥

अथ स्थायिभावानाह—

**रतिर्हासश्च शोकश्च क्रोधोत्साह-भयानि च ।**
**जुगुप्सा-विस्मय-शमाः स्थायिभावाः प्रकीर्तिताः ॥ २५ ॥**

कामिनोर्मिथस्तुल्यः प्रेमबन्धो रतिः । सा च नैसर्गिकयादिभिः प्रकारैरनेकधा शृङ्गारत्वं स्पृशति । तत्र नैसर्गिकी यथा—

" इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात् पिनाकपाणिं पतिमाप्तुमिच्छति ॥ १३१ ॥ "

अत्र जन्मान्तरवासना निसर्गः ।

सांसर्गिकी यथा—

" भित्त्वा सद्यः किशलयपुटान् देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति ! मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ १३२ ॥ "

---

१ अ. ०दिकारी । २ ब. मण्डलेन ।

अत्रोद्दीपनविभावत्वादप्रिया अपि प्रेयसीसंसर्गात् प्रिया वायवः ।

औपमानिकी यथा—

" अपि जनकसुतायास्तच्च तच्चात्ररूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥ १३३ ॥ "

सेयं सीताविषया रतिस्तदुपमानदर्शनेन रामं रमयति ।

आध्यात्मिकी यथा—

" कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत् तु दूयमानं प्रत्याययतीव मां चेतः ॥ १३४ ॥ "

अत्र शापाज्ञातविस्मृतेर्दुष्यन्तस्य शकुन्तलायामाध्यात्मिकी रतिः ।

आभियोगिकी यथा—

" अलसलुलित-मुग्ध-स्निग्ध-निःस्पन्द-मन्दै—
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै—
रपहृतमपविद्धं पीतमुन्मूलितं वा ॥ १३५ ॥ "

अत्रानुरक्तमालतीकटाक्षाभियोगात् माधवस्य रतिरतीवोद्द्योतते ।

साम्प्रयोगिकी यथा—

" उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ।
हुं हु मुञ्च म म मेति च मन्दं जल्पितं जयति मानवतीनाम् ॥१३६॥"

अत्र मानिन्याः सम्प्रयोगे रत्युल्लासः प्रतीयते ।

आभिमानिकी यथा—

" इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।

---

१ प. अ. ०ष्टंत०, व. ०क्कंत. । २ व. ०स्मित० । ३ अ. च ।

अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ १३७ ॥"

अत्र रुचिविशेषोऽभिमानः ।

वैषयिकी तु शब्दादिविषयोद्भवा । तत्र शब्दाद् यथा—

"विलासमसृणोल्लसन्मुसललोलदोःकन्दली-
परस्परपरिस्खलद्वलयनिःस्वनोद्बन्धुराः ।
हरन्ति कलहुंकृतिप्रसभकम्पितोरुस्तन-
त्रुटद्गमकसङ्कुलाः कलमकण्डनीगीतयः ॥ १३८ ।"

स्पर्शाद् यथा—

"बध्नन्नङ्गेषु रोमाञ्चं कुर्वन् मनसि निर्वृतिम् ।
नेत्रे चामीलयन्नेष प्रियेःस्पर्शः प्रवर्तते ॥ १३९ ॥"

रूपाद् यथा—

"ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तथा हि सर्वेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ १४० ॥"

रसाद् यथा—

"कस्य नो कुरुते मुग्धे ! पिपासाकुलितं मनः ? ।
अयं ते विद्रुमच्छायो मरुमार्ग इवाधरः ॥ १४१ ॥"

गन्धाद् यथा—

"*रंधणकम्मसु निउणे ! मा जूरसु रत्तपाडलसुअंधं ।
मुहमारुअं पिअन्तो धूमाइ सिही न पज्जलइ ॥ १४२ ॥"

एवं हासादीनामपि स्मित-विहसितापहसितादयः कतिचिद् भेदाः सम्भ-

---

* रन्धनकर्मसु निपुणे ! मा खिद्यस्व रक्तपाटलसुगन्धम् ।
मुखमारुतं पिबन् धूमायते शिखी न प्रज्वलति ॥

---

१ अ. ०स्तु० । २ ब ०मल्प० । ३ अ. ०यंधं । ४ अ. ब. मुह० ।

न्ति। ग्रन्थगौरवभयान्नोदाह्रियन्ते। स्वस्वरसादन्यत्रानभिगामित्वात् सर्वकालमात्मनः सब्रह्मचारित्वाच्च रत्यादीनां स्थायित्वम्, हर्षादीनां तु तद्विपरीतत्वाद् व्यभिचारित्वम् ॥ २५ ॥

अथ स्थायिनां रसत्वाभिव्यक्तिहेतूनालम्बनोद्दीपनविभावाननुभावान् व्यभिचारिणश्च बिभणिषुरालम्बनविभावानाह—

आलम्बनविभावाः स्युः पुंस्पुरन्ध्रिपुरःसराः।
यानालम्ब्य क्षणाद् बद्धस्फातिर्भावो विभाव्यते ॥ २६ ॥

परस्परं पुंस्पुरन्ध्रयो नर–नार्यः पुरःसरशब्दाद् विकृतवेषेष्टनाशादयः स्थायिनां, प्रियागमादयश्च व्यभिचारिणामालम्बनविभावाः। कुत इत्याह—यानालम्ब्येति। यानवलम्ब्य भावः स्थायि–व्यभिचारिरूपः क्षणाद् बद्धप्रकर्षो विभाव्यते संवेद्यते ॥ २६ ॥

अथोद्दीपनविभावाः—

उद्दीपनविभावास्तु कौमुदी–काननादयः।
समृद्धिं संश्रयन् भावः काममुद्दीप्यते हि तैः ॥ २७ ॥

कौमुदी–केलिकानन–माल्यर्तु–हर्म्यतल–दीर्घिका–जलक्रीडाऽऽदयः पुनरुद्दीपनविभावाः। कुत इत्याह—समृद्धिमित्यादि। हि यस्मात् कारणात् भावः स्थायी सञ्चारी वा समृद्धिमुत्कर्षमाश्रयन् काममत्यर्थं तैरुद्दीप्यते ॥ २७ ॥

अथानुभावाः—

ये कटाक्ष–भुजोत्क्षेप–भ्रू–मुखभ्रमणादयः।
स्तम्भाद्याः सात्त्विका ये च भावलीलादयश्च ये ॥ २८ ॥
ते सर्वेऽप्यनुभावाः स्युर्येन सामाजिकाः किल।
तैर्भावाननुभाव्यन्ते स्थायि–सञ्चारिसंज्ञकान् ॥ २९ ॥

---

१ व. ०त्क्षे०।

कटाक्ष-भुजाक्षेप-भ्रूभ्रमण-मुखभ्रमण-मेखलास्खलन-श्वसित-सन्ताप-जागरादयो नासास्पन्दन-दैवोपालम्भादयश्च ये ते सर्वेऽप्यनुभावाः स्युरित्युत्तरेण योगः ॥ २८-२९ ॥

तथा—

' स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ ३० ॥ '

इत्युक्तन्यायेन येऽष्टौ सात्त्विका भावास्तेऽप्यनुभावाः । तत्र स्तम्भो यथा—

" * तं ताण हयच्छायं निच्चललोअणसिहं पउत्थपयावं ।
आलिक्खपईवाण व नियय पयइचडुलत्तणं पि विअलिअं ॥ १४३ ॥ "

स्वेदो यथा—

" स्नेहनिर्भरमदत्त वधूनामार्द्रतां वपुरसंशयमन्तः ।
यूनि गाढपरिरम्भिणि वस्त्रैक्नोपमम्बु वपुषे यदनेन ॥ १४४ ॥ "

रोमाञ्चो यथा—

" + करिमरि ! अयालगज्जिअजलयासणिपडणपडिरवो एसो ।
पइणो धणुरवकंखिरि ! किं रोमंचं मुहा वहसि ? ॥ १४५ ॥ "

अत्र करिमरी बन्दी । सा च स्वमोचनार्थं भर्तुरागमनाकाङ्क्षिणी ।

स्वरभेदो यथा—

" पि पि प्रिय ! स स स्वयं मु मु मुखासवं देहि मे
त त त्यज दु दु द्रुतं भ भ भाजनं काञ्चनम् ।

---

* तत् तेषां हतच्छायं निश्चललोचनशिखं प्रोषितप्रतापम् ।
आलेख्यप्रदीपानामिव निजकं प्रकृतिचटुलत्वमपि विगलितम् ॥

+ बन्दि ! अकालगर्जितजलदाशनिपतनप्रतिरव एषः ।
पत्युर्धनूरवकाङ्क्षिणि ! किं रोमाञ्चं मुधा वहसि ? ॥

---

१ अ. ०कास्ते । २ ब. ०न धत्त । ३ अ. ०स्नोक्नो०, ब. ०क्नोपनों० । ४ अ. करमरि । ५ अ. ०कंखिर, ब. ०काखिरि ६ अ. करमरी ।

इति स्खलितजल्पितं मदवशात् कुरङ्गीदृशः
प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥ १४६ ॥ ”

वेपथुर्यथा—

“ मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्य हस्तलिखिता मम मञ्जरीति ।
अन्याऽपि किं नु सखि ! भाजनमीदृशीनां
वैरी न चेद् भवति वेपथुरन्तरायः ॥ १४७ ॥ ”

वैवर्ण्यं यथा—

“ *सहि ! साहसु तेण समं अहं पि किं निग्गया पभायंमि ।
अन्न चिय दीसइ जेण दप्पणे का वि सा न(सु)मुही ॥ १४८ ॥ ”

अश्रु यथा—

“ उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं बाष्पं कुरु स्थिरतया विहितानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे मार्गे पदानि खलु ते विषमीभवन्ति॥१४९॥

प्रलयो यथा—

“ तीव्राभिषङ्गप्रभवेन वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्त्तं कृतोपकारेव रतिर्बभूव ॥ १५० ॥ ”

एते[11] च शरीरोद्भवा एवानुभावतां भजन्ते। ये तु प्राणभूमिप्रसृतरत्यादिसंवे-
दनवृत्तयो बाह्यजडरूपभौतिकनेत्रजलादिविलक्षणा विभावेन रत्यादिगतेनैवावि-

---

* सखि ! कथय तेन सममहमपि किं निर्गता प्रभाते ? ।
अन्यैव दृश्यते येन दर्पणे काऽपि सा सुमुखी ॥

---

१ व. ०चले । २ अ. कांतःस्वह०, प. कांतस्व० । ३ अ. सखि न । ४ अ. पहायंमि, प. पयायंमि । ५ अ. चिअ । ६ व. को वि, प. सा मुही । ७ व. ०त्पक्ष्मणो० । ८ व. ०ष्पांकुर० । ९ व. ०नमा० । १० व. ०मीषलानि । ११ अ, एते च० । १२ व. ०नतुरू० । १३ व. क्षणवि० ।

चर्वणागौरवेणादृता अनुभावैश्च गम्यमानास्ते भावा एव भवन्ति । तथाहि— पृथ्वीविभागप्रधाने प्राणे सङ्क्रान्तश्चित्तवृत्तिगणः स्तम्भो विष्टब्धचेतनत्वं जलप्रधाने तु बाष्पः । तेजसस्तु प्राणनैकट्यादुभयथा तीव्रातीव्रत्वेन प्राणानुग्रह इति । स्वेदो वैवर्ण्यं च तद्धेतुत्वाच्च तथा व्यवहारः । आकाशानुगतचेतनत्वं प्रलयः । वायुस्वातन्त्र्ये तु तस्य मन्दमध्योत्कृष्टावेशात् त्रिधा । रोमाञ्च–वेपथु–स्वरभेदभावेन स्थितिरिति भरतविदः । तथा ये च भावादयो ये च लीलादयस्तेऽप्यनुभावास्तेषु शैशवात्ययेऽल्प–बहु–भूयोविकारात्मका भावादयो भाव–हाव–हेलास्त्रयोऽङ्गजाः । तत्र भावो यथा—

" दृष्टेः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रं प्रेषयति प्रवर्तितसखीसम्भोगवार्तास्वपि ।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग् यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥ १५१ ॥ "

हावो यथा—

" स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतीनामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः ? ॥ १५२ ॥ "

हेला यथा—

" तरन्तीवाङ्गानि स्खलदमललावण्यजलधौ
प्रथिम्नः प्रागल्भ्यं स्तन–जघनमुन्मुद्रयति च ।
दृशो लीलारम्भाः स्फुटमपवदन्ते सरलता–
महो ! सारङ्गाक्ष्यास्तरुणिमनि गाढः परिचयः ॥ १५३ ॥ "

---

१ ब. ०हृता । २ ब. यया । ३ अ. अल्पबहुवि०, ब. ०गे ब० । ४ ब. दृष्टे । ५ अ. प्रेक्ष०, ब. प्रेंक्ष०, ६ प. ०जीवित० । ७ अ. ०लयति । ८ ब. ०निधौ ।

अथ लीलाऽऽदयो दश स्वाभाविकास्तत्र प्रेम्णा प्रियचेष्टानुकृतिर्लीला यथा–

*" जं जं करेसि जं जं च जंपसे जह तुमं नि[2]यंसेसि ।
तं तमणुसिखिरीए [3]दीहो दियहो न संवडइ ॥ १५४ ॥ "

ऊर्ध्वतादिस्थानादीनां वैशिष्ट्यं विलासो यथा—

" अत्रान्तरे किमपि वाग्विभवातिवृत्त–
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद् भूरिसात्त्विकविकारैर्विशेषैरम्य–
माचार्यकं विजयि मान्मथमाविरासीत् ॥ १५५ ॥ "

सौभाग्यगर्वादल्पस्य भूषणादेर्विन्यासो विच्छित्तिर्यथा—

" अङ्गानि चन्दनरजःपरिधूसराणि ताम्बूलरागसुभगोऽधरपल्लवश्च ।
अच्छाञ्जने च नयने वसनं तनीयः कान्तासु भूषणमिदं विभवस्तु शेषः॥१५६॥"

विभूषणादीनामस्थानविन्यासो विभ्रमो यथा—

" चकार काचित् सितचन्दनाङ्के काञ्चीकलापं स्तनभारपृष्ठे ।
प्रियं प्रति प्रेषितचित्तवृत्तिर्नितम्बबिम्बे च बबन्ध हारम् ॥ १५७ ॥ "

स्मित–हसित–रुदित–भय–रोषादीनां सङ्करः किलिकिञ्चितं यथा—

" रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्द्रमधरे ।
कृतभ्रूभङ्गाऽसौ प्रकटितविलक्षार्द्ररुदित–
स्मितक्रुद्धोद्भ्रान्तं क्षणमपि विदध्यान्मयि मुखम् ॥ १५८ ॥ "

---

* यद् यत् करोषि यद् यच्च जल्पसि यथा त्वं निवससि ।
तत् तदनुशिक्षयित्र्या दीर्घो दिवसो न सम्पतति ॥

---

१ प. ०कृतानु० । २ अ निअंडे० । ३ प. दियहो२, अ. दीहो दीओ । ४ व. ०कारि ।
५ अ. ०शेखरस्य । ६ अ. ०भयमा० । ७ प. रसःप० । ८ व ०णत्क० । ९ व. ०ध्यामपि ।

प्रियकथादौ तद्भावनोत्था चेष्टा मोट्टायितं यथा—

" स्मरदवथुनिमित्तं गूढमन्वेतुमस्याः
सुभग ! तव कथायां प्रस्तुतायां सखीभिः ।
हरति वितंतपृष्ठोदग्रपीनस्तनाग्रा
ततवलयितबाहुर्जृम्भितैः साऽङ्गभङ्गैः ॥ १५९ ॥ "

केश-स्तनाधरादिग्रहणाद् दुःखेऽपि हर्षः कुट्टमितं यथा—

" ह्रीभरादवनतं परिरम्भे रागवानवटुजेष्ववकृष्य ।
अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत् ॥ १६० ॥ "

सौभाग्यगर्वादिष्टेऽपि वस्तुन्यनादरो बिब्बोको यथा—

" निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥ १६१ ॥ "

सुकुमारतया कर-चरणाद्यङ्गन्यासो ललितं यथा—

" सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती
सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन ।
विन्यस्यन्ती चरणकमले लीलया स्वैरपातै-
र्निःसङ्गीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥ १६२ ॥ "

वक्तव्यसमयेऽपि वचसाऽनभिलैाप्य क्रियानुष्ठानं विहृतं यथा—

" पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥ १६३ ॥ "

एते च भावादयो विंशतिरलङ्काराः स्त्रीणामित्युक्तमन्यैः । अस्माभिस्तु तेष्वाद्यास्त्रयोदश अप्राप्तसम्भोगतायामपि सम्भवन्तीत्यनुभावत्वेनापि प्रतिपा-

१ च. ०नत० । २ च. ०हुं जृं० । ३ च ०लप्य ।

दिताः । शोभा–कान्ति–दीप्ति–माधुर्य–धैर्यौदार्य–प्रागल्भ्यनामानस्तु सप्त प्राप्त-सम्भोगतायामेव भवन्तीत्यलङ्कारा एव नानुभावतां भजन्तीति । कथमेतेऽनुभावा इत्याह येनेत्यादि । येन कारणेन तैः कटाक्षादिभिः सामाजिकाः सभ्याः स्थायिनः सञ्चारिणश्च भावांश्चित्तवृत्तिविशेषाननुभवन्तोऽनुभाव्यन्ते ज्ञाप्यन्ते किलेति पूर्वाचार्योक्तौ तेनानुभावा इति ॥ ३० ॥[3]

अथ व्यभिचारिणः—

हर्ष–व्रीडा–श्रमामर्षाः प्रबोधो मतिरुग्रता ।
अवहित्थमपस्मारः शङ्काऽथ जडता मदः ॥ ३१ ॥

विषादो ग्लानिरालस्यं दैन्यमावेग–चापले ।
उन्मादो व्याधिरौत्सुक्यं वितर्क–मरणे धृतिः ॥ ३२ ॥

चिन्ता त्रासस्तथाऽसूया निद्रा सुप्तमथ स्मृतिः ।
निर्वेद–मोहौ गर्वश्चेत्युदिता व्यभिचारिणः ॥ ३३ ॥[4]

इत्यमुना प्रकारेण विविधमाभिमुख्येन स्थायिधर्माणामुपजीवनेन स्वधर्माणां समर्प्पणेन च चरन्तीति व्यभिचारिण उदिताः कथिताः ॥ ३१–३३ ॥[5]

अथ तान् प्रत्येकं विभावानुभावविभूषितानाह । तत्र हर्षस्य सर्वाभिलषणीयत्वात् प्रथमं निर्देशः—

इष्टप्राप्त्यादिभिर्जन्यो हर्षोऽङ्गपुलकादिकृत् ।

इष्टप्राप्ति–राजप्रसादादिभिर्जननीयश्चित्तप्रसादात्मको हर्षः । स चाङ्गपुलक–नयन–वदनप्रसादादीनि करोति । यथा—

" जातस्य ते पितुरपीन्द्रजितो निहन्तुर्वत्सस्य वत्स ! कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमनुतिष्ठति वीरधर्मं दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥ १६४ ॥"

---

१ प. अ. ०लभ्यमा० । २ प. अ. भवतीत्य० । ३ प. युग्मम् । ४ प. कुलकम् । ५ प. त्रिभिः कुलकम् ।

अथ व्रीडा—

**वैवर्ण्यादिकरी व्रीडा दुष्कृत्यकरणादिजा ॥ ३४ ॥**

दुष्कृत्यकरण-प्रतिज्ञाभङ्गादेर्जायमानश्चित्तसङ्कोचो व्रीडा । सा च वैवर्ण्या-धोमुखत्व-भूविलेखनादीनि करोति । यथा—

" अक्षत्रारिकृत्ताभिमन्युनिधनप्रोद्भूततीव्रक्रुधः
पार्थस्याकृत शात्रवप्रतिकृतेरन्तः शुचा मुह्यतः ।
कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयो
हा ! वत्सेति गिरः स्फुरन्ति न पुनर्निर्यान्ति कण्ठाद् बहिः ॥१६५॥३४॥"

अथ श्रमः—

**व्यायामादिभवो गात्रभङ्गादिजनकैः श्रमः ।**

व्यायाम-मार्गगत्यादिप्रभवः[3] श्रमो मनः-शरीरखेदः । स च गात्रभङ्ग[4]-मन्दक्रमणास्यविकूणितादीनां जनकः । यथा—

" अलसलुलितमुग्धान्यध्वसम्पातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
मृदुमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ १६६ ॥ "

अथामर्षः—

**क्षेपादिप्रभवोऽमर्षः स्वेद-कम्पादिकारणम् ॥ ३५ ॥**

विद्यैश्वर्य-बलाधिकविहितक्षेपावमानादिजनितोऽमर्षः प्रतिचिकीर्षा । स च स्वेद-कम्प-ध्यानोपायान्वेषणादीनां कारणम् । यथा—

---

१ अ. व्रीडा यथा । २ प. ०नितः । ३ प. ०दिभ० । ४ प. ०ङ्गाक० । ५ व. संप्रांत० । ६ अ. खेदशि० ।

" लाक्षागृहानल-विषान्न-सभाप्रवेशैः प्राणेषु चित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधान-केशाः स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥"

अथ प्रबोधः—

**शब्दश्रुत्यादिसञ्जन्यः प्रबोधो जृम्भणादिकृत् ।**

शब्दश्रुति-स्पर्शादि-निद्रापगमहेतुसञ्जन्यश्चेतनागमः प्रबोधः । स च जृम्भणाक्षिमर्दनाङ्गभङ्गादीनि करोति । यथा—

" प्रत्यग्रोन्मेष-जिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवा जृम्भणैः साङ्गभङ्गैः ।
नागाङ्कं मोक्तुमिच्छोः शयनगुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ १६८ ॥ "

अथ मतिः—

**शास्त्रचिन्तादिभूः शिष्योपदेशादिकरी मतिः ॥ ३६ ॥**

शास्त्रचिन्तनोहापोहादिभ्योऽर्थनिश्चयो मतिः । सा च शिष्योपदेशार्थविकल्पन-संशयच्छेदादीनि करोति । यथा—

" असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥१६९॥ " ३६ ॥

अथोग्रता—

**चौर्यादिजन्मा वाग्-दण्ड-पारुष्यादिकृदुग्रता ।**

चौर्य-द्रोहादिसम्भवं चण्डत्वमुग्रता । सा चापकारिणं प्रति वाग्-दण्डपारुष्य-वधादीनि करोति । यथा—

" प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।

---

१ अ. ०ह्रादि क० । २ ब. ०प्रत्ययो० । ३ अ. संदेश० । ४ अ. ०हास्य० ।

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पतति शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ १७०॥ ”

अथावहित्थम्—

**लज्जादेरवहित्थं स्यादन्यथाकथनादिकृत् ॥ ३७ ॥**

लज्जा–भयादिभ्यो मुखरागाद्याकारगोपनमवहित्थम् । तच्चान्यथाकथन वलोकित–कथाभङ्ग–कृतकधैर्यादीनि करोति । यथा—

“ एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ १७१ ॥ ” ३७॥

अथापस्मारः—

**ग्रहादिजन्माऽपस्मारः प्रकम्पप्रमुखावहः ।**

ग्रह–भूत–पिशाच–शून्यारण्य–स्मशानसेवनादिसम्भूतिरावेशरूपोऽपस्मारः। स च प्रकम्प–स्फुरित–श्वसित–भूमिलुठनादीन्यावहति । यथा—

“ आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ १७२ ॥ ”

अथ शङ्का—

**चौर्यादिभूर्निजान्येभ्यः शङ्का पार्श्वेक्षणादिकृत् ॥ ३८ ॥**

चौर्य–पारदार्यादिजन्या स्वकीयेभ्यः परेभ्यो वाऽनिष्टोत्प्रेक्षा शङ्का । सा च पार्श्वेक्षण–मुखौष्ठ–कण्ठशोषादीनि करोति । यथा—

“ दूराद् दवीयो धरणीधराभं यस्ताडकेयं तृणवद् व्यधूनोत् ।
हन्ता सुबाहोरपि ताडकारिः स राजपुत्रो हृदि बाधते माम् ॥ १७३ ॥ ”

कुत्रचित् प्रियत्वेनापि जायते । यथा—

---

१ ब. तव क्षि० । २ प. ०नि करोति ।

*" सहसा मा साहिज्जउ पिआगमो तीइ विरहकिसिआए ।
अच्चंतपहरिसेणावि जा मया सा मयँ चेव ॥ १७४ ॥ " ३८ ॥

अथ जाड्यम्—

तूष्णीम्भावादिकृज्जाड्यमिष्टानिष्टेक्षणादिजम् ।

इष्टानिष्टदर्शन-श्रवण-स्मरण-व्याध्यादिजातं क्रियास्वपाटवं जाड्यम् । तच्च तूष्णीम्भावानिमिषनयननिरीक्षणादीनि करोति । यथा—

" शिथिलशिथिलं न्यस्य स्वैरं धनुःशिखरे शिरो
नयनसलिलैः कुर्वन् मौर्वीलतामपरामिव ।
अहह ! विकलः श्रुत्वा श्रुत्वा घनस्तनितध्वनिं
किमपि किमपि ध्यायन्नार्यो न याति न तिष्ठति ॥ १७५ ॥ "

अथ मदः—

मदो मद्यादिसम्भूतिः स्वाप-हास्यास्मृतादिकृत् ॥ ३९ ॥

मद्य-मदनादिसम्भवः सम्मोहानन्दसम्पर्करूपो मदः । स च स्वाप-हास्यास्मरणासम्बद्धप्रलाप-गीत-नृत्तादीनि करोति । यथा—

" घूर्णमाननयनं स्खलत्कथं स्वेदबिन्दुमदकारणस्मितम् ।
आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥ १७६ ॥ " ३९॥

अथ विषादः—

विषादः कार्यभङ्गादेः सहायान्वेषणादिकृत् ।

---

* सहसा मा कथ्यतां प्रियागमस्तस्यै विरहकृशितायै ।
अत्यन्तप्रहर्षेणापि या मृता सा मृतैव ॥

---

१ व. प्रिया॰ । २ व. ॰सिया॰ । ३ अ. मय चेय, व. मया चेव । ४ पं. ॰नृत्यादी॰, अ. ॰नृत्तानि ।

उपायाभाव-नाशादिभ्यः संजातात् कार्यभङ्गादेर्मनःपीडा विषादः । स च सहायान्वेषणोपायचिन्तनोत्साहभङ्गादीनि करोति । यथा—

" व्यर्थं यत्र कपीन्द्रसख्यमपि मे क्लेशः कपीनां वृथा
प्रज्ञा जाम्बवतो न यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वापि मे ॥ १७७ ॥ "

अथ ग्लानिः—

व्याध्यादिविहिता ग्लानिर्वैवर्ण्यप्रभृतिप्रसूः ॥ ४० ॥

व्याधि-निद्राच्छेदोपवासाध्वलङ्घनादिभिर्विहिता बलापचयरूपा ग्लानिः । सा च वैवर्ण्य-क्षामनेत्र-कपोलोक्ति-श्लथाङ्गत्वादीनि प्रसूते[1] । यथा—

" किसलयमिव मुग्धं बन्धनाद् विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ १७८ ॥ " ४० ॥

अथालस्यम्—

निद्रादिकरमालस्यं श्रमादिरचितोदयम् ।

श्रम-सौहित्य-मदादिजनितोदयं क्रियासु शिथिलत्वमालस्यम् । तच्च निद्रा-सर्वकर्मविद्वेष-शयनासनादीनि करोति । यथा—

*" घरिणिघणत्थणपेल्लणसुहेल्लिपडिअस्स होंतपहिअस्स ।
अवसउणंगारय-वार-विट्ठिदिअहा सुहायंति ॥ १७९ ॥ "

* गृहिणीघनस्तनप्रेरणसुखकेलिपतितस्य भवत्पथिकस्य ।
अपशकुनाङ्गारक-वार-विष्टिदिवसाः सुखायन्ते ॥

१ प. प्रसूयते । २ प. किशल० । ३ अ. ०गन्धप० । ४ अ. ०अस्स ।

अथ दैन्यम्—

दौर्गत्यादिभवं दैन्यमसंस्कारादिकारणम् ॥ ४१ ॥

दौर्गत्य–मनस्तापादिभ्योऽनोजस्वित्वं दैन्यम् । तच्च शरीरासंस्कार–वाक्यानुत्कर्षादीनां कारणम् । यथा—

" अस्मान् साधु समीक्ष्य संयमधनानुच्चैः कुलं चात्मन–
स्त्वय्यस्याः कथमप्यबान्धवकृतां प्रेमप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतः परं न खलु तद् स्त्रीबन्धुभिर्याच्यते[1] ॥१८०॥" ४१ ॥

अथावेगः—

विस्मयादिकृद[2]ावेगः स्यादुत्पात[3]ादिसम्भवः ।

उत्पात–वात–वर्षाग्नि–प्रियाप्रियश्रवण–दर्शनादिसम्भवः सम्भ्रम आवेगः । स च विस्मयावगुण्ठन–[illegible]श्रयण–धूमान्ध्य–पुलकविलोप–स्वराऽऽदीनि करोति । यथा—

" अलमलमतिमात्रं साहसेनामुना ते
त्वरितमयि ! विमुञ्च त्वं लतापाशमेनम् ।
चलितमिव निरोद्धुं जीवितं जीवितेशे[4] !
क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥ १८१ ॥ "

अथ चापलम्—

रागादेश्चापलोद्भेदः स्वात्मप्रकटनादिकृत् ॥ ४२ ॥

राग–द्वेष–मात्सर्यादिभ्यश्चेतोऽनवस्थानरूपस्य चापलस्योद्भेदः । स च स्वात्मप्रकटन–निर्भर्त्सनादीनि करोति । यथा—

---

१ अ. यास्यते । २ अ ॰कृदुद्वे॰ । ३ प. अ. ॰त्पातादि॰ । ४ व. ॰तेश ।

" कश्चित् कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाश्चकार ॥ १८२ ॥ "४२॥

अथोन्मादः—

## उन्मादो विप्रयोगादेरनिमित्तस्मितादिसूः ।

इष्टविप्रयोग-धननाश-ग्रहादेश्चित्तविप्लव उन्मादः । स चानिमित्तस्मित-रुदित-गीत-नृत्तासम्बद्धप्रलापादीनि सूते । यथा—

" श्यामां श्यामलिमानमानयत भोः ! सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥ १८३ ॥ "

अथ व्याधिः—

## विरहादेर्मनस्तापो व्याधिः स्रस्ताङ्गताऽऽदिकृत् ॥ ४३ ॥

विरहाभिलाषादिभ्यो मनस्तापो व्याधिः । स च स्रस्ताङ्गता-मुखशोष-गात्रविक्षेपादीनि करोति । यथा—

" स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथाऽन्तर्मन्मथोत्थामवस्थाम् ।
अतिशयपरितापग्लापिताभ्यां यथाऽस्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥ १८४ ॥ " ४३ ॥

अथौत्सुक्यम्—

## त्वरादिकरमौत्सुक्यमिष्टानुस्मरणादिजम् ।

इष्टानुस्मरण-दर्शनादेर्विलम्बासहत्वमौत्सुक्यम् । त्वरा-निःश्वसितोच्छ्व-सित-कार्श्यादीनि करोति । यथा—

१ अ. न. ०द्वित० । २ प. ०य भोः ।

" द्वित्रैः पाणिसरोरुहं त्रिचतुरैर्धम्मिल्लमाल्यस्रजः
कण्ठान्मौक्तिकवल्लरीस्तदनु च क्षिप्ताः पदैः पञ्चषैः ।
हित्वा भारपरम्परामिति जवात् त्वां देव ! संवीक्षितुं
तन्वङ्गी निरपायमध्वनि मुहुः श्रोणीभरं निन्दति ॥ १८५ ॥ "

अथ वितर्कः—

वितर्कः संशयादिभ्यः शिरःकम्पादिकारणम् ॥ ४४ ॥

संशय-विमर्श-विप्रतिपत्त्यादिभ्य ऊहविशेषो वितर्कः । स च शिरःकम्प-भ्रूत्क्षेपादीनां कारणम् । यथा—

" चित्ते निवेश्य परिकल्पितसत्त्वयोगाद्
रूपोच्चयेन घटिता मनसा कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ १८६ ॥ " ४४ ॥

अथ मृतिः—

जाता व्याध्यभिघाताभ्यां कृशतादिकरी मृतिः ।

व्याधिर्ज्वरादिः, सर्प-विष-शस्त्र-गजादिसम्भवोऽभिघातस्ताभ्यां जाता मृतिर्मृत्योः प्रागवस्था; साक्षान्मृतौ त्वनुभावाभावात् । सा च व्याधिजा हिक्का-श्वासादीन्यभिघातजा तु कार्श्य-वेपथु-दाहादीनि करोति । तत्र व्याधिजायां न तथा चमत्कार इतीयं नोदाहृता । अभिघातजा यथा—

" स गतः क्षितिमुष्णशोणितार्द्रो खुरदंष्ट्राग्रनिपातदारिताश्मा ।
असुभिः क्षणमीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिर्निरासे ॥ १८७ ॥ "

शृङ्गारे तु मरणाध्यवसायो मरणादूर्ध्वं झटिति पुनर्योगो वा निबध्यते । अन्यत्र तु स्वेच्छा । तत्र मरणाध्यवसायो यथा—

---

१ प. हत्वा । २ प. ०त्र स्वे० ।

" सम्प्राप्तेऽवधिवासरे क्षणममुं तद्धर्म्यवातायनं
वारं वारमुपेत्य निष्क्रियतया निश्चित्य किञ्चिच्चिरम् ।
सम्प्रत्येव निवेद्य केलिकुररीः साश्रुः सखीभ्यः शिशो-
र्माधव्याः सहकारकेण करुणः पाणिग्रहो निर्मितः ॥ १८८ ॥ "

पुनर्योगो यथा—

" तीर्थे तोयव्यतिकरभवे जह्नुकन्या-सरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा सङ्गतः कान्तयाऽसौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ १८९ ॥ " ४५ ॥

अथ धृतिः—

इष्टलाभादिजनिता धृतिरव्यग्रभोगदा ॥ ४५ ॥

इष्टलाभ-ज्ञान-बाहुश्रुत्यादिभिर्जनिता ससन्तोषता धृतिः । सा च लब्धानामुपभोगेन नष्टानामननुशोचनेन च योऽव्यग्रो भोगस्तं ददाति । यथा—

" यातो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोशलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन् करोमि[2] स्पृहाम् ॥ " ४५॥

अथ चिन्ता—

दारिद्र्यादिकृता चिन्ता सन्तापाद्युदयैकभूः ।

दारिद्र्येष्टवियोगैश्वर्यभ्रंशादिकृतो ध्यानविशेषश्चिन्ता । सा च स्मृतेरन्या प्रसनाददनवत् । इयं च वितर्कात् ततो वा वितर्क इति वितर्कादप्यपरैव । सा च सन्ताप--शून्यचित्तत्व-कार्श्य-श्वासादीनामुदयैकभूमिः । यथा—

---

१ प. ०न यो० । २ अ ०रोति । ३ अ. ०कार्य० ।

*" चिंता णियदइयसमागमंमि कयमन्नुआइ भरिऊण ।
सुण्णं कलहायंती सहीहिं रुण्णा न उण हसिआ ॥ १९१ ॥ "

अथ त्रासः—

निर्घातादिभवस्त्रासो गात्रसङ्कोचनादिकृत् ॥ ४६ ॥

निर्घात–गर्जित–भू–पर्वतकम्प–विद्युत्पातादिभ्यश्चित्तचमत्काररूपस्त्रासो भयात् पूर्वापरविचारवतो भिन्न एव । सर्वाङ्गसङ्कोच–स्तम्भ–गद्गद–प्रलापोत्कम्पादीनि करोति । यथा—

" परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥१९२॥"४६

अथासूया—

परोत्कर्षादिजाऽसूया स्यादवज्ञाऽऽदिकारिणी ।

परस्य सौभाग्यैश्वर्य–विद्याऽऽदिभिरुत्कर्षादपराध–मुहुर्द्वेषादिभ्यश्च जायमानाऽक्षमारूपाऽसूया । सा चावज्ञा–भ्रुकुटि–क्रोध–सेर्ष्योक्तिविलोकित–दोषापवर्णनादीनि करोति । यथा—

" वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ये ।
यानि त्रीणि कुतो मुखान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ १९३ ॥ "

अथ निद्रा—

---

*चिन्ता निजदयितसमागमे कृतमन्युकया भृत्वा ।
शून्यं कलहायन्ती सखीभी रुदिता न पुनर्हसिता ॥

---

१ अ. णिअदइअ०, व. ०तामणियदय० । २ अ. प्रल्यो० । ३ व. ०ष्ठन्ति । ४ व. हि ते, अ. महांहितो । ५ अ. ०णि मु० ।

क्रमाद्युन्मीलिता निद्रा जृम्भादीनां कृतोदया ॥ ४७ ॥

क्रम–मदालस्य–चिन्ताऽत्याहार–स्वभावादिभिरुन्मीलिता निद्रा सकलेन्द्रियनिमीलनम् । सा च जृम्भा–शिरोलोलन–नेत्रघूर्णनोच्छ्वसित–निःश्वसिताक्षिनिमीलनादीनामुदयं करोति । यथा—

*" निद्दालसपरिघुम्मिरतंसवलंतद्धतारयालोया ।
कामस्स वि दुव्विसहा दिट्ठिनिवाया ससिमुहीए ॥ १९४ ॥ " ४७ ॥

अथ सुप्तम्—

निद्रयोन्मुद्रितं सुप्तमथोत्स्वप्नायितादिकृत् ।

अथानन्तरं निद्रयोन्मुद्रितमुन्मीलितं सुप्तं निद्राया एव गाढावस्था । तच्चोत्स्वप्नायितोच्छ्वसित–निःश्वसित–संमोहनादीनि करोति । यथा—

+" ओसुयइ दिण्णपडिवक्खवेयणं पसिढिलेहिं अंगेहिं ।
निव्वत्तिअसुरयरसाणुबंधसुहनिब्भरं सुन्हा ॥ १९५ ॥ "

अथ स्मृतिः—

वस्त्वन्तरावलोकादेर्भ्रूत्क्षेपादिकरी स्मृतिः ॥ ४८ ॥

वस्त्वन्तरं किञ्चिदेकं वस्तु दर्शन–स्पर्शन–श्रवणेभ्योऽभिज्ञानावलोकन–प्रणिधानादिभ्यश्च पूर्वानुभूतार्थप्रतिभासः स्मृतिः । सा च भ्रूत्क्षेप–शिरःकम्प–मुखोन्नमनादीनि करोति । यथा—

" अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातैरपनीतखेदः ।

* निद्राऽलसपरिघूर्णमानत्र्यस्रवलदर्धतारकालोकाः ।
कामस्यापि दुर्विषहा दृष्टिनिपाताः शशिमुख्याः ॥

+ उत्स्वपिति दत्तप्रतिपक्षवेदनं प्रशिथिलैरङ्गैः ।
निर्वर्तितसुरतरसानुबन्धसुखनिर्भरं स्नुषा ॥

१ प. उद्ध० । २ अ. ०मवस्था० । ३ अ. ०र्थस्मृ० ।

रहस्त्वदुत्सङ्गनिषण्णमूर्द्धा स्मरामि वानीरगृहेषु सुप्तम् ॥ १९६ ॥ "

अत्र वानीरगृहदर्शनाद् रामस्य पूर्वानुभूतसुप्तस्मृतिः । इहं च वस्त्वन्तरमसदृशमेव गृह्यते । सदृशदर्शनाद् वस्त्वन्तरस्मृतौ हि स्मरणालङ्कारो वक्ष्यते । प्रणिधानाद् यथा-'अहो ! कोपेऽपि कान्तं मुखम्' इति । एवमन्यदपि ज्ञेयम् ॥ ४८ ॥

अथ निर्वेदः—

निर्वेदस्तत्त्वबोधादिजन्यः सङ्गोज्झनादिकृत् ।

तत्त्वज्ञान-रोगाधिक्षेप-ताडन-दारिद्र्यादिप्रसूतिर्निर्वेदो मनःखेदः । स च सङ्गत्याग-निःश्वसित-रुदितादीनि करोति । यथा—

" जरा-मरण-दौर्गत्य-व्याधयस्तावदासताम् ।
मन्ये जन्मादि(पि) धीराणां भूयो भूयस्त्रपाकरम् ॥ १९७ ॥ "

अथ मोहः—

प्रहारादिप्रसूतात्मा मोहोऽङ्गभ्रमणादिकृत् ॥ ४९ ॥

प्रहार-मत्सर-भय-दैवोपघातादिदुःखहेतुभिः प्रियसङ्गमादिसुखहेतुभिश्च जनितस्वरूपो मोहश्चित्तस्य मूढत्वम् । स चाङ्गभ्रमण-घूर्णन-पतन-सर्वेन्द्रियप्रलयादीनि करोति । यथा—'तीव्राभिषङ्गप्रभवेन वृत्तिम्' इत्यादि ।

यथा वा—

" कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनात्
तद्वासः श्लथमेखलागुणधृतं किञ्चिन्नितम्बे स्थितम् ।
एतावत् सखि ! वेद्मि साम्प्रतमहं तस्याङ्गसङ्गे पुनः
कोऽसौ काऽस्मि रतं नु किं कथमिति स्वल्पाऽपि मे न स्मृतिः ॥"

अथ गर्वः—

असूयादिप्रसूर्गर्वो विद्यादिविहितोन्नतिः ।

---

१ अ. इह व० । २ प. ऽद्भुतं ।

विद्या-बल-कुलैश्वर्य-वयो-रूप-धनादिभिः कृतोन्नतिः परावज्ञा गर्वः । स चासूयाऽमर्षोपहासाधिक्षेपादीनि प्रेङ्खते । यथा—

" धृतायुधो यावदहं तावदन्यैः किमायुधैः ? ।
यद्वा न सिद्धमस्त्रेण मम तत् केन सेत्स्यति ? ॥ १९९ ॥ "

अथैतेषामुपसंहारमाह—

**त्रयस्त्रिंशदमी भावा यथावदिह लक्षिताः ॥ ५० ॥**

अमी कथितस्वरूपास्त्रयस्त्रिंशत्सङ्ख्या व्यभिचारिणो भावा यथावत् पूर्वाचार्यानतिक्रमेणास्मिन् शास्त्रे लक्षिताः कृतलक्षणव्यक्तयः ॥ ५० ॥

अथ विभावानुभाव-व्यभिचारिणां रसस्य कार्य-कारणसहकारिभूतानां स्वरूपमभिधाय तस्यैव प्रक्रियाविशेषानाह—

**भावो जन्मानुबन्धोऽथ निष्पत्तिः पुष्टि-सङ्करौ ।**
**ह्रासश्चेति बुधैः सप्त रसस्य प्रक्रियाः स्मृताः ॥ ५१ ॥**

इत्यमुना प्रकारेण रसस्य भावादिरूपतया सप्त प्रक्रियाः प्रपञ्चाः स्मृताः कथिता बुधैः पूर्वसूरिभिः । तत्र सात्त्विकाद्यनुभावान् विना कुतश्चिन्निमित्तमात्रात् लोचनव्यापारणादे रत्यादिभावानामुन्मीलनानुमानेऽपि परिस्फुटत्वाभावाद् भावरूपतामत्यजन्तो रसा एव भावा इत्यभिधीयन्ते । यथा—

" हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ २०० ॥ "

अत्र लोचनव्यापारेण गिरिशस्य रतिमात्रोन्मीलनानुमानेऽपि शृङ्गारस्य भावत्वमेव ।

अथ जन्म—

---

१ ब. परासूया । २ प. करोति । ३ प. ०दस्त्रं । ४ ब. प० थैषा० । ५ प. ०था तत् ।
६ प. ०ह० । ७ ब. ०स्य ह० । ८ अ. प. ०मात् र० । ९ ब. तथा । १० प. रह० ।

दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ २०५ ॥ ”

अत्र मालत्या माधवं प्रत्युल्लसिता रतिः पुनःपुनरुत्पन्नेन वलितग्रीव-कटाक्षविक्षेपलक्षणेनानुभावेनानुबध्यमाना रसत्वमाश्रयति । माधवस्य तु मालतीं प्रति तदात्वोत्पन्ना रतिः । धृति-स्मृति-हर्षादिभिर्व्यभिचारिभिर्वचन-रूपेणानुभावेन चानुबध्यमाना ।

अथ निष्पत्तिः—

विभावादिसंयोगाद् रसस्य पर्याप्तता निष्पत्तिः । यथा—

“ तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेप एव पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ २०६ ॥ ”

अत्र जन्मान्तरसंस्काराद् गिरिभुवः प्रतिकूलवर्तिन्यपि शूलिनि सर्वदाऽप्यविच्छिन्ना रतिर्दुश्चरेणापि तपसा प्रार्थनीयस्य तस्याकस्मिकदर्शनेन सद्यःसञ्जातस्तम्भ-स्वेद-वेपथुभिर्धृतिहर्षावेग-साध्वसादिभिश्च तत्रैव पदनिक्षेपलक्षणेन शरीरानुभावेन च संसृज्यमाना रसत्वेन निष्पद्यते ।

अथ पुष्टिः—

रसस्य प्रकर्षः पुष्टिः । यथा—

“ पीनश्रोणि गभीरनाभि निभृतं मध्ये भृशोच्चस्तनं
पायाद् वः परिरब्धमब्धिदुहितुः कान्तेन कान्तं वपुः ।
स्वावासानुपघातनिर्वृतमनास्तत्कालमीलद्दृशे
यस्मै सोऽच्युतनाभिपद्मवसतिर्वेधाः शिवं ध्यायति ॥ २०७ ॥ ”

अत्र लक्ष्मीपतेर्लक्ष्मीं प्रति तैस्तैर्गुणैरुन्मीलितां तदवयवकामनीयकावलोको रतिमुद्दीपयन् ब्रह्मणः समक्षमप्यालिङ्गनलक्षणश्च शरीरानुभावो लज्जाप्र-

---

१ प. ०ला:क्षा । २ प. ०भाधृतिरति० । ३ अ. ०न्तसं० । ४ प. ०दाऽवि० । ५ अ. ०सोप्रा० ।

रत्यादिभावानामेव सात्त्विकाद्यनुभावैर्व्यभिचारिभिश्चाविर्भावमात्रेण रसस्य जन्मेत्युच्यते । यथा—

" अभूद् वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।
अस्मिन् द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन ॥ २०१ ॥ "

अत्र स्वेद–रोमोद्गमाभ्यां रत्याविर्भावेन रसस्य जन्म ।

यथा वा—

" ततः सुनन्दावचनावसाने लज्जां मृदूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत् सा वरणस्रजेव ॥ २०२ ॥ "

अत्र तु[3] प्रसाददृष्टिप्रेषणेन ।

यथा वा—

" तयोरपाङ्गप्रविचारितानि किञ्चिद्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ॥ २०३ ॥ "

अत्र पुनर्व्रीडासमुल्लासेन ।

अथानुबन्धः—

अनुभावादिना क्वचिदनेकेन क्वाप्येकेन वा पुनःपुनरुत्पन्नेन वा स्थायिनामनुगमनमनुबन्धः । तत्रानेकेन यथा—

" विवृण्वती शैलसुताऽपि भावमङ्गैः स्फुटद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥ २०४ ॥ "

अत्र पार्वत्या स्मरारौ पूर्वमुन्मीलिता रतिः पुलकावहित्थाभ्यामनुबध्यमाना रसत्वाय कल्पते ।

एकेनैव पुनःपुनरुत्पन्नेन यथा—

" यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।

१ प. छिन्ना० । २ प. ०वसाव० । ३ अ. तु सुप्र० । ४ अ. ०मन्त्र० । ५ प. व. ०न स्था० ।
६ अ. रतिः पुनः पुनरुत्पन्नेन वलितक० ।

अत्र योषिति रोषाख्यभावान्तरतिरस्कारात् पुरुषे चान्यानुरक्तत्वाद् रतिप्रकर्षस्य ह्रासोऽवसीयते ॥ ५१ ॥

अथालङ्कारकृतं रसोपकारमाह —

तत्परैर्नातिनिर्व्यूढैर्निर्वाहेऽप्यङ्गतां गतैः ।
समये चाहृतत्यक्तैरलङ्कारैः स चीयते ॥ ५२ ॥

स इति रसोऽलङ्कारैरनुप्रासोपमाद्यैश्चीयते काममुपचयं याति । कीदृशैस्तत्परैस्तत्परत्वेन रसोपकारकत्वेन निवेशितैर्न बाधकत्वेन नापि ताटस्थ्येन । यथा—

" चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकगतः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं तु खलु कृती ॥ २१० ॥ "

अत्र भ्रमरस्वभावोक्तिरलङ्कारो रसोपकारकत्वेन निबद्धो रसतत्परः ।

बाधकत्वेन यथा—

" स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीबाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यमङ्गानपेक्षम् ॥ २११ ॥ "

अत्र पीडयेवेत्युत्प्रेक्षाऽलङ्कारस्तदनुग्राहकश्चार्थश्लेषः करुणोचितान् विभावानुभावानाविष्कुर्वन् बाधकत्वेन भाति ।

ताटस्थ्येन यथा—

" लीलावधूतपद्मा प्रथयन्ती पक्षपातमधिकं नः ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥ २१२ ॥ "

---

१ प. ०द्रतिरति० । २ प. ०यंतियांति । ३ ब. तत्त्वोन्मेषा० । ४ ब. च मु०, खलु कृ० ।
५ प. व्यक्तः । ६ ब. ०मुपेत्य ।

णाशलक्षणां प्रेम्णोऽष्टमीमवस्थां प्रकाशयन् रसं पुष्णाति । अत्र चानुक्ता अप्यन्येऽनुभाव-व्यभिचारिणः प्रतीयन्ते । श्रियोऽपि समग्रगुणाश्रये विष्णौ तथाभूतां तदभ्यधिकां वा रतिमुद्दीपयन् प्रियाऽऽलिङ्गन-नयननिमीलनाद्यनुभावाश्च परां रसपुष्टिं जनयन्ति ।

अथ सङ्करः—

स्थायिनो भावस्य रसत्वं प्रतिपद्यमानस्य रसभावमाश्रयद्भिर्भावान्तरैः संसर्गः सङ्करः । यथा—

" राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद् विकलं द्रुतं करुणया विक्षोभितं विस्मयात्
कोपेन ज्वलितं मुदा विकसितं चेतः कथं वर्तते ? ॥ २०८ ॥ "

अत्र माधवस्य मालत्यां पूर्वमुन्मीलिता रतिस्तद्दीनदशाविलोकनादिभिरुद्दीपनविभावैरुद्दीप्यमाना मनो-वाग्-बुद्धि-शरीरानुभावैरलङ्कृता परां रसकाष्ठामारोहन्ती भय-शोक-विस्मय-क्रोध-हर्षैर्भावान्तरैः पृथक् पृथग् विभावानुभाव-व्यभिचारिसंयोगादुत्कर्षमाश्रयद्भिः सङ्कीर्यमाणा विशेषातिशायिनी प्रतीयते । अत्र च चेतसो वैकल्यादिविभावनं मनोऽनुभावः । वाक्योच्चारणं वागनुभावः । राहोरिव दस्योश्चन्द्रकलामिव प्रेयसीमित्यादिर्बुद्ध्यनुभावः । आच्छिन्दत इत्यादिः शरीरानुभावः ।

अथ ह्रासः—

रसप्रकर्षस्यापगमो ह्रासः । यथा—

" कोपो यत्र भ्रुकुटिघटना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ २०९ ॥ "

---

१ प. ०याव० । २ प. ०कीर्य० ।

अत्र योषिति रोषाख्यभावान्तरतिरस्कारात् पुरुषे चान्यानुरक्तत्वाशङ्के रतिप्रकर्षस्य ह्रासोऽवसीयते ॥ ५१ ॥

अथालङ्कारकृतं रसोपकारमाह—

तत्परैर्नातिनिर्व्यूढैर्निर्वाहेऽप्यङ्गतां गतैः ।
समये चाहृतत्यक्तैरलङ्कारैः स चीयते ॥ ५२ ॥

स इति रसोऽलङ्कारैरनुप्रासोपमाद्यैश्चीयते काममुपचेयं याति । कीदृशैस्तत्परैस्तत्परत्वेन रसोपकारकत्वेन निवेशितैर्न बाधकत्वेन नापि ताटस्थ्येन । यथा—

" चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकगतः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं तु कृती ॥ २१० ॥ "

अत्र भ्रमरस्वभावोक्तिरलङ्कारो रसोपकारकत्वेन निबद्धो रसतत्परः ।

बाधकत्वेन यथा—

" स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीबाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥ २११ ॥ "

अत्र पीडयेवेत्युत्प्रेक्षाऽलङ्कारस्तदनुग्राहकश्चार्थश्लेषः करुणोचितान् विभावानुभावानाविष्कुर्वन् बाधकत्वेन भाति ।

ताटस्थ्येन यथा—

" लीलावधूतपद्मा प्रथयन्ती पक्षपातमधिकं नः ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥ २१२ ॥ "

---

१ प. ०द्रतिरति० । २ प. ०यंतियांति । ३ व. तत्त्वोन्मेषा० । ४ व. च हु०, खलु कृ० । ५ प. व्यक्तः । ६ व. ०मुपेत्य ।

अत्र फलकगतसागरिकाप्रतिबिम्बदर्शनाजाताभिलाषमात्रस्य वत्सराजस्य तथाविधसङ्गमेच्छाविरहात् तटस्थस्येवेयमुक्तिरिति । श्लेषानुगृहीतोपमाप्राधान्येन प्रस्तुतो रसो गुणीकृतः ।

तथा नातिनिर्व्यूढैर्नात्यन्तं निर्वाहं गतैर्यथा—

" कोपात् कोमललोलबाहुलतिकापाशेन बध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥ २१३ ॥ "

अत्र रूपकमारब्धमप्यनिर्व्यूढं रसोपकाराय ।

न त्वेवं यथा—

" स्वञ्चितपक्ष्मकपाटं नयनद्वारं स्वरूपताडेन ।
उद्घाद्य मे प्रविष्टा देहगृहं सा हृदयचौरी[2] ॥ २१४ ॥ "

अत्र चौरी नयनद्वारमित्येतावदेव सुन्दरं न त्वपरं रूपणम् ।

तथा निर्वाहेऽप्यङ्गतां गतैः अङ्गतां रसपोषकत्वं प्राप्तैर्यथा—

" श्यामास्वङ्गं चकितहरिणीप्रेक्षिते दृष्टिपातान्
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते भीरु ! सादृश्यमस्ति ॥ २१५ ॥ "

अत्र तद्भावाध्यारोपैरूपनिदर्शनानुप्राणकं सादृश्यं यथोपक्रान्तं तथा निर्वाहितमपि रसोपचयाय ।

न त्वेवं यथा—

" न्यञ्चत्कुञ्चितमुत्सुकं हसितवत् साकूतमाकेकरं
व्यावृत्तं प्रसरत् प्रसादि मुकुलं सप्रेम कम्प्रं स्थिरम् ।

---

१ ब. कूटस्य०, अ. ०स्येवे० । २ ब. चारी० । ३ प. ०त्र न० । ४ अ. गतैर्य० । ५ अ. इंब० । ६ प. ०रोपनि० । ७ अ. निर्वहि० ।

उद्भ्रु भ्रान्तमपाङ्गवृत्ति विकचं मज्जत् तरङ्गोत्तरं
चक्षुः साश्रु च वर्तते रसवशादेकैकमन्यक्रियम् ॥ २१६ ॥"

अत्र रावणनेत्रविंशतिस्वभावोक्तिर्निर्वाहिताऽपि रसाङ्गत्वेन न योजिता ।
तथाऽङ्गत्वेऽपि समये काले आहतैर्गृहीतैर्यथा—

"उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥ २१७ ॥"

अत्रोपमा तदनुग्राहकश्च श्लेप ईर्ष्याविप्रलम्भस्य भाविनश्चर्वणाभिमुख्यं कुर्वन्तौ समये रसस्यारम्भदशायां निबद्धत्वादुपकारिणौ ।

आहतैरप्यवसरे त्यक्तैर्यथा—

"रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे ! मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक ! केवलमहं धात्रा सशोकः कृतः ॥ २१८ ॥"

अत्र प्रबन्धप्रवृत्तोऽपि श्लेषानुगृहीतोपमालङ्कारो व्यतिरेकविवक्षया त्यज्यमानो रसोपकारी ॥ ५२ ॥

अथ रसाभास-भावाभासानाह—

**आभासा रस-भावानामनौचित्यप्रवर्त्तनात् ।**

---

१ व. ॰मानात्तदहेतुमा॰ । २ प. ॰त्यर्थे॰, ब. ॰त्युक्ते॰ । ३ प. सखे ना॰ । ४ अ. ॰भावाभा॰ ।

रसानां भावानां चाऽऽभासा भवन्ति । कस्मादनौचित्येन प्रवर्तनात् परवनितादिष्वभिलाषादिप्रवृत्तिरनौचित्यं तेन प्रवृत्तो रसो रसाभासो भावस्तु भावाभासः ।

तत्र रसाभासो यथा—

* " पुलयं जणंति दहकंधरस्स राहवसरा सरीरंमि ।
जणयसुआफंसमहग्घकरयलायड्ढिअविमुक्का ॥ २१९ ॥ "

भावाभासो यथा—

" निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
कान्तिः प्राव(भ)रणं तनोर्मधुमुचो यस्याश्च वाचः किल ।
विंशत्या रचिताञ्जलिः करतलैस्त्वां याचते रावण-
स्तां द्रष्टुं जनकात्मजां हृदय हे ! नेत्राणि मित्रीकुरु ॥ २२० ॥ "

अत्रौत्सुक्यम् ।

अथ प्रकारान्तरेण तानेवाह—

**आरोपात् तिर्यगाद्येषु वर्जितेष्विन्द्रियैरपि ॥ ५३ ॥**

तिर्यगादिष्विन्द्रियवर्जितेष्वपि च नायकत्वारोपात् रसाभास-भावाभासाः । तत्र तिर्यक्षु सम्भोगाभासो यथा—

" मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः ।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ २२१ ॥ "

विप्रलम्भाभासो यथा—

---

* पुलकं जनयन्ति दशकन्धरस्य राघवशराः शरीरे ।
जनकसुतास्पर्शमहार्घकरतलाकृष्टविमुक्ताः ॥

---

१ अ. पर० ।

" आपृष्टासि व्यथयति मनो दुर्बला वासरश्री-
रेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकि ! ।
नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा
दैवायत्तस्तदिह भवतीमस्वतन्त्रस्त्यजामि ॥ २२२ ॥ "

भावाभासो यथा—

" त्वत्कटाक्षावलीलीलां विलोक्य सहसा प्रिये ! ।
वनं प्रयात्यसौ व्रीडाजडदृष्टिर्मृगीजनः ॥ २२३ ॥ "

अत्र व्रीडा ।

आदिशब्दान्निशा-शशिनोः सम्भोगाभासो यथा—

" अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ २२४ ॥ "

दिवस-सन्ध्ययोर्विप्रलम्भाभासो यथा—

" अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः ।
अहो ! दैवगतिश्चित्रा तथापि न समागमः ॥ २२५ ॥ "

हीनजातिषु मनुष्येष्वपि केऽपि रसाद्याभासं मन्यन्ते । यथा—

* " विक्किणइ माहमासंमि पामरो पोरयं वइल्लेण ।
निध्धूममुम्मुरे सामलीएँ थणए निअच्छंतो ॥ २२६ ॥ "

अथेन्द्रियवर्जितेषु सम्भोगाभासो यथा—

" पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ २२७ ॥ "

---

* विक्रीणाति माघमासे पामरो बदरं बलीवर्देन ।
निर्धूममुर्मुरौ श्यामायाः स्तनौ पश्यन् ॥

---

१ अ. क्षिप० । २ व. ०जलदृष्टि० । ३ अ. ०मुम्मरे । ४ ब. ०अऐ । ५ प. ०स्तपु० ।

विप्रलम्भाभासो यथा—

" वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छायातटरुहतरुभ्रंशिभिः शीर्णपर्णैः ।
सौभाग्यं ते सुभग ! विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ २२८ ॥ "

भावाभासो यथा—

" गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।
अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥ २२९ ॥ "

अत्र ग्लानिः । इदं च तिर्यगादिगतमाभासत्वं शृङ्गारविषयमेव, नान्यरस-विषयम्, ' ग्रीवाभङ्गाभिरामम् ' इत्यादावप्याभासत्वप्रसङ्गात् ॥ ५३ ॥

अथ व्यभिचारिभावानामवस्थाविशेषानाह—

**स्थितिस्तथोदयः शान्तिः सन्धिः शबलता तथा ।**
**इत्येताः सर्वभावानामवस्थाः पञ्च कीर्तिताः ॥ ५४ ॥**

इत्येताः स्थित्युदय-शान्ति-सन्धि-शबलतालक्षणाः सर्वव्यभिचारिभावानां पञ्चसङ्ख्या दशाः सूरिभिः प्रकीर्तिताः ।

तत्र स्थितिर्यथा—

' तिष्ठेत् कोपवशात् प्रभावपिहित-' इत्यादि । अत्र वितर्कस्य ।

उदयो यथा—

" एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूर्ष्णीं स्थितस्तत्क्षणात्
मा भूत् सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ २३० ॥ "

---

१ ब. ०भिजीर्ण०, प. ०पत्रैः । २ अ. ०रादिवि० । ३ ब. ०न्यवि० ।

अत्रौत्सुक्यस्य ।

शान्तिर्यथा—

" दृष्टे लोचनवन्मनाग् मुकुलितं पार्श्वे स्थिते वक्त्रवत्
न्यग्भूतं बहिराशितं पुलकवत् स्पर्शे समातन्वति ।
नीवीबन्धवदागतं शिथिलतां सम्भाषमाणे ततो
मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥ २३१ ॥ "

अत्र ह्री-रोषयोः ।

सन्धिर्यथा—

" श्रुत्वा दाशरथी सुवेलकटके साटोपमर्द्धे धनु-
ष्टङ्कारैः परिपूरयन्ति ककुभः प्रोच्छन्ति कौक्षेयकान् ।
अभ्यस्यन्ति तथैव चित्रफलके लङ्कापतेस्तत् पुन-
र्वैदेहीकुचपत्रवल्लिरचनाचातुर्यमर्द्धे कराः ॥ २३२ ॥ "

अत्रावेगावहित्थयोः ।

शबलता यथा—

" क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः ! स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ? ॥२३३॥ "

अत्र वितर्कौत्सुक्य-मति-स्मरण-शङ्का-दैन्य-धृति-चिन्तानाम् ॥५४॥

ननु सर्वत्र रसानामेव मुख्यत्वम्, तत् किं भाव-स्थित्यादयोऽत्र मुख्यतयाऽभिहिता इत्याह—

**यद्यपि ध्रुवमेतेषां रसाङ्गत्वं तथापि ते ।**
**स्पृशन्ति क्वचिदङ्गित्वमङ्गभावं रसाः पुनः ॥ ५५ ॥**

---

१ अ. ०र्वस्थि० । २ प. प्रेञ्छेति । ३ प. शिशुल० । ४ व. ०न्याय० । ५ प. ०यो मु० ।

एतेषां भाव-स्थित्यादीनां यद्यपि ध्रुवं निश्चितं रसान् प्रत्यङ्गत्वमनुगामित्वं तथापि क्वचित् काव्यविशेषे ते कविव्यापारवशादङ्गित्वं प्रधानत्वं स्पृशन्ति, रसाः पुनरङ्गभावमप्रधानत्वम् । यथा हि विवाहप्रवृत्तः कश्चिदत्यन्तवल्लभो भृत्यः पृथ्वीपतिनाऽप्यनुगम्यते, तथैतेऽपि रसैरिति ॥ ५५ ॥

पुनर्भावानां स्वरूपविशेषमाह—

रतिर्देवादिसङ्क्रान्ता व्यभिचारी तु सर्वतः ।
युक्तावपि विभावाद्यैर्न[2] भावत्वं विमुञ्चतः ॥ ५६ ॥

देवादिषु देव-मुनि-माता-पितृ-नृप-पुत्रादिषु सङ्क्रान्ता रतिर्व्यभिचारी[3] पुनः सर्वत्रापि स्वैः स्वैर्विभावादिभिर्व्यञ्जितावपि भावरूपतां न परित्यजतः ।

तत्र देवविषया रतिर्यथा—

" उदञ्चन्तां वाचो मधुरिमधुरीणाः खलु न मे
न[4] चाप्युज्जृम्भन्तां नवभणितयो भङ्गिसुभगाः ।
क्षणं स्तोत्रव्याजादपि यदि भवन्तं हृदि नये
तदात्मा पावित्र्यं नियतमियतैवाश्नोति मम ॥ २३४ ॥ "

मुनिविषया यथा—

" गृहाणि नाम तान्येव तपोराशिर्भवादृशः ।
पवित्रयति यान्येवं पवित्रैः[6] पादपांसुभिः ॥ २३५ ॥ "

पुत्रविषया यथा—

" आलक्ष्यदन्तमुकुलाननवद्धहासानव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्कागतान् प्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा पुरुषीभवन्ति ॥"

व्यभिचारी यथा—

" जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृशैं पाणिनेति रुदती गन्तुं प्रवृत्ता ततः ।

---

१ ब. तथा० । २ अ. भावाद्यं । ३ अ. ०री रति । ४ प. तवाप्यु० । ५ अ. ०चितम० ।
६ प. ब. पावनैः ०सुभिः । ७ अ. ०शति, प. ०स्पृश ।

नो यावत् परिरम्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रः कृतः ॥ २३७ ॥"

अत्र विधिं प्रत्यसूया । रतिरेव कान्ताविषयतां परित्यजन्ती कैश्चित् प्रीति-रित्युच्यते, कान्तासङ्क्रान्ता तु शृङ्गारः ॥ ५६ ॥

अथ पूर्वोक्तमुपसंहरन् उत्तरभणितव्यमुपक्रमते—

इत्यलक्ष्यक्रमः प्रोक्तो लक्ष्यो लक्ष्यक्रमोऽधुना ।
शब्दार्थोभयमूलत्वात् स च त्रैविध्यमश्नुते ॥ ५७ ॥

इति प्रागभिहितप्रकारेणालक्ष्यक्रमो व्यङ्ग्योऽर्थः प्रतिपादितः । साम्प्रतं लक्ष्यक्रमो लक्ष्यो लक्षणीयः क्रमो व्यञ्जकव्यङ्ग्यस्वरूपो यस्य स तथा लक्ष्यो लक्षयितव्यः । स च लक्ष्यक्रमस्त्रैविध्यं त्रिविधत्वमश्नुते व्याप्नोति । कस्मात् ? शब्दार्थोभयमूलत्वात् शब्दशक्तिमूलत्वादर्थशक्तिमूलत्वादुभयशक्तिमूलत्वाच्च ॥

तत्र शब्दार्थशक्तिमूलयोः स्वरूपमाह—

चतुर्द्धा शब्दवैचित्र्ये शब्दभूरुदितः पुरा ।
अर्थमूले पुनर्व्यङ्ग्ये व्यञ्जकोऽर्थः स्मृतो द्विधा ॥ ५८ ॥
स्वतःसिद्धः कविप्रौढिनिर्मितस्तावपि द्विधा ।
वस्त्वलङ्काररूपत्वात् तदेष स्याच्चतुर्विधः ॥ ५९ ॥
व्यनक्ति वस्त्वलङ्कारौ स च तेनायमष्टधा ।

शब्दवैचित्र्ये शब्दवैचित्र्यकथनप्रस्तावे शब्दभूः शब्दशक्तिमूलो व्यङ्ग्योऽर्थश्चतुर्धा चतुष्प्रकारः पुरा पूर्वं प्रतिपादितः । सम्प्रत्यर्थशक्तिमूलो वाच्यस्तस्मिन् पुनरर्थशक्तिमूले व्यङ्ग्ये व्यञ्जकोऽर्थो द्विधा द्विविधः स्मृतः । स्वतः-सिद्धः कविप्रौढिनिर्मितश्च । तत्र स्वतःसिद्धो न केवलं भणितिमात्रनिष्पन्नो

---

१ अ. ऋांत० । २ प. ०तं लक्ष्यो ल० । ३ अ. ०मो व्य० । ४ अ. ०त् च तत्राश० । ५ प. ०त्वादुभ० । ६ प. ०र्थमू० । ७ अ. ०पकत्वात् । ८ अ. ०र्थो वाच्यस्तस्मिन् पुनरर्थ-शक्तिमूलो व्य० । ९ व. ०तुर्विधः ।

बहिरप्यौचित्येन सम्भाव्यमानः। कविप्रौढिनिर्मितस्तु कविना प्रतिभावैभवेन बहिरसन्नपि निर्मितः कविनिबद्धवेक्त्र(क्तृ)प्रौढिनिर्मितस्तु कविप्रौढिनिर्मितान्ना-तिरिच्यत इति पृथग् नोक्तः। तावपि स्वतःसिद्ध-कविप्रौढिनिर्मितावपि द्विधा। कस्मात् ? वस्त्वलङ्काररूपत्वात् । स्वतःसिद्धोऽपि वस्तुरूपोऽलङ्काररूपश्च । कविप्रौढिनिर्मितोऽप्येवमेव। तत् तस्मादेषोऽर्थशक्तिमूलश्चतुर्विधश्चतुष्प्रकारः। स च वस्तु वाऽलङ्कारं वा व्यनक्ति। तेनायमर्थशक्तिमूलो ध्वनिरष्टधा। स च पुरस्तादुदाहरिष्यते ॥ ५८-५९ ॥

अथोभयशक्तिमूलमाह—

**एक एवोभयोद्भूतस्तद्भेदास्तच्चतुर्दश ॥ ६० ॥**

उभयोद्भूतशब्दार्थरूपोभयशक्तिमूलः पुनरेक एव। अत्र हि वस्तुनाऽलङ्कार एव व्यज्यते, न वस्तुमात्रम्। तत् तस्मात् कारणात् तद्भेदास्तस्य व्यङ्ग्यार्थस्य भेदाः शब्दशक्तिमूलत्वादिसङ्कलने चतुर्दश ॥ ६० ॥

ननु रसादीनां भूरिभेदत्वे कथं चतुर्दशेत्याह—

**एकैव हि रसादीनामगण्यत्वाद् भिदा भवेत्।**

हि यस्मात् कारणाद् रसादीनां रस-भाव-तदाभासादीनामेकैव भिदा भवेदेक एव भेदः स्यात्। कस्मादगण्यत्वात्। तथाहि—नव रसाः। तत्र शृङ्गारस्य द्वौ भेदौ सम्भोगो विप्रलम्भश्च। सम्भोगस्यापि परस्परदर्श-नालिङ्गन-परिचुम्बनादयः कुसुमोच्चय-जलकेलि-सूर्यास्तमय-चन्द्रोदय-ऋतु-षट्कवर्णनादयश्च भूयांसो भेदाः। विप्रलम्भस्यापि स्पृहाऽऽदयः प्रोक्ता एव। तयोरपि विभावानुभाव-व्यभिचारिवैचित्र्यम्। तत्रापि नायकयोरुत्तम-मध्य-माधमप्रकृतित्वम्। तत्रापि देश-कालावस्थाभेद इत्येकस्यैव रसस्या-

---

१ प. ०तस्तु कविप्रौ०। २ अ. वक्तृकृतप्रौ०। ३ अ. ०पालं०। ४ अ. ०रं व्य०। ५ प. ०ह्रियते। ६ अ. ०वम०। ७ प. त्रिभिः कुलकम्। ८ प. ०सानां। ९ प. ०नचु०। १० अ. ब. ०दर्श०। ११ प. ०षट्क०। १२ ब. ०त्वं च।

गण्यत्वम्, का गणना[1] त्वन्येषाम् ? । अलक्ष्यक्रमत्वं तु सामान्यमाश्रित्य रसादिध्वनिरेकभेद एव गण्यते ॥

अथास्य विषयविभागमाह—

**वाक्य एवोभयोत्थः स्याद्**

उभयशक्तिमूलो वाक्य एव स्यान्न पदादिषु । यथा—

" अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा साऽऽनन्दं न करोति कम् ? ॥ २३८ ॥ "

अत्र चन्द्रः शशी स्वर्णं च । तारका नक्षत्रं कनीनिका च । तरला भासुरा चटुला च । श्यामा रात्रिः कामिनी च । इह चन्द्रादिशब्दाः परावृत्तिं न सहन्त इति शब्दशक्तेः प्राधान्यम् । समुद्दीपितमन्मथेति पदं तु सहते इत्यर्थशक्तेः प्राधान्यम् इत्युभयशक्तिभूर्वनिता-रजन्योरुपमानोपमेयभावो व्यङ्ग्यः ।

**अन्ये तु पद-वाक्ययोः ॥ ६१ ॥**

अन्ये तु पुनस्त्रयोदश ध्वनयः पदे वाक्ये च सम्भवन्ति। तत्र शब्दशक्ति-मूलश्चतुर्दशभेदः पदे यथा—

" यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ २३९ ॥ "

अत्र द्वितीयमित्रादिशब्दैरनुपयोगित्वाद् बाधितस्वार्थैराधाराधेयरूपे सम्बन्धे विश्वास्यतां नितरां यन्त्रणीयत्वं स्नेहपात्रतां च क्रमाल्लक्षयद्भिः सर्व-रहस्यप्रकाशनस्थानत्वादि निरुच्छ्वासकरणादि सम्पत्सम्पादनादि च क्रमशो ध्वन्यते । अत्रार्थान्तरसङ्क्रान्तवाच्यः ।

\+ " गयणं च मत्तमेहं धाराललिअज्जुणाइं अ वणाइं ।
निरहंकारमिअंका हरंति नीलाओ अ निसाओ ॥ २४० ॥ "

---

\+ गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि ।
निरहङ्कारमृगाङ्का हरन्ति नीलाश्च निशाः ॥

---

१ अ. ०करः० । २ प. ०त्युदय० । ३ अ. प. ०तुर्भेदः ।

अत्र मत्त–निरहङ्कारशब्दौ मेघ–मृगाङ्कयोरसम्भवेन बाधितस्वार्थौ स्वेच्छा-व्यापारवत्त्वे व्यापाररहितत्वे च सादृश्ये सति मेघं मृगाङ्कं च लक्षयन्तौ प्रकर्ष–शालित्वं हतप्रकर्षत्वं च व्यञ्जयतः । अत्रात्यन्ततिरस्कृतवाच्यः ।

“ मुक्ति–भुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं[1] विदधाति सदागमः[2] ? ॥ २४१ ॥ ”

मुक्तिरुद्वेगव्यापारादपि । भुक्तिः कान्तोपभोगोऽपि । एकान्तः सङ्केतस्थान[3]-मपि । सतः सुन्दरस्यागमनम् , शोभनागमश्च । काचित् सङ्केतदायिनं प्रति स-त्सिद्धान्तविषयमर्थमेवं मुख्यया वृत्त्या शंसतीति । तेन वस्तुना सदागमपदस-हायेन सतः सुन्दरस्यागमनरूपं वस्तु प्रकाश्यते ।

× “ देव्वायत्तंमि फले किं कीरउ इत्तिअं पुण भणामि ।
किंकिल्लिपल्लवा पल्लवाण अन्नाणं[4] ण सरिच्छा ॥ २४२ ॥ ”

अत्र नञ्रूपनिपातपदप्रकाश्यो व्यतिरेकः ।

असंलक्ष्यक्रमः पदे यथा—

“ मुग्धे ! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते ?
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ! ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति[5] ॥ २४३ ॥ ”

अत्र भीताननपदेन भयस्याकृत्रिमत्वप्रकाशनान्नीचैःशंसनविधानस्य युक्तता गम्यते ।

अथार्थशक्तिमूले ध्वनौ स्वतःसिद्धश्चतुर्विधः पदे यथा—

---

× दैवायत्ते फले किं क्रियतामियत् पुनर्भणामि ।
किङ्किल्लिपल्लवाः पल्लवानामन्येषां न सदृशाः ॥

---

१ प. निस्पन्दं, अ. निःष्पंदं व. निष्पन्नं । २ प. व. समाग० । ३ प. ०न्तः स्था० । ४ अ. ०ण सा० । ५ अ. संस वि०, व. शंसने वि० ।

* " तं ताण सिरिसहोअररयणाहरणंमि हियममेक्करसं ।
बिंबाहरे पिआणं निवेसिअं कुसुमबाणेण[1] ॥ २४४ ॥ "

अत्र कुसुमबाणेनेति पदवस्तुना कामस्य मृदूपायसौन्दर्यरूपं वस्तु व्यज्यते ।

÷ " धी(वी)राणं[2] रमइ घुसिणारुणंमि न तहा पिआथणुच्छंगे[3] ।
दिट्ठी रिउगयकुंभत्थलंमि जह बहलसिंदूरे ॥ २४५ ॥ "

अत्र धीराणमिति पदार्थरूपं वस्तु कुचयोः कुम्भस्थलस्य[4] चोपमालङ्कारं ध्वनति ।

+ " चूअंकुरावयंसं[5] छणपसरमहग्घमणहरसुरामोअं[6] ।
अपणामिअं पि गहिअं कुसुमसरेण महुलच्छीए मुहं ॥ २४६ ॥ "

अत्रापणामिअमसमर्पितमपीति विरोधालङ्कारेण 'मधुमासप्रौढिम्नि भाविनि किं भविष्यति ?' इत्येवम्भूतं वस्तु द्योत्यते ।

* " तुह वल्लहस्स गोसंमि आसि अहरो मिलाणकमलदलो ।
इय[7] नववहुआ सोऊण कुणइ वयणं महीसमुहं[8] ॥ २४७ ॥ "

---

* तत् तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥

÷ धी(वी)राणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे ।
दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे ॥

+ चूताङ्कुरावतंसं क्षणप्रसरमहार्घमनोहरसुरामोदम् ।
अनर्पितमपि गृहीतं कुसुमशरेण मधुलक्ष्म्या मुखम् ॥

* तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलः ।
इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् ॥

---

१ प. ०णेन । २ अ. प. ०राण । ३ प. ०यातणुच्छंगे, अ. ०समुच्छंगे । ४ अ. कुंभस्य । ५ अ. भूअं० व. भ्रूअं । ६ प. ०मोयं । ७ अ. इअ । ८ अ. ०मुहं, प. व. मुहं ।

अत्र म्लानकमलदलमिति रूपकेण म्लानत्वान्यथानुपपत्तेः ' त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं कृतम् ' इति काव्यलिङ्गं ध्वन्यते ।

अथ कविप्रौढिनिर्मितश्चतुष्प्रकारः पदे यथा—

+ " राईसु चंदधवलासु ललिअमप्फालिऊण जो चावं ।
एक्कच्छत्तं चिअ कुणइ भुवणरज्जं विअंभंतो ॥ २४८ ॥ "

अत्र भुवनराज्यपदसहायेन वस्तुना ' सर्वैरप्युपभोगरूपस्मरादेशपरैरेव निशाऽतिवाह्यते ' इति वस्तु प्रकाश्यते ।

* " सहि ! नवनिहुअणसमरंमि अंकपालीसहीइ निविडाए ।
हारो निवारिओ चिअ उव्वरयंतो[3] तदो कहं रमिअं ? ॥ २४९ ॥ "

अङ्कपाली आलिङ्गनं सैव सखी । निविडा घना, अन्तरङ्गा च । उव्वरयं-तो द्वयोस्तृतीयतयाऽधिकीभवन् । अत्र वस्तुना हारच्छेदादन्यतरमन्यदेव रतम-वश्यमभूत् । तत् कथय कीदृगिति व्यतिरेकः कथम्पदप्रकाश्यः ।

※ " विहलं खलं[5] तुवं सहि ! दट्ठूण कुडेण तरलतरदिट्ठिं ।
वारप्फंसमिसेणं अप्पा गुरुउ त्ति पाडिअ विभिण्णो ॥ २५० ॥ "

' अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशे च तत्र गच्छन्तं दृष्ट्वा पुनर्नदीगमनाय द्वारघातव्याजेन त्वया घटः स्फोटित इति मया ज्ञातम् ।

---

+ रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमेव करोति भुवनराज्यं विजृम्भमाणः ॥

* सखि ! नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया ।
हारो निवारित एव, उद्धरन् ततः कथं रमितम् ? ॥

※ विह्व(फ)लां खलां त्वां सखि ! दृष्ट्वा कुटेन तरलतरदृष्टिम् ।
द्वारस्पर्शमिषेण आत्मा गुरुक इति पातयित्वा विभिन्नः ॥

---

१ ब. इक० । २ प. क्पेव । ३ अ. तो क० । ४ प. ०काशः । ५ प. खवं ।

वद् किमिति ताम्यसि ? व्रज समीहितसिद्धये । अहं ते श्वश्रूपुरस्तात् सर्वं समर्थयिष्ये ' इति सखीवाक्यरूपं वस्तु द्वारस्पर्श[1]व्याजेनेत्यपह्नुत्या व्यज्यते ।

* " सो सु(मु)द्धसामलंगो धम्मिल्लो कलिअललिअनिअदेहो ।
तीए खंधाउ बलं लहिअ सरो सुरयसंगरे जयइ ॥ २५१ ॥ "

अत्र धम्मिल्लः स्मर इति रूपकेण सुहुराकर्षणे तथा केशपाशः स्कन्धयोः प्राप्तो यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति स्कन्धपदद्योत्या विशेषोक्तिः ।

अथ वाक्यप्रकाशस्त्रयोदशभेदस्तत्र शब्दवैचित्र्यप्रस्तावे शब्दशक्तिमूलस्य चत्वारो भेदाः पूर्वस्मिन्नसंलक्ष्यक्रमः पुनरिहैव तरङ्गे प्रतिपादितः । साम्प्रतं त्वर्थशक्तिमूलोऽष्टप्रकारः कथ्यते । तत्र स्वतःसिद्धश्चतुर्भेदः क्रमाद् यथा—

॥ " अरससिरमणी धुत्ताण अग्गिमो पुत्ति ! घणसमिद्धिमओ ।
इय भणिए तणुअंगी पप्फुल्लविलोअणा जाया ॥ २५२ ॥ "

अत्र वस्तुना ममैव भोग्य इति वस्तु ध्वन्यते ।

+ " सिहिपिच्छकण्णऊरा जाया वाहस्स नं गव्विरी भमइ ।
मुत्ताहलरईअपसाहणाण मज्झे सवत्तीण ॥ २५३ ॥ "

अत्र वस्तुना यदा भवतीष्वासक्तचेताः प्रेयानासीत् तदा तथाविधनिधु-

---

* स शुद्ध(मुग्ध)श्यामाङ्गो धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धाद् बलं लब्ध्वा स्मरः सुरतसङ्गरे जयति ॥

॥ अरसशिरोमणिर्धूर्तानामग्रिमः पुत्रि ! घनसमृद्धिमयः ।
इति भणिते तन्वङ्गी प्रफुल्लविलोचना जाता ॥

\+ शिखिपिच्छकर्णपूरा जाया व्याधस्य नु गर्विणी भ्रमति ।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥

---

१ प. ०र्शनव्या० । २ प. ०निय० । ३ अ. ०ति ध्व० । ४ प. सहि । ५ अ. ०स्स ग०, प. ०स्स गव्विणी । ६ प. ०इय० ।

वनव्यापाराभावाद् बलवान् करिविदारणसमर्थोऽभूत्, ततो भवत्यो मुक्ताफल-भूषणाः, इदानीं तु मदेकानुरागी निरन्तररतिव्यापाराद् दुर्बलीभूतो मयूरानेव हन्तुमीश्वरस्ततो मयूरपिच्छाभरणैवाहमिति भवतीभ्यो ममैव सौभाग्यातिशय इति व्यतिरेकः प्रकाश्यते ।

"दर्पान्धगन्धगजकुम्भकपाटकूटसङ्क्रान्तनिघ्नघनशोणितशोणशोचिः ।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः कालीकटाक्ष इव यस्य करे कृपाणः ॥"

अत्रोपमालङ्कारेण सकलरिपुबलक्षयः क्षणात् करिष्यत इति वस्तु व्यज्यते ।

" गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥ २५५ ॥"

अत्र विरोधालङ्कारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता द्योत्यते ।

अथ कविप्रौढिनिर्मितः—

" तापी नेयं नियतमथवा तानि नैतानि नूनं
तीराण्यस्याः सविधविचलद्वीचिवाचालितानि ।
अन्यो वाऽहं किमथ नहि तद् वारि वेल्लद्बलाकं
यत् तत् पल्लीपतिदुहितरि स्नातुमभ्यागतायाम् ॥ २५६ ॥ "

अत्र वस्तुना स्पृहणीयजनकृतमेव भावानां सौन्दर्यं, न स्वत इति वस्तु प्रकाश्यते ।

" लावण्य-कान्तिपरिपूरितदिङ्मुखेऽस्मिन् स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः ॥ "

अत्र वस्तुना मुख इत्यत्र मुखचन्द्रमसीति रूपकं ध्वन्यते ।

* " गाढालिंगणरहसुज्जयंमि दइए लहु समोसरइ ।
माणंसिणीण माणो पीलणभीउ व्व हिययाहिं ॥ २५८ ॥ "

* गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विनीनां मानः पीडनभीत इव हृदयात् ॥

१ प. ०जक० । २ प. ०न् द० । ३ प. ०योग्यता । ४ ब. ०यमित० । ५ प. निहितद्वारि ।
६ अ. प. ०हस्सुज्ज० । ७ अ. हिअया० ।

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र जृम्भत इति वस्तु द्योत्यते ।

" स वक्तुमखिलान् शक्तो हयग्रीवाश्रितान् गुणान् ।
योऽम्बु कुम्भैः परिच्छेदं कर्तुं शक्तो महोदधेः ॥ २५९ ॥ "

अत्र निदर्शनया हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपोऽसाधारणतद्विशेषप्रकाशनपर आक्षेपः प्रकाश्यते । दीपक–रूपकादिषु या काचिदुपमाद्यलङ्कारान्तरप्रतीतिस्तत्र न व्यङ्ग्यव्यवहारः कविव्यापारसंरम्भाभावात् । यत्र हि कविर्विशेषतः संरभते तत्र व्यङ्ग्यव्यपदेशः । तत्कृतश्च काव्यचारिमा दीपकादिषु पुनरुपमादीन् प्रति न कविसंरम्भो न च तत्कृतश्चारिमा, किन्तु दीपकादिकृत एव । यथा—

* " चंदमऊहेहिं निसा नलिणी कमलेहिं कुसुमगुच्छेहिं लया ।
हंसेहिं सरयसोहा कव्वकहा सज्जणेहिं कीरइ गुरुई ॥ २६० ॥ "

अत्र दीपकेनैव काव्यव्यवहारो नौपम्येन ॥ ६१ ॥

अथार्थशक्तिमूलस्य रूपान्तरमाह—

**पदे वाक्ये प्रबन्धे च भवत्यर्थोद्भवः पुनः ।**

अर्थोद्भवोऽर्थशक्तिमूलानुरणनरूपो ध्वनिः पदे वाक्ये प्रबन्धे च भवति । तत्र पद–वाक्ययोः पूर्वमुदाहृत एव । प्रबन्धे यथा गृध्र–गोमायुसंवादादौ । तथा च—

" अलं स्थित्वा स्मशानेऽस्मिन् गृध्र–गोमायुसङ्कुले ।
न चेह जीवितः कश्चित् कालधर्ममुपागतः ॥ २६१ ॥ "

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् ।

---

* चन्द्रमयूखैर्निशा नलिनी कमलैः कुसुमगुच्छैर्लता ।
हंसैः शरच्छोभा काव्यकथा सज्जनैः क्रियते गुर्वी ॥

---

१ अ. प. शक्तः कर्तुं । २ प. ०मनव० । ३ प. ०वाभा० । ४ प. ०रंभ० । ५ प. तचारिमाय० । ६ अ. ०दंनम० । ७ व. कुसुमेहिं । ८ प. ०एहिं । ९ अ. स्वरू० । १० अ. स्यात् । ११ प. दृद एव, अ. तमेव । १२ प. यथा । १३ प. प्रसादे ।

" आदित्योऽयं स्थितो मूढाः ! स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन ॥ २६२ ॥ "

अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं बालास्त्यक्ष्यध्वमविशङ्किताः ! ॥ २६३ ॥ "

त्यक्ष्यध्वमित्यार्षम् । इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्त्तनानिष्ठं चेति प्रबन्धप्रतिपाद्येन वस्तुना गृध्र–गोमाय्वोर्भक्षणाभिप्रायरूपं वस्तु व्यज्यते । एवमन्योदाहरणान्यपि ज्ञेयानि ।

अथ रसादीनां व्यञ्जनास्पदान्याह—

**रसादयः पदे वाक्ये प्रबन्धेऽन्तः पदस्य च ॥ ६२ ॥**
**रचनासु च वर्णेष्वप्यभिव्यञ्जनगोचरः ।**

रसादयो रस–भावादयः पदादिष्वभिव्यञ्जनस्य व्यञ्जनव्यापारस्य गोचरो विषयो भवति । तत्र तेषां पद–वाक्यव्यङ्ग्यत्वं पूर्वमुदाहृतम् । प्रबन्धव्यङ्ग्यत्वं तु शाकुन्तलादिप्रबन्धेषु ज्ञेयम् । पदान्तर्व्यङ्ग्यत्वे तु प्रकृतेर्[10]व्यञ्जकत्वम् । यथा—

" प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद् यावन्न यात्युन्मनाः ।
तावत् प्रत्युत पाणिसम्पुटलसन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो ! प्रेम्णो विचित्रा गतिः ! ॥ २६४ ॥ "

अत्र पदानीति, न तु द्वारादीनि । एवं हि रसविशेषप्रतीतिर्न स्यात् ।

प्रत्ययस्य यथा—

" लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।

---

१ प. ०क्ष्यध्वमव० । २ अ. ०पावन० । ३ प. ०मायो० । ४ अ. अत्र, व. व्यंजनादीनां रसास्पदाना० । ५ प. व. ०तः । ६ प. रसना० । ७ प. ०व्यंजयन० । ८ अ. ०भिव्यञ्जनव्या० । ९ प. ०बंधादिषु । १० अ. ०ते व्य० । ११ अ. सोयमुपागतः । १२ व. ०समुल्लस० ।

परित्यक्तं सर्वं हसित-पठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने ! मानमधुना ॥ २६५ ॥ "

अत्र न लिखतीति किन्तु लिखन् प्रसादपर्यन्तमास्ते । तथाऽऽस्त इति, न त्वासितः । भूमिमिति, न तु भूमौ । न हि बुद्धिपूर्वकं रूपकं किञ्चिल्लिखति, किन्तु चिन्ताशून्यतया निरभिप्रायं भूमिमेवोल्लिखतीति कर्मत्वेन प्रतीयते ।

वचनस्य यथा—

* " ताण गुणग्गहणाणं ताणुक्कंठाण तस्स पेमस्स ।
ताण भणियाण सुंदर ! एरिसयं जायमवसाणं ॥ २६६ ॥ "

अत्र 'ताण त्ति' तत्तद्भावगर्भितत्वेन मम प्रसिद्धानां गुणग्रहणानामुत्कण्ठानां च बहुवचनेन बहुत्वं 'तस्स त्ति' तस्य वचनानभिधेयस्य प्रेम्णश्चैकवचनेनैकरूपत्वं रसप्रकर्षकारि द्योत्यते ।

पूर्वनिपातस्य यथा—

" येषां दोर्बलमेव दुर्बलतया ते सम्मतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः ? ।
ये क्ष्माशक्र ! पुनः पराक्रम-नयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥ २६७ ॥ "

अत्र पराक्रमस्य प्राधान्यम् ।

उपसर्गस्य यथा—

" परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ २६८ ॥ "

* तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।
तेषां भणितानां सुन्दर ! ईदृशं जातमवसानम ॥

१ अ. ०णाण । २ अ. ०न त० ।

अत्र प्रशब्दस्य ।

विभक्तिविशेषस्य यथा—

" प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप ! भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥ २६९ ॥ "

अत्र दिवसमित्यनेन सर्वं दिनमभिव्याप्य वैरिभिरयोधि, फलं तु न प्राप्तमिति । दिवसेनेत्यनेन च दिवसव्याप्तौ सत्यामपि " सिद्धौ तृतीया " [ हैमश० २ । २ । ४३ ] इति तृतीयाविधानात् फलसिद्धिर्गम्यते ।

सर्वनाम–वचनादीनां यथा—

" रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा–
मस्मद्भाग्यविपर्ययाद् यदि परं देवो न जानाति तम् ।
बन्दीवैष यशांसि गायति मरुद् यस्यैकबाणाहति–
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥ २७० ॥ "

अत्रासावित्येकः । भुवनेष्विति त्रिष्वपि जगत्सु । गुणैरित्यसङ्ख्यैर्न त्वेकेनेत्येकवचन–बहुवचनयोः । अस्मदिति सर्वेषामप्यस्मत्कुलोद्भवानां न तवैकस्य, न ममैकस्य । भाग्यविपर्ययादिति भाग्यानां विपर्ययात् क्षयहेतुत्वेनान्यथाभावरूपान्न स्वभावमात्रात् । भाग्याभावे हि प्रभुत्वं न स्यात्, ननु प्रत्युत क्षयः स्यादिति सर्वनाम–प्रातिपदिकयोः । एवमन्येषामपि बोद्धव्यम् । रचनावर्णाभिव्यञ्जकत्वं गुणस्वरूपनिरूपणे वक्ष्यते ।

अथ व्यङ्ग्यभेदानां सर्वसङ्ख्यामाह—

**व्यङ्ग्यार्थस्य तदेकोनचत्वारिंशद् भिदाः स्मृताः ॥ ६३ ॥**

तत् तेन पूर्वोक्तप्रकारेण व्यङ्ग्यार्थस्यैकोनचत्वारिंशद् भिदा भेदाः स्मृताः

---

१ प. ०दिनव्या० । २ ब. ०शालविवरोदीर्णैः । ३ प. ०लोद्भूतानां । ४ प. ०त्वान्य० । ५ ब. ०प्रतिपा० । ६ प. ०वर्णला० । ७ प. ०पवर्णने ।

कथिताः। तत्र शब्दशक्तिमूलस्य ध्वनेः पद-वाक्यव्यङ्ग्यत्वेनाष्टौ भेदाः। पद-वाक्य-प्रबन्धव्यङ्ग्यत्वेनार्थशक्तिमूलस्य चतुर्विंशतिः। पद-वाक्य-प्रबन्ध-पद-मध्य-रचना-वर्णव्यङ्ग्यत्वेन रसादीनां च षट्। एकश्चोभयोत्थस्य। तदेवमेकोनचत्वारिंशद् भेदाः ॥ ६३ ॥

अथ व्यङ्ग्यभेदानां संसृष्टि-सङ्कराभ्यां परस्परसम्पर्के शुद्धभेदमीलने च सर्वसङ्ख्यामाह—

संसृष्टेरेकरूपायास्त्रिरूपात् सङ्करादपि ।
सिद्धभिन्मीलनाच्च स्युस्ता विश्वार्क-रसौर्मिताः ॥ ६४ ॥

व्यङ्ग्यभेदानां मिथो निरपेक्षाणामेकत्र काव्ये[2]ऽवस्थानं संसृष्टिस्तस्याश्चैतदेवैकं रूपम्। सङ्करस्य तु त्रीणि रूपाणि संशयास्पदत्वमनुग्राह्यानुग्राहकत्वमेकव्यञ्जकानुप्रवेशश्चेति। तत्र संसृष्टेरेकैको भेद एकोनचत्वारिंशता भेदैः[3] सह संयुज्यमानः प्रत्येकमेकोनचत्वारिंशतं भेदान् लभते। ततश्चैकोनचत्वारिंशदेकोनचत्वारिंशता गुणिता सत्येकविंशत्यधिका पञ्चदशशतप्रमाणा जाता १५२१। एवं त्रिरूपात् सङ्करादपि भेदसंयोगे प्रतिरूपं तावत्येव भेदसङ्ख्या। ततश्च राशिचतुष्टयमीलने जातानि चतुरशीत्यधिकानि षट् सहस्राणि ६०८४। तेषु च शुद्धभेदानामेकोनचत्वारिंशतो मीलनात् ता व्यङ्ग्यभिदा विश्वार्क-रसैर्मितास्त्रयोविंशत्यधिकैकषष्टिशतप्रमाणा ६१२३ जायन्ते। तत्र दिङ्मात्रमुदाह्रियते—

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना[5]
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे[6]
वैदेही तु[7] कथं सहिष्यति हहा हा! देवि! धीरा भव ॥ २७१ ॥"

अत्र लिप्तेति पयोदसुहृदामिति चात्यन्ततिरस्कृतवाच्ययोः संसृष्टिः। तथाहि— लिप्त-सुहृच्छब्दाभ्यां कान्तेः कुङ्कुमादिवल्लेपसाधनत्वाभावात् मयूराणां विशिष्टचैतन्यशून्यत्वेन मैत्रीभाजनत्वाभावाच्च बाधितस्वार्थाभ्यां स्वार्थ-

१ अ. व्य०। २ प. स्थानेव०। ३ अ. ०वैः सं०। ४ अ. व. ०दप०। ५ प. घटा। ६ प. व. ०सहो। ७ व. प. ति। ८ प. व. भविष्य०। ९ अ. ०तन्यत्वे मै०।

गतेषपिरोधीयमानत्वाद् रभसोन्मुखस्वरूपाच्च सादृश्याद् नगन-मयूराश्च लक्ष्यन्ते। अत्र च कुङ्कुमादिलिप्तमुखादिसारूप्यद्वारेण रामणीयक-मदनोद्दीपकत्वादिसतुल्योत्कर्षापकर्षाश्रयत्वादिश्च क्रमादतिशयौ व्यङ्ग्यावनयोश्च सादृश्यहेतुत्वेन वाच्यस्यानुपपद्यमानत्वादत्यन्ततिरस्कृतवाच्यत्वम्। ताभ्यां सह रामोऽस्मीत्यर्थान्तरसङ्क्रान्तवाच्यस्यानुग्राह्यानुग्राहकभावेन सङ्करः। तथा च रामशब्देन प्रतीतत्वाद् बाधितमुख्यार्थेनाधाराधेयरूपात् सम्बन्धाद् राज्यभ्रंश-प्रवास-पितृमरण-सीताहरणादिदुःखपात्रत्वं लक्ष्यते। निःसामान्यनिर्वेदादिप्रकटनमतिशयो व्यङ्ग्यः। अयं च वाच्यस्य रामरूपस्य राज्यभ्रंशादिदुःखपात्ररूपेऽर्थान्तरे सङ्क्रान्तत्वादर्थान्तरसङ्क्रान्तवाच्य एव, न त्वत्यन्ततिरस्कृतवाच्यो मुख्यार्थस्यापि कथञ्चिदुपयुज्यमानत्वादिति। सोऽयमनुग्राह्यः, पूर्वौ चानुग्राहकौ। तथा रामपदरूपैकव्यञ्जकव्यञ्जनीयत्वेनार्थान्तरसङ्क्रान्तवाच्यरस-ध्वन्योरेकव्यञ्जकत्वानुप्रवेशरूपः सङ्करः। तथा—

\+ "छणपाहुणिया देयर! जायाए सुहय! किं पि दे भणिआ।
रुयइ पडोहरवलहीहरंमि अणुणिज्जउ वराई॥ २७२॥"

अत्र पडोहरं गृहपश्चाद्भागस्तत्र वलभी गोमयपिण्डसमूहस्तदुपलक्षिते गृहे। अत्र च स्वभार्यया कोपितत्वादनुनये लब्धेऽनुनीयतामित्यस्यानुपयुज्यमानत्वाद् बाधितार्थेन कार्य-कारणभावरूपे सम्बन्धे सत्यनुनयेनोपभोगरूपमर्थान्तरं लक्षयता तोषोत्पादनादि व्यज्यत इत्यनुनयः। सुभगशब्देन द्योत्यः किमुपभोगरूपेऽर्थान्तरे सङ्क्रान्तः किं वाऽनुरणनन्यायेनोपभोग एव व्यङ्ग्ये व्यञ्जक इति संशयास्पदत्वेन सङ्कर इति। ननु भोः! क एष व्यञ्जनव्यापारो नाम! किं च तदवगम्यं व्यङ्ग्यं व्यङ्ग्यमिति कथ्यते, यदाकाशकुसुमप्रायं किञ्चिदङ्गीकृत्य स्ववासनासम्भावितप्रमोदभरनिर्भरैरलीकविदग्धतामुकुलितलोचनैर्भवद्भिरुन्मत्तैरिव नित्यमेवं नृत्यते। यतः शब्दार्थशरीरे काव्ये केऽप्यनुप्रासादयः शब्द-

---

\+ क्षणप्राघूर्णिका देवर! जायया सुभग! किमपि ते भणिता।
रोदिति गृहपश्चाद्भागवलभीगृहेऽनुनीयतां वराकी॥

---

१ अ. ०नत्वरूपाद्, ब. ०नरूपाद्। २ प. ०वच्छिन्न०। ३ अ. ०वयह०। ४ प. ०त्रत्वह०। ५ अ. ०कानुरू०, ब. ०कानु०। ६ अ. ०भिआ। ७ अ. दयइ। ८ प. ०ई अत्र स्व०।

मलङ्कुर्वन्तः, केचिदुपमादयः पुनरर्थं माधुर्यादयश्च गुम्फधर्मा रसानुसारिणः। केचन तदात्मवृत्तयोऽप्युपनागरिकाद्याः काश्चित् प्रतीयन्ते। नान्यत् किमपि। तत् कोऽयं नूतनः काव्यप्रभेदो ध्वनिर्नाम ? न ह्यस्य क्षोदक्षमं किमपि स्वरूपमुपलभामहे यदुक्तं केनचित्—

" यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि सालङ्कृति
व्युत्पन्नै रचितं च यन्न वचनैर्वक्रोक्तिशून्यं च यत्।
काव्यं तद् ध्वनिना समन्वितमिति प्रीत्या प्रशंसन् जडो
नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः ॥२७३॥ "

पूर्वाचार्यप्रसिद्धप्रस्थानव्यतिरेकिणश्च काव्यप्रकारस्य काव्यत्वमपि हीयेत। भूयांसश्च भणितिप्रकाराः कवीनां कविताकामनीयत्वहेतवः सम्भवन्ति। तेषां च कियतामपि पूर्वाचार्यैः कृतान्येव लक्षणानि, न सर्वेषामानन्त्यात्। 'सचेतनचमत्कारि काव्यम्' इत्यस्मिन् काव्यलक्षणे तेषामप्यन्तर्भावात्। ततो यदि कश्चिदयमपि प्रकारलेशः सम्भवति। सोऽपि तत्रैवान्तर्भविष्यति तल्लक्षणक्रोडीकृतत्वादिति। तस्य ध्वनिरिति पृथग्नामधेयकरणमुपपन्नमेवेति[६]। 'न किञ्चिदभिधोपचारव्यापाराभ्यामतिरिक्तं व्यञ्जनव्यापारं तदवसेयं च व्यङ्ग्यमपि न किञ्चन मन्यामहे' इति यदुक्तं कैश्चिद् देवानांप्रियैस्तदविचारितवचनमेव; यस्मात् सकलकालिदासप्रभृतिमहाकविकाव्येषु सहृदयहृदयसंवेद्यं परिस्फुरत्येव वाच्यादर्थादधिकं किमप्यर्थान्तरं तच्च वस्त्वलङ्कार–रसरूपत्वात् त्रिविधमपि तावन्नाभिधाव्यापारप्रकाश्यं वाच्यादर्थादत्यन्तभिन्नत्वात्। तथाहि–क्वचिद् वाच्ये विधिरूपे प्रतिषेधरूपं वस्तु प्रतीयते। यथा—* 'भम धम्मिय! वीसद्धो' इत्यादि गाथा। अत्र विश्रब्धो भ्रमेति विधिवाक्ये, तत्र निकुञ्जे सिंहस्तिष्ठति, त्वं च शुनोऽपि बिभेषि, तस्मात् त्वया तस्मिन्न गन्तव्यमिति निषेधः प्रतीयते। क्वचिन्निषेधे विधिरूपं यथा– ÷ 'अत्ता इत्थ णुमज्जइ' इत्यादि गाथा। अत्र +'मा पहि' इत्यादि निषेधे वाच्ये इमां श्वश्रूशय्यां परित्यज्य रात्रौ त्वया

---

* भ्रम धार्मिक! विश्रब्धः। ÷ श्वश्रूरत्र निमज्जति। + मा पथिक।

---

१ अ. ०नप्र० । २ अ. ०भ्यम० । ३ अ. ब. हीयते । ४ अ. ०नां कमनीयकहे०, ब. ०ताक० । ५ अ. तत्रैवा० ब. ०सोप्यत्रै० । ६ ब. ०ति कि० । ७ ब. ०भ्यादधि० । ८ अ. ०तं मि० । ९ अ. ०म्मिम । १० प. ०इ गा० ।

मच्छय्यायामागन्तव्यमिति विधिः प्रतीयते ।

क्वचिद् विधौ विध्यन्तररूपं यथा—

× " बहलतमा हयराई अज्ज पउत्थो पई घरं सुन्नं ।
तह जग्गिज्ज सयज्ज य न जहा अम्हे मुसिज्जामो ॥ २७४ ॥ "

अत्र जागृहीति विध्यभिधाने त्वया निःशङ्केनात्रागन्तव्यमिति विध्यन्तरं प्रतीयते ।

क्वचिन्निषेधे निषेधान्तररूपं यथा—

* " आसाइअं अणाएण जित्तिअं तित्तिएण बंध दिहिं ।
ओरमसु वसह ! इण्हिं रक्खिज्जइ गहवई छित्तं ॥ २७५ ॥ "

अत्रोपरमेति वृषभनिषेधे वाच्ये उपपतिनिवारणं निषेधान्तरं प्रतीयते ।

क्वचिद् विधावनुभयरूपं यथा—

\+ " सणिअं वच्च किसोअरि ! पए पयत्तेण ठवसु महिवट्टे ।
भज्जिहिसि वित्थयत्थणे विहिणा दुक्खेण निम्मविआ ॥२७६॥ "

अत्र शनैर्व्रजेति विध्यभिधाने न विधिर्नापि निषेधोऽपि तु वर्णनामात्रं प्रतीयते ।

क्वचित् निषेधेऽनुभयरूपं यथा—

× बहलतमा हतरात्रिरद्य प्रोषितः पतिर्गृहं शून्यम् ।
तथा जागृहि स्वपीहि च न यथा वयं मुष्यामहे ॥

* आस्वादितमज्ञातेन यावत् तावता बधान धृतिम् ।
उपरम वृषभ ! इदानीं रक्ष्यते गृहपतिना क्षेत्रम् ॥

\+ शनैर्व्रज कृशोदरि ! पदौ प्रयत्नेन स्थापय महीपृष्ठे ।
भङ्क्ष्यसि विस्तृतस्थानान् विधिना दुःखेन निर्मितान् ॥

१ अ. अहो । २ प. ०इयं । ३ अ. रह० । ४ प. वज्ञ । ५ प. ०हसि । ६ प. ०त्थणि ।

× " दे ओ पसिअ निअत्तसु मुहससिजुण्हाविलुत्ततमनिवहे ! ।
अहिसारिआण विग्घं करेसि अन्नाण वि हयासे ! ॥ २७७ ॥ "

अत्र निवर्तस्वेति निषेधाभिधाने न निषेधो नापि विधिरपि तु मुखेन्दुकान्तिवर्णनामात्रं प्रतीयते ।

क्वचित् संशये निश्चयरूपं यथा—

" मात्सर्यमुत्सार्य विचार्य कार्यमार्याः ! समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणां किमु स्मरस्मेरविलासिनीनाम् ? ॥२७८॥"

अत्र शान्त-शृङ्गार्यन्यतरवक्तृविशेषाभिश्चयो गम्यते ।

क्वचिन्निन्दायां स्तुतिरूपं यथा—

" सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे बुधैः ।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥ २७९ ॥ "

अत्र त्वं सङ्ग्रामेषु न कदाचित् पराङ्मुखो भूर्न च परस्त्रीर्मनसाऽपि जातुचित् कामयस इति स्तुतिर्गम्या । इत्यादौ विधि-निषेधाद्यात्मतया स्वरूपस्य पूर्व-पश्चाद्भावेन प्रतीतेः कालस्य प्रत्यर्थिजयाय प्रस्थातुकामो देव इत्यादौ वाच्योऽर्थः सर्वान् प्रत्येकरूप एव, व्यङ्ग्यस्तु दन्तिनः साङ्ग्रामिकं कर्म ग्राह्यन्तामिति, सान्नाह्या वीथीषु सञ्चार्यन्तामश्वा इति, वृषभा दम्यन्तामिति, पटकुट्यः प्रगुणीक्रियन्तामिति, स्वस्वस्वामिनां विज्ञाप्यन्तामिति, शुद्धान्तानि संवाह्यन्तामिति, वारविलासिन्यः सज्जीक्रियन्तामिति, क्रयाणकानि सङ्गृह्यन्तामिति, शकटानि समारच्यन्तामित्यादिरनेकविध इति सङ्ख्यायाः ।

* " कस्स व न होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।
सभमरपउमग्घाइरि ! वारिअवामे ! सहसु इण्हि ॥ २८० ॥ "

× प्रार्थये तावत् प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ! ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ! ॥

* कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्राणशीले ! वारितवामे ! सह(शोभ)स्वेदानीम् ॥

१ प. देसाए० । २ प. निय० । ३ प. ०याण । ४ अ. नेपि । ५ अ. ०मिदं वदंतु । ६ अ. ०षो ग० । ७ अ. पिआइ । ८ प. ०यरि । ९ अ. ०रिय० ।

अत्र वाच्योऽर्थः सखीं प्रत्येव । व्यङ्ग्यस्तु अद्य मया समर्थितं पुनः शङ्का-स्थानं त्वया रक्षणीयमिति । अयं किमपि वदति, त्वं तु कुप्यसि, पश्चात् पादपतनेन प्रसाद्यसे । ततः ' सहस्व ' शोभस्वेति च तामेव प्रति । निरपराधै-वेयमिति कान्तं प्रति । अनया विना त्वं न भवसि, ततोऽपराधेऽपि मा स्माधिकं किमपि कार्षीरिति वैदग्ध्ये सति तमेव प्रति । भवताऽपि प्रकटाङ्गेषु नख-दन्तक्ष-तादिकं न कार्यमित्युपपतिं प्रति । प्रियाया एव व्यलीके रोषो भवति; अप्रिया-यास्तु परित्यागवासनया प्रीतिरेव स्यादिति । मा भूद्[1] युष्माकं मनसि तोष इति सपत्नीः प्रति । अस्याः साधु मयाऽपराधो गोपित इति तटस्थां विदग्धसखीं प्रति वेति विषयस्यापि भेदेन भिन्नमेव वाच्याद् व्यङ्ग्यं वस्तु । तदेवमपि यदि तयोरैक्यं तदा नीलानीलादौ क्वचिदपि भेदो न स्यात् । उक्तं हि–' अयमेव हि भेदो[2] भेदहेतुर्वा यद् विरुद्धधर्माध्यासः कारणभेदश्चेति । ' यदप्यभिधीयते–' यत् परः शब्दः स शब्दार्थस्तथाहि–' यथा समरसीम्नि कार्मुक[3]निर्मुक्तपत्री तनुत्राणं भित्त्वा सुभटलक्षणं लक्ष्यं भिनत्ति, तदर्थमेव तस्य मुक्तत्वात्; तथा शब्दोऽपि मुख्यमर्थमभिधाय तदर्थान्तरमभिधास्यति, तदर्थमेव तस्य प्रयुक्तत्वादिति । तदतीव तात्पर्योक्तिपर्यालोचनशून्यमभिहितं यतः सिद्धसाध्यसमुच्चारणे सिद्धं साध्यायोपदिश्यत इति पदसमुदायमये वाक्ये कारकपदार्थाः क्रियापदार्थाश्च परस्परान्विता यावदसिद्धं भवति तावदर्थं प्रवर्तन्ते । यथा–' लोहितोष्णीषा ऋत्विजः प्रचरन्तु ' इत्यत्र ऋत्विक्प्रचरणे प्रमाणान्तरसिद्धे लोहितोष्णीषत्व-मात्रं विधेयम्, तस्यैवासिद्धत्वात् । दध्ना जुहोतीत्यादौ च हवनस्यान्यतः सिद्धे-र्दध्यादेः करणत्वमात्रं विधेयम् । तत्र हि तस्यैवासिद्धत्वम् । एवं क्वचिदुभयविधिः, क्वचित् त्रिविधिरपि । यथा–' रक्तं पटं वय ' इत्यादावेकविधिर्द्विविधिस्त्रिविधि-र्वा । ततश्च यदेव विधेयम्, तत्रैव पदानां तात्पर्यमिति प्रयुक्तशब्दार्थ एव तात्पर्यं न प्रतीयमानमात्रे । एवं हि पूर्वो विद्धानित्यादावपरार्धर्थेऽपि तात्प-र्यं स्यात् । यदि च शब्दश्रुतेरनन्तरं यावानर्थः[7] प्रतीयते, तावन्तं सर्वमप्यभिधा-व्यापारेणैव शब्दो वक्ति, तत् कथं प्रियाप्रियवाक्यश्रवणादुत्तरकालं हर्ष-शोकयोरपि न वाच्यत्वम् ? कस्माच्च लक्षणालक्षणीयस्याप्यर्थस्याभिधाव्यापारे-

१ अ. भून्म० । २ अ. ०दो हे० । ३ प. ०कप० । ४ व. ०टतक्ष०, अ. ०भुतटल० । ५ प. ०दप्यर्या ० । ६ प. ०यसिद्धिः । ७ व. यावदेव । ८ प. व. ०रार्थे० । ९ प. ०र्थः ता० ।

णैव प्रतीति[1]सिद्धेरिति सिद्धं शब्दार्थ[2]व्यतिरेकिणः प्रतीयमानस्य वस्तुनोऽभिधातो व्यापारान्तरगम्यत्वम् ।

" भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥"

इत्यादौ त्वनेकार्थानां शब्दानां प्रकरणादिना नियमितेऽभिधाव्यापारे या काचित्[3] कुञ्जरादेरर्थान्तरस्य तेन सार्द्धमुपमा[4]ऽऽदेरलङ्कारस्य[5] च प्रतीतिः सा सर्वाऽपि व्यापारान्तरविषयाऽभिधाया नियमितत्वात् । रसादयस्तु यदि कथमपि वाच्याः स्युस्तद्विभावादिप्रयोगं विनाऽपि रसादिशब्दैः शृङ्गारादिशब्दैर्वा प्रतिपाद्येरन्, न च प्रतिपाद्यन्ते । तत्प्रयोगेऽपि रसादीनामप्रतीतेर्विभावादिप्रयोगे तु तान् विनाऽपि प्रतीतेश्चेत्यन्वय-व्यतिरेकाभ्यां विभावादिविभाव्या एव रसादयोऽपि नाभिधेया इति । अथेत्थमभिधास्यते यदुपचारव्यापारेणैव तत् सर्वमपि प्रकाशयिष्यते, किं व्यञ्जनव्यापारेणेति; तदप्यश्वारूढोऽश्वमेव न पश्यतीति दृष्टान्तकवलितमेव विना व्यञ्जनव्यापारमुपचारस्याप्यभावात् । गङ्गायां घोष इत्यादौ हि तटादि लक्ष्यं पावित्र्यादयस्तु व्यञ्जनीया एवेति पूर्वप्रतिपादितमेव । अथ 'तेऽपि लक्षणाक्रोडीकृताः सन्तु[6]' इति मतम्, तदपि प्राक् प्रत्यादिष्टमेव अथ यद्येवमप्यभ्युपगम्यते, तथापि क्वचिदपि नोपचारप्रवेशः । तस्य[7] हि मुख्यार्थबाधादित्रयं हेतुस्तच्च व्यङ्ग्ये न सम्भवति । यद्यपि क्वचित् 'मम धम्मिर्य' इत्यादौ विध्यादेरनुपपद्यमानत्वेन मुख्यार्थबाधो वैपरीत्यं च प्रत्यासत्तिर्निषेधश्च लक्ष्यः स्वच्छन्दक्रीडा च फलं सम्भवति, तथापि न सर्वत्र निर्वाहः । यतः—'अत्ता इत्थ' इत्यादौ मुख्यार्थबाधो नास्ति । तत् कथमुपचारेणापि साध्यसिद्धिः ? । किं च लक्षणीयोऽर्थो नियतप्रत्यासत्तिरेव, प्रत्यासत्तिशून्यस्य लक्षयितुमशक्य[9]त्वात् । प्रतीयमानः पुनः प्रकरणादिविशेषवशेन नियतप्रत्यासत्तिरनियतप्रत्यासत्तिः प्रत्यासन्नप्रत्यासन्नश्चेति । तत्र 'अत्ता इत्थ' इत्यादौ नियतप्रत्यासत्तिः । 'कस्स व न होइ रोसो' इत्यादावनियतप्रत्यासत्तिः ।

---

१ अ. ०ते सि० । २ अ. प. ०र्थाव्य० । ३ प. ०चिदर्था० । ४ प. ०मालं० । ५ प. ०स्य प्र० । ६ प. संति म० । ७ अ. तस्या । ८ अ. ०न्न धी० । ९ प. ० क्यमानत्वात् पुनः ।

* " विवरीयरए लच्छी बंभं दट्ठूण नाहिकमलत्थं ।
हरिणो दाहिणनयणं रसाउला झत्ति ढकेइ ॥ २८२ ॥ "

इत्यादौ प्रत्यासन्नप्रत्यासन्नः । अत्र[1] हि हरिपदेन दक्षिणनयनस्य सूर्यात्मता व्यज्यते, तन्निमीलनेन सूर्यास्तमयस्तेन पद्मसङ्कोचस्ततो ब्रह्मणः स्थगनं तत्र सति गोप्याङ्गस्यादर्शनेनानियन्त्रणं निधुवनमित्यभिधोपचाररूपव्यापारद्वयाति-रिक्तो व्यञ्जनव्यापारोऽवश्यमेषितव्यस्तत्प्रकाश्यं च व्यङ्ग्यमपि मन्तव्यमेवेति । व्यक्तिविवेककारस्तु व्यङ्ग्य–व्यञ्जकभावस्य सर्वस्याप्यनुमानान्तर्भावमाह । तथाहि–' वाच्याद्यसम्बद्धं तावत् किञ्चिदपि न प्रतीयते । यतः कुतश्चिद् यस्य कस्यचिदर्थस्य प्रतीतिप्रसङ्गात् । सम्बन्धे च नियतधर्मिनिष्ठत्वेन ' त्रिरूपाल्लि-ङ्गाल्लिङ्गिनि ज्ञानमनुमानम् ' इत्येवंरूपता पर्यवस्यति । तथा च–' भम धम्मिय ' इत्यत्र गृहे श्वनिवृत्त्या भ्रमणं विहितम् । गोदावरीतीरे सिंहोपल-ब्धेरभ्रमणमनुमापयति । तद्यथा– धार्मिकभ्रमणं भयकारणनिवृत्त्युपलब्धिपूर्व-कम्, भीरुभ्रमणत्वात् । यद् यद् भीरुभ्रमणं तत् तद् भयकारणनिवृत्त्युपल-ब्धिपूर्वकं दृष्टम् । यथोभयसंमतस्त्र्यादिभ्रमणम्, भीरुभ्रमणं चेदं तस्मात् तथा । गोदावरीतीरे च सिंहोपलब्ध्या व्यापकविरुद्धोपलब्धिर्व्यापकं च भयकारणे-त्यादि साध्यम् । यदाहुः—' साध्यं व्यापकमित्याहुर्व्याप्यो हेतुरुदाहृतः ।' इति । तद्विरुद्धा च भयकारणसद्भावोपलब्धिस्तया धार्मिकाभ्रमणं सिद्धमिति । तदर्ध्ययुक्तमेव, वाच्यस्य प्रतीयमानेन तादात्म्यतदुत्पत्त्यभावात् । तथाहि–गोदा-वरीतीरे सिंहसद्भावः । प्रत्यक्षादनुमानाद् वा न निश्चितोऽपि तु वचनात्, न च वच-नस्य प्रामाण्यमस्ति, अर्थेनाप्रतिबन्धादित्यसिद्धोऽयं हेतुः । शुनो बिभ्यदपि धीर-त्वेन सिंहान्न बिभेतीति विरुद्धोऽपि । भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेणा-न्येन वा केनाप्येवम्भूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिकश्च । तत् कथमेवंविधाद् हेतोः साध्यसिद्धिरित्याद्यन्यत्राप्यूह्यमिति ॥ ६२ ॥

---

* विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥

---

१ अ. ०परीअर० । २ अ. ०त्र हृ० । ३ प. ०तिरेको । ४ अ. ०नुभावान्त० । ५ प. ०धर्म० । ६ ब. ०प्युक्त० । ७ अ. ०व्यप्र०, ब. ०माने । ८ ब. ०पि ब० । ९ प. न ब० । १० प. ०भेति भी० ।

अथ ध्वनौ निर्णीते रसादिध्वनेः कैश्चिद् रसवदाद्यलङ्कारत्वमुक्तं तन्निराकर्तुं श्लोकद्वयमाह—

शब्दार्थसौन्दर्यतनोः काव्यस्यात्मा ध्वनिर्मतः ।
तेनालङ्कार्य एवायं नालङ्कारत्वमर्हति ॥ ६४ ॥
स्वस्याङ्गित्वे रसाद्याः स्युर्न तद् रसवदादयः ।
यत्रैते तु गुणीभूतास्तत्र तानपि मन्महे ॥ ६५ ॥[2]

काव्यस्य निपुणकविकर्मणो ध्वनिरात्मा जीवितव्यं मतः कथितः । यदुक्तम्–'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः' इति । कीदृशस्य काव्यस्य ? शब्दार्थसौन्दर्यतनोः शब्दार्थयोर्यत् सौन्दर्यं रामणीयकं तदेव तनुः शरीरं यस्येति । यथा शरीरमात्मानं विनौ न किञ्चिदिव, तथा शब्दार्थसौन्दर्यमयमपि काव्यमकिञ्चित्करमेव ध्वनिं विना । तेनावसीयते[4] ध्वनिरेवात्मा काव्यस्येति । तेन कारणेनायं ध्वनिरलङ्कार्य एव, न क्वचिदप्यलङ्कारत्वमर्हति, सर्वत्रोऽप्यात्मनोऽलङ्कार्यत्वात् । तद् ततः पूर्वोक्तकारणात् स्वस्याङ्गित्वे प्राधान्ये सति रसादयो रसवदादयोऽलङ्कारा ये कैश्चिदुक्तास्ते न भवन्ति, रसादीनां ध्वनिरूपत्वात् । तत् किं सर्वत्राप्येतेषां नालङ्कारत्वमित्यपवादमाह– यत्र यस्मिन्नेते रसादयः पुनर्गुणीभूता अपराङ्गत्वेन गौणतां प्राप्तास्तत्र तस्मिन् काव्ये तानपि रसवदाद्यलङ्कारानपि मन्यामहे । तत्स्वरूपं चालङ्कारप्रस्तावे वक्ष्यते[2] ॥ ६४–६५ ॥

इत्यर्थवैचित्र्यपवित्रवाचो न कस्य चेतः कवयो हरन्ति ? ।
उद्यानदेशा मधुमासबद्धसमृद्धयो विश्वमुदे भवन्ति ॥ ६६ ॥

इत्यलङ्कारमहोदधौ ध्वनिनिर्णयो नाम तृतीयस्तरङ्गः ॥ ३ ॥



१ अ. रसाद्य० । २ प. युगली । ३ अ. ०नाकिं० । ४ व. ०ते चात्मा । ५ व. ०त्रात्म० । ६ अ. ०द्धये । ७ प. इत्य० काव्यं सुगमं इ० ।

# अथ चतुर्थस्तरङ्गः ।



अथ ध्वनिगतं[1]मर्थवैचित्र्यमभिधाय गुणीभूतव्यङ्ग्यगतमाह—

अगूढत्वास्फुटत्वाभ्यामसुन्दरतया तथा[2] ।
सिद्ध्यङ्गत्वेन वाच्यस्य काक्वाक्षिप्ततयाऽपि च ॥ १ ॥

सन्दिग्धतुल्यप्राधान्यतयाऽन्याङ्गतयाऽपि च ।
गुणीभूतमपि व्यङ्ग्यं यत् किञ्चिच्चारिमास्पदम् ॥ २ ॥

याति च ध्वनिवद् भेदमीलनाद् भूरिभेदताम् ।
तदप्यर्थस्य वैचित्र्यं किमप्यत्र प्रचक्षते[3] ॥ ३ ॥[4]

अत्रास्मिन्नलङ्कारशास्त्रे तदप्यर्थस्यो[5]ऽभिधेयस्य किमप्यद्भुतं वैचित्र्यं विचित्रतां प्रचक्षते कथयन्ति । यत् किञ्चिद् गुणीभूतमप्यगूढत्वास्फुटत्वाभ्यामित्यादिहेतुभिर्गौणभावं प्राप्तमपि व्यङ्ग्यं चारिमास्पदं मनोज्ञतामन्दिरम् । तथाऽष्टानामपि गुणीभूतव्यङ्ग्यभेदानां प्रत्येकमर्थान्तरसङ्क्रान्तवाच्यादयः शुद्धा एकोनचत्वारिंशद् भेदाः । तेषां च संसृष्टि–सङ्करैर्मीलनं तस्मिंश्च शुद्धभेदप्रक्षेप इति सर्वभेदमीलनाद् ध्वनिरिव भूरिभेदतां[6]मनेकभेदत्वं याति गच्छतीति । अत्र ध्वनिकारसम्प्रदायाद् यत्र वस्तुनाऽलङ्कृति[7]र्व्यज्यते, तस्याः क्वापि न गुणीभूतत्वम् । यदाह —

"व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥ २८३ ॥" इति ।

अत्र ध्वन्यङ्गता ध्वनिरूपता ।

---

१ प. ॰तवै॰ । २ प. यथा । ३ प. ॰क्ष्यते । ४ प. त्रिभिः कुलकम् । ५ भ. ॰र्थस्य किं॰ । ६ भ. ॰तां या॰ । ७ प. ॰ङ्कारो व्य॰ ।

तत्रागूढत्वेन गुणीभूतत्वं यथा—

" श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ २८४ ॥"

अत्रोपदेशेन कलाचार्यकार्यत्वाभावाद् बाधितस्वार्थेन ज्ञापकत्वसादृश्याद् यौवनमदं लक्षयताऽनायासेन शिक्षादानं ध्वन्यते । तच्चोपदिशतीत्युक्तेऽभिधेयवत् झगित्यवगमकैत्वादगूढं व्यङ्ग्यं च गूढं चमत्करोति नागूढम् । यदुक्तम्—

" अनुद्घुष्टः शब्दैरथ च घटनातः स्फुटतरः
पदानामर्थात्मा रमयति न तूत्तानितरसः ।
यथा दृश्यः किञ्चित् पवनचलचीनांशुकतया
कुचाभोगः स्त्रीणां हरति न तथोन्मुद्रितमुखः ॥ २८५ ॥ "

अस्फुटत्वेन यथा—

* " अहयं उज्जुअरूआ तस्स वि उम्मंथराइं पिम्माइं ।
सहिआअणो अ निउणो अलाहि किं पायराएण ? ॥ २८६ ॥ "

अत्र स मां पुरुषायितां यार्थयते, निषेद्धुं चाहमशक्ता । तत्सख्यः प्रातः पादमुद्र्याँ तर्कयित्वा मा मां हसिषुरिति व्यङ्ग्यमस्फुटम् ।

असुन्दरतया यथा—

" ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥ २८७ ॥ "

अत्र वञ्जुललतागृहे दत्तसङ्केता नागतेति व्यङ्ग्यं स्वरूपमात्रप्रकाशनपरत्वेन चमत्कारित्वाभावादसुन्दरम् । मुखच्छायामालिन्यरूपं तु वाच्यं रसविशेषप्रतीति-

* अहं ऋजुकरूपा तस्यापि उन्मन्थराणि प्रेमाणि ।
सखिकाजनश्च निपुणोऽलं किं पादरागेण ? ॥

१ प. ०ढेन । २ प. ०नत्वं । ३ अ. ०मत्वा०, प. ०मत्वादगूढं य० । ४ अ. ०य उज्जुअ० । ५ अ. प. व. माः । ६ अ. व. ०यितया० । ७ अ. ०या मा । ८ अ. तु र० ।

परत्वाच्चमत्कारित्वेन कमनीयमिति व्यङ्ग्यात् तदेव सुन्दरम् ।

वाच्यसिद्ध्यङ्गत्वेन यथा—

" भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥ २८८ ॥"

अत्र हालाहलं व्यङ्ग्यं भुजगरूपेणस्य वाच्यस्य सिद्धिकृत् ।

काक्काक्षिप्ततया यथा—

" मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन ॥"

अत्र काक्काक्षिप्तं मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यस्य निषेधस्यापि स्वातन्त्र्येण स्थितस्य तिरस्कारत्वाभावात् तत्सहभावेन स्थितम् । यदि वा काकुं विना व्यङ्ग्यमेव न स्यादिति काकुमात्राक्षिप्तत्वाद् गुणीभूतत्वम्, विशिष्टकाक्काक्षिप्तत्वे तु ध्वनिरेव ।

सन्दिग्धप्राधान्यतया यथा—

* " महिलासहस्सभरिए तुह हिँयए सुहय ! सा अँमायंती ।
अणुदिणमणण्णकम्मा अंगं तणुअं पि तणुएइ ॥ २९० ॥ "

अत्राङ्गं तनुकमपि तनूकरोतीति वाच्यं किं वा तनूभावप्रकर्षाधिरोहेण यावदत्याहितं नाप्नोति तावदुज्झित्वा दौर्जन्यं साऽनुनीयेतामिति व्यङ्ग्यं प्रधानमिति सन्दिग्धम् ।

तुल्यप्राधान्यतया यथा—

---

* महिलासहस्रभृते तव हृदये सुभग ! सा अमान्ती ।
अनुदिनमनन्यकर्माऽङ्गं तनुकमपि तनयति ॥

---

१ प. ०गिनां । २ ब. ०पस्य सि० । ३ अ. ०स्य न । ४ अ. काक्वा म० । ५ अ. ०रस्कृत्वा०, प. ०राभा० । ६ अ. ०अए । ७ प. यमा, ब. यगा० । ८ ब. चा० । ९ अ. ०तत्वा, प. ब. ०तस्माद् । १० प. ०नीता० ।

" पङ्क्तौ विशन्तु गणिताः प्रतिलोमवृत्त्या पूर्वे भवेयुरियताऽप्यथवा अपरेन् ।
सन्तोऽप्यसन्त इव चेत् प्रतिभान्ति भानोर्भासावृते नभसि शीतमयूखमुख्याः"

अत्र प्राकरणिकाप्राकरणिकयोः समं प्राधान्यम् ।

तथाऽन्याङ्गतयाऽन्यस्यापरस्य रसादेर्वाच्यार्थस्य वा क्रमेण रसादिरनुरणनरूपं चाङ्गं यथा—

" अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरु–जघनस्पर्शी नीवीविस्रंसनः करः ॥ २९२ ॥ "

अत्र शृङ्गारः करुणस्याङ्गम् ।

यथा वा—

" कैलासालयभाललोचनरुचा निर्वर्चितालक्तक–
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।
स्पर्द्धाबद्धसमिद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥ २९३ ॥ "

अत्र स्तोतृगतरत्याख्यभावस्य रसः ।

यथा च—

" अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधय–
स्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद् भुव–
स्तावद् बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥२९४॥ "

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।

वाच्यार्थस्यानुरणनरूपमङ्गं यथा—

---

१ अ. गुणि० । २ अ. ०स्याक० । ३ प. ०देरण० । ४ प. ०बंध०, अ. अद्धाबंध० । ५ प. ०त्रग० । ६ अ. ०भुरोविषये, व. अविषयो । ७ प. व. ०ख्यभा० ।

" जनस्थाने भ्रान्तं कनकमृगतृष्णाऽन्धितधिया
वचो वै देहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालंकाभर्तुर्वदनपरिपाटीषु घटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ २९५ ॥ "

जनस्थाने[1] ग्राम-नगरादावाश्रमविशेषे च । कनकस्य मृगतृष्णाऽतिलुब्धत्वम्, कनकमृगस्य च तृष्णा लिप्सा । वै इति स्फुटत्वे देहीति, वैदेहीति[2] च । अलमत्यर्थं कार्भर्तुरल्पभर्तुर्लङ्काभर्तुश्च वदनपरिपाटीषु वचनपङ्क्तिषु घटना सम्पादनम्, वदनपरिपाट्यामिषुघटना च । कुशलं कार्यक्षमं वसु यस्य तस्य भावः, कुश-लवौ सुतौ यस्याः सीतायाः । अत्र शब्दशक्तिमूलाऽनुरणनमूर्तिरुपमानोपमेयभावो रामत्वमिति वाच्यस्याङ्गतां नीतः । १-३ ॥[4]

पुनर्ध्वनेः स्वरूपान्तरमाह—

अलङ्कारैर्गुणीभूतव्यङ्ग्यभेदैः पृथक् पृथक् ।
[5]संङ्करैश्च युतः प्राग्वद् ध्वनिः स्फूर्जत्यनेकधा ॥ ४ ॥

ध्वनिरनेकधा विशेषतो बहुधा स्फूर्जति[6] । कीदृशोऽलङ्कारैर्गुणीभूतव्यङ्ग्यभेदैश्च सह पृथक् पृथक् प्रत्येकं प्राग्वत् पूर्ववत् संसृष्टि-सङ्कराभ्यां युतः संयुक्तो[7] न केवलं पृथक् पृथक् सङ्करैश्चालङ्कार-गुणीभूतव्यङ्ग्यभेदैर्मिथो मिलितैश्च सम[8] युक्तः । यदाह—

" स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्कर-संसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥ २९६ ॥ "

तत्र दिङ्मात्रमुदाह्रियते यथा—

" नेत्राम्भोरुहविभ्रमेषु पवनप्रेङ्खोलि नीलोत्पलं
कादम्बा गतिडम्बरेषु कबरीभङ्गे तरङ्गावलिः ।

---

१ अ. ०ने न० । २ अ. व. ०ति च । ३ प. ०च्चन० । ४ प. त्रिभिः कुलकम् । ५ प. संयुतैश्च य० । ६ अ. स्फुरति । ७ व. संयु० । ८ अ. व. सद्वे ।

दीर्घाक्ष्या गृहदीर्घिकामनु मुहुः सङ्गीतकारम्भिणी
भृङ्गाली कलकाकलीषु च किमप्याचार्यकं पुष्प(ष्य)ति ॥ २९७॥"

अत्राचार्यकं पुष्प(ष्य)तीत्यसम्बन्धे[1] सम्बन्ध इत्यतिशयोक्त्याऽनुग्राह्यानुग्राहकत्वेन रसध्वनेः सङ्करः।

यथा च—

" कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥२९८॥"

अत्र कर्त्ता द्यूतच्छलानामित्यादिपदानामसूयोपहासादिना व्यङ्ग्येन गूढत्वाभावाद् गुणीभूतेन पूर्ववद् वीररसस्य सङ्करः।

यथा च—

" दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः। २९९ ॥"

अत्र मैत्रीशब्देन चेतनविषयाभावाद् बाधितस्वार्थेन नैकट्यसम्बन्धात् संश्लेषं लक्षयता उपकार्योपकारकत्वादि ध्वन्यते। तेन मैत्रीफलभूतकषायपदसन्निधेरगूढत्वाद् गुणीभूतेन प्राग्वद् रसध्वनेः सङ्करः। प्रियतम इवेत्युपमाऽलङ्कारेण[3] संसृष्टिः। एवमन्येऽपि भेदाः स्वयमुत्प्रेक्षणीयाः ॥ ४ ॥

**व्यङ्ग्यं गुणीभूतमपीत्थमन्वहं यः काव्यवीथीपथिको निषेवते।**
**तस्यापि विश्वे कविसंकथाविधौ महाकवित्वं न पराङ्मुखं क्वचित्**

इत्यलङ्कारमहोदधौ गुणीभूतव्यङ्ग्यप्रदर्शनो नाम चतुर्थस्तरङ्गः ॥ ४ ॥

---

१ अ. ब. ०न्धिसं०, ०न्धे इ०। २ प. स्फटिक०। ३ प. ब. ०णं तु।
४ अ. ०त्थं यः।

# अथ पञ्चमस्तरङ्गः ।

अथ निर्दोषत्वादिना शब्दार्थवैचित्र्यमिति प्रथमं दोषानभिधित्सुः सामान्येन दोषलक्षणमाह—

वैचित्र्यव्याहतिर्दोषः सा च भूम्ना रसक्षतेः ।
तद् ध्रुवं रस एवैष भक्त्या शब्दार्थयोः पुनः ॥ १ ॥

वैचित्र्यस्य सहृदयानन्दिनः सौन्दर्यविशेषस्य या व्याहतिर्विलोपः सैव दोषः । सा च कथं भवेदित्याह—सा चेत्यादि । सा च वैचित्र्यव्याहतिर्भूम्ना बाहुल्येन रसक्षते रसहानेः सकाशाज्जायते । ततः किं सिद्धमित्याह—तद् ध्रुवमित्यादि । तत् तस्मात् कारणाद् ध्रुवं निश्चितमेष दोषः केवलं रस एव नान्यत्र । यतोऽन्वय-व्यतिरेकाभ्यां रसधर्मा एव गुणदोषास्तथाहि—यत्रैव दोषास्तत्रैव गुणा रसविशेषे च दोषा न तु शब्दार्थयोः । यदि हि तयोर्भवेयुस्तदा शृङ्गारादिष्विव बीभत्सादिषु कष्टत्वादयो गुणा न भवेयुर्हास्यादौ वाऽश्लीलत्वादयः । शब्दार्थयोस्तत्रापि भूतत्वात् । ततो यस्याङ्गिनः शृङ्गारादेस्ते दोषास्तदभावे न दोषास्तद्भावे[6] तु दोषा इत्यन्वय-व्यतिरेकाभ्यां गुण-दोषयो रस एवाश्रयस्तदुपकारिणोः शब्दार्थयोः पुनर्भक्त्या उपचारेण न तु मुख्यया वृत्त्येति ॥ १ ॥

अथ पददोषानाह—

दुष्टं पदमसंस्कारमसमर्थमनर्थकम् ।

पदं दुष्टं भवति । कथम्भूतमसंस्कारादिकम् । तत्रासंस्कारं व्याकरणसंस्काररहितम् । यथा—

" भूरिभारभराक्रान्त ! बाधति स्कन्ध एष ते ।
न तथा बाधते स्कन्धो यथा बाधति बाधते ॥ २०० ॥ "

---

१ अ. ०दि त० । २ अ. ०णा हा० । ३ प. ०वे दो० । ४ अ. बा० यथा ।

अत्र बाधतिरात्मनेपदी, न तु परस्मैपदी ।

अथासमर्थं यत्रार्थे प्रयुक्तं तं वक्तुं नास्य शक्तिः । यथा—

" तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतः ।
सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम् ॥ २०१ ॥ "

अत्र हन्तीति गत्यर्थं वक्तुमशक्तम् ।

अथानर्थकं पादपूरणायैव यत् प्रयुज्यते । यथा—

" बिभर्ति यश्च देहार्धे प्रियामम्बुं(मिन्दुं) हि मूर्धनि ।
स वै देवः खलु त्वां तु पुनातु मदनान्तकः ॥ २०२ ॥ "

अत्र च हि वै खलु तु इत्येतानि पादपूरणार्थान्येव ।

अथ वाक्यदोषानाह—

वाक्यमप्युदितं तद्वद् रसाद्यनुचिताक्षरम् ॥ २ ॥
लुप्त–ध्वस्त–विसर्गान्तमिष्टसम्बन्धवञ्चितम् ।
समाप्तपुनरारब्धं भग्नप्रक्रममक्रमम् ॥ ३ ॥
न्यूनमर्द्धान्तरस्थैकपदं सङ्कीर्ण–गर्भिते ।
दुर्वृत्तं सन्धिविश्लेष–कष्टत्वाश्लीलतास्पदम् ॥ ४ ॥
अनिष्टान्यार्थमस्थानसमास–पददुःस्थितम् ।
पतत्प्रकर्षमप्रोक्तवाच्यं त्यक्तप्रसिद्धिकम् ॥ ५ ॥
पुनरुक्तपदन्यासमतिरिक्तपदं तथा ।

वाक्यमपि तद्वद् दुष्टमुदितं कथितम् । किंविशिष्टं ? रसाद्यनुचिताक्षरादि ।

---

१ अ. ०षु स० । २ अ. ०ताप० । ३ अ. ०र्ष क० ।

तत्र रसाद्यनुचिताक्षरं रसाद्यनुगुणत्वमक्षराणां वक्ष्यते, तद्विपरीताक्षरं वाक्यं दुष्टम् । यथा—

" अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि ! माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ ३०३ ॥ "

अत्र टवर्गस्य शृङ्गारानुगुणत्वम् ।

रौद्रे यथा—

" देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति नो
यद् रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥ ३०४ ॥ "

रौद्रे हि विकटवर्णत्वं दीर्घसमासत्वं च कथितं तदत्र नास्ति ।

अथ लुप्तध्वस्तविसर्गान्तं लुप्तः सत्त्वात् त्याजितो ध्वस्तो वा उच्चारादिना रूपान्तरं प्रापितो विसर्गो येषां ते तथा तादृशा अन्ताः पदान्ता यत्र[3] । यथा—

" यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ।
वीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ॥ ३०५ ॥ "

अथेष्टसम्बन्धवञ्चितमिष्टोऽभिमतो यः सम्बन्धः परस्परं पदार्थानामन्वयस्तेन वञ्चितं रहितम् । यथा—

" येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि—
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
तैः किं त्वत्परितोषकारि विहितं किञ्चित् प्रवादोचितम् ? ॥३०६॥"

---

१ प. ०कुंठो०, ब. अकंठो० । २ अ. ०तम० । ३ ब. अत्र । ४ प. चन्द० ।

अत्र गुणप्रधानयोरेव सम्बन्धो न पुनः परस्परं गुणानां समकक्षत्वादिति। यच्छब्दनिर्देश्यानां गुणभूतानामर्थानामन्योन्यमसम्बन्धे यैरित्यत्र विशेष्यस्याप्रतीतेरनिष्टः सम्बन्धः। क्षपाचारिभिरिति पाठे सर्वेषामपि यदर्थानां तच्छब्दार्थेन समन्वयादिष्ट एव सम्बन्धः स्यादिति।

यथा च—

" त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमान्तं परमिह युवामेव भजथः।
अयि! द्वन्द्वं दिष्ट्या तदिह सुभगे! संवदति वा-
मतः शेषं यत् स्याज्जितमिह तदानीं गुणितया ॥ ३०७ ॥ "

अत्र यदिति पदं तदिति पदमपेक्षते, तदानीमिति पदं च यदेति पदम्; तच्च नास्तीत्यनिष्टः सम्बन्धः। ' चेत् स्यात् ' इति पाठे पुनरिष्ट एव स्यात्।

यथा[3] च—

" चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥ ३०८ ॥ "

अत्राध्वरशब्दः समासे न्यग्भूत इति तदर्थः सर्वैर्न[4] संयुज्यत इति सम्बन्धानिष्टत्वम्।

अथ समाप्तपुनरारब्धं यत् समाप्य पुनरारभ्यते। यथा—

" ज्योत्स्नां लिम्पति चन्दनेन स पुमान् सिञ्चत्यसौ मालती-
मालां गन्धजलैर्मधूनि कुरुते स्वादूत्यसौ फाणितैः।
यस्तस्य प्रथितान् गुणान् प्रथयति श्रीवीरचूडामणे-
स्तारत्वं स च शाणया मृगयते मुक्ताफलानामपि ॥ ३०९ ॥ "

---

१ अ. सक० । २ अ. स्यात् । ३ अ. यथा । ४ प. न यु० ।

अत्र श्रीवीरचूडामणेरित्यत्र वाक्यं समाप्य तारत्वमित्यादि पुच्छप्रायं पुनरुपात्तं न चमत्करोति ।

अथ भग्नप्रक्रमं भग्नः प्रक्रमः प्रक्रान्तत्वं यत्र । यथा—

" उदन्वच्छिन्ना भूः स च निधिरपां योजनशते
सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ ३१० ॥ "

अत्र पर्यायान्यत्वेन क्रमभङ्गः ' मिता भूः पत्याऽपां स च पतिरपां योजनशतम् ' इति तु युक्तम् । ननु ' नैकं पदं द्विः प्रयोज्यं प्रायेण ' इत्यन्यत्र, ' पुनरुक्तपदन्यासं वाक्यं दुष्टम् ' इति चात्रैवाभिहितत्वात् कथमेकस्य पदस्य द्विः प्रयोगः१। युक्तमुक्तम्, किं पुनरुद्देश्य–प्रतिनिर्देश्यव्यतिरिक्ते विषये द्विर्न प्रयोक्तव्यमेकं पदम्; तद्वति तु विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः । तथाहि—

" उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥ ३११ ॥ "

अत्र रक्त एवास्तमेतीति यदि क्रियेत तत्पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति ।

यथा वा—

" धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्यं च विद्वत्सु सुते मघोनः स[२] तेषु न स्थानमवाप शोकः ॥३१२॥ "

अत्र सुप्व्यत्ययेन । ' तीव्रेण विद्वेषिभुवाऽऽगसा च[३] ' इति तु युक्तम् ।

यथा च—

---

१ अ. अत्र । २ व. ०तो । ३ अ. व. सुते० । ४ व. वेति० ।

" गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ २१३ ॥ "

अत्र कारकोक्तत्वपरावृत्त्या ' विश्रब्धाः कलयन्तु सूकरवराः ' इत्यदुष्टम् ।

यथा वा—

" सस्नुः पयः पपुरनेनिजुरम्बराणि जक्षुर्बिसं धृतविकासिबिसप्रसूनाः ।
सैन्याः श्रियामनुपभोगनिरर्थकत्वदोषप्रवादममृजन् वननिम्नगानाम् ॥ "

अत्र तिङ्प्रत्ययाभावेन । ' विकचमस्य दधुः प्रसूनम् ' इति तु युक्तम् ।

यथा वा—

" यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ २१५ ॥ "

अत्र तुम्प्रत्ययत्यागेन । ' सुखमीहितुं च ' इति तु युक्तम् ।

" बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्कः सिंहाजिनस्यैव दुकूलभावः ॥ २१६ ॥ "

अत्र यथाऽऽरब्धरूपकानिर्वाहेण । ' मृगेन्द्रचर्मैव दुकूलमस्य ' इति युक्तम् ।

" तरङ्गय दृशोऽङ्गणे( ने ! ) पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका-
मुदञ्चय मनाग् मुखं भवतु च द्विचन्द्रं नभः ॥ २१७ ॥ "

अत्रोपमेयानामतिशयं वक्तुमुपमानानां निन्दा प्रारब्धा, सा च चतुर्थपादे

१ अ. ०मान्ध० । २ व. ०क्षतिः । ३ प. शूक० । ४ अ. अपाङ्ग० । ५ प. ०लं ।

सादृश्यमात्राभिधाने न निर्व्यूढेति भग्नप्रक्रमत्वम् । 'भवतु तद्‌ द्विचन्द्रं नभः' इति तु युक्तम् ।

अथाक्रमं न विद्यते क्रमो यत्र । यथा—

" तुरङ्गमथ मातङ्गं प्रयच्छास्मै मदालसम् ।
कान्ति-प्रतापौ भवतः सूर्याचन्द्रमसोः समौ ॥ ३१८ ॥ "

अत्र 'मातङ्गमथ तुरङ्गम्' इति वक्तव्ये 'कान्ति-प्रतापौ भवतः समौ चन्द्र-विवस्वतोः' इति च वाच्ये विपरीतमुक्तम् ।

यथा च—'द्वयं गतं सम्प्रति शोचनीयताम्' इत्यादि[3] ।

अत्र त्वंशब्दादनन्तरश्चकारो युक्तः, स च न कृत इति क्रमलोपः ।

यथा च—

" शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ ! दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते ?
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥३१९॥ "

अत्रेत्थंशब्दः प्रोच्येवेत्यस्मात् पूर्वं वाच्यो न तु पुरस्तादिति क्रमत्यागः ।

अथ न्यूनमवश्यवाच्यपदस्यानभिधाने न्यूनम् । यथा—

" नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥ ३२० ॥ "

अत्र जलधरादिपदानामिव विद्युतोऽपि ध्रुवमिदंपदपरामर्शो वाच्यः ।

---

१ प. ०ति यु० । २ ब. वा । ३ ब. ०दिः । ४ प. ०तेत्थं । ५ प. ०श्यस्य प० ।

अथार्धान्तरस्थैकपदमर्धान्तरे द्वितीयस्मिन्नर्धे स्थितमेकं पूर्वार्द्धसम्बद्धं पदं यत्र । यथा—

" यावदर्थपदां[1] वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥ ३२१ ॥ "

अत्र विररामेति पदं पूर्वार्द्धे निवेशयितुमुचितम्, ' नार्द्धे किञ्चिदसमाप्तवाक्यम् ' इति[3] हि कविसमयः ।

अथ सङ्कीर्णं यत्र वाक्यान्तरपदानि वाक्यान्तरे प्रविशन्ति । यथा—

" किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणैनम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥ ३२२ ॥ "

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि ? एनं कण्ठे गृहाण । मनसः कोपं तमोरूपं मुञ्चेत्यन्वयः । एकवाक्यतायां तु श्लिष्टमिति तस्मादस्य भेदः ।

अथ गर्भितं यत्र वाक्यस्य मध्ये समग्रं वाक्यान्तरमनुप्रविशति[5] । यथा—

" योग्यो यस्ते पुत्रः सोऽयं दशवदन ! लक्ष्मणेन मया ।
रक्षैनं यदि शक्तिर्मृत्युवशं नीयते विवशः ॥ ३२३ ॥ "

अत्र रक्षैनं यदि शक्तिरिति वाक्यान्तरं सोऽयं दशवदनेत्यादिवाक्ये प्रविष्टम् ।

अथ दुर्वृत्तं दुष्टं लक्षणच्युतं यतिभ्रष्टं च लक्षणानुसरणेऽप्यश्रव्यं चाप्राप्तगुरुभावान्तलघु च रसाननुगुणं च वृत्तं यत्र । यथा—

" अयि ! पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम् । "

अत्र वैतालीययुग्मपदे लघ्वक्षराणां षण्णां नैरन्तर्यं निषिद्धमिति लक्षणच्युतम् । यथा च—' एतासां राजति सुमनसां दाम कण्ठावलम्बि '

---

१ प. ०र्थं य० । २ प. ०र्द्धप० । ३ अ. ०ति क० । ४ प. ०वाच्य० । ५ व. ०विशेत् ।

अत्र चतुर्थवर्णान्ते यतिर्न कृतेति यतिभ्रष्टम् ।

यथा वा—

" अमृतममृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमथ किं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्ञनो
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात् ॥ ३२५ ॥ "

अत्र यदिहान्यत् स्वादु स्यादित्यश्रव्यम् ।

यथा च—

" विकसितसहकारतारहारिपरिमलपुञ्जितगुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥ ३२६ ॥ "

अत्र हारीत्यत्र पादान्ते गुरुर्न कृतः । हारिप्रमुदितसौरभेति[3] तु पाठो युक्तः ।

यथा वा—

" अन्यास्ता गुणरत्नरोहणभुवः कन्यां मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ ३२७ ॥ "

अत्र वस्त्राण्यपीति पाठे लघोरपि गुरुवद्भावः पाश्चात्यस्य महाप्राणत्वात् ।

यथा च—

१ अ. व. किश० । २ अ. पदा० । ३ प. ति पा० ।

" हा नृप ! हा बुध ! हा कविबन्धो ! विप्रसहस्रसमाश्रय देव ! ।
मुग्धविदग्धसभान्तररत्न ! क्वासि गतः क्व वयं च तवैते ॥ ३२८ ॥ "

इदं हास्यरसानुरूपं वृत्तं करुणाऽननुगुणम् ।

अथ सन्धिविश्लेष–कष्टत्वाश्लीलताऽऽस्पदं सन्धेः स्वरसंहितारूपस्य विश्लेषः स्वराणां स्वावस्थायामेव स्थापनं स च द्विधा लाक्षणिको यादृच्छिकश्च । तत्र लाक्षणिकोऽसकृद्विहितो दोषः । यादृच्छिकस्तु सकृदपि दोष एव ' संहिता ह्येकपदवत् पादेष्वर्द्धान्तवर्जं कार्या ' इति काव्यसमयः । तथा सन्धेर्व्यञ्जनानां मिथः सम्पर्करूपस्य कष्टत्वमश्रव्यत्वम् । तथा सन्धेर्व्यञ्जनसम्पर्करूपस्य पदप्रत्यासत्तिरूपस्य चाश्लीलता व्रीडादिरूपा तासामास्पदम् ।

तत्र सन्धिविश्लेषो यथा—

" कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः । "

यथा वा—

" तव उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घ्यः ॥ ३३० ॥ "

अत्रोभयत्रापि लाक्षणिको विश्लेषः ।

यथा वा—

" मेघानिलेन अमुना एतस्मिन्नद्रिकानने ।
मञ्जर्युद्गमगर्भाऽसौ तर्वाल्युर्वी विधूयते ॥ ३३१ ॥ "

अत्र पूर्वार्द्धे यादृच्छिकः सन्धिविश्लेषः, उत्तरार्द्धे तु सन्धिकष्टत्वम् ।

सन्ध्यश्लीलता यथा—

" वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्तपते पत्री ततोऽत्रैव रुचिङ्कुरु ॥ ३३२ ॥ "

---

१ अ. ०धिर्व्य० । २ अ. व. वा० । ३ अ. ०ल्वा० ।

यथा वा—

" चकासे पनसप्रायैः पुरी खण्डमहाद्रुमैः । "

अत्र 'चलण्डामर'[1]इत्यत्र व्यञ्जनसम्पर्के ' रुचिं कुरु चकासे पनस–पुरी–खण्डशब्देषु तु पदप्रत्यासत्तौ व्रीडा–जुगुप्सयोः स्मरणादश्लीलता ।

अथानिष्टान्यार्थमनिष्टः प्रकृतविरुद्धोऽन्योऽर्थो यत्र । यथा—

" राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ ३३४ ॥ "

अत्र प्रकृते बीभत्सरसे विरुद्धस्य शृङ्गारस्य व्यञ्जको[2]ऽपरोऽर्थः ।

अथास्थानसमासपददुःस्थितमस्थाने समासेन पदेन च दुःस्थितम् । यथा—

" अद्यापि स्तनशैलदुर्गविषमे[3] सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिस्सरदलिश्रेणीकृपाणं शशी ॥ ३३५ ॥ "

अत्र क्रुद्धस्योक्तौ समासो न कृतः, कवेरुक्तौ तु कृत इत्यस्थान[4]समासः ।

" लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनि[6]र्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिलाऽऽताम्रच्छविः पातु वः ॥ ३३६ ॥ "

अत्र नखलक्ष्मेति पदात् कुटिलाऽऽताम्रेति पदं वाच्यम् ।

अथ पतत्प्रकर्षं पतन् प्रकर्षो[8] यत्र । यथा—

---

१ अ. लंडा । २ प. ०कः प० । ३ प. ०ये । ४ अ. ०नू दू० । ५ प. ०:ख० ।
६ प. ०ने स० । ७ प. ०मर्मं० । ८ प. ०र्षो यथा ।

" कस्कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
कस्कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ? ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्त्तते ॥ ३३७ ॥ "

अत्र यथोत्तरमनुप्रासः प्राप्तप्रौढिर्निबन्धनीयः, पतत्प्रौढिस्तु निबद्धः ।

अथाप्रोक्तवाच्यमप्रोक्तमनभिहितं वाच्यमवश्यवक्तव्यं यत्र । यथा—

" अप्राकृतस्य चरितातिशयैश्च दृष्टैरत्यद्भुतैर्मम हृतस्य तथाप्यनास्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेयमाहात्म्यसारसमुदायमयः पदार्थः । ३३८ ॥ "

अत्र मम हृतस्येत्यत्रापहृतोऽस्मीति विधिर्वाच्यः । तथापीत्यस्य द्वितीय-वाक्यगतत्वेनैवोपपत्तेः ।

अथ त्यक्तप्रसिद्धिकं त्यक्ता प्रसिद्धिर्येन । यथा—

" रणन्ति पक्षिणः क्ष्वेडं[1] चक्रीवन्तो वितन्वते ।
इदं बृंहितमश्वानां ककुद्मानेष हेषते ॥ ३३९ ॥ "

अत्र मञ्जीरादिषु रणितप्रायं पक्षिषु[2] च कूजितप्रभृति स्वनित[3]मणितादि सुरते मेघादिषु गर्जितप्रमुखमित्यादि प्रसिद्ध्यतिक्रान्तत्वात् त्यक्तप्रसिद्धिकम् ।

अथ पुनरुक्तपदन्यासं पुनरुक्तः पदन्यासो यत्र । यथा—

" अधिकरतलतल्पं कल्पितस्वापलीला परिमलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु ! कथय कस्य व्यञ्जयत्यञ्जसैव स्मरनरपतिलीलायौवराज्याभिषेकम् ॥"

अत्र लीलेति पुनरुक्तम् ।

अथातिरिक्तपदमतिरिक्तमधिकं पदं यत्र । यथा—

" इदमनुचितमक्रमश्च पुंसां यदिह जरस्यपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥ ३४१॥ "

---

१ व. क्ष्वेडां । २ व. ०पु कू० । ३ व. स्तनि० ।

अत्र कृतमित्यधिकम्, तदेतत् कृतं प्रत्युत प्रक्रमभङ्गमावहति । यथा च, यदपि च न कुरङ्गलोचनानामिति पाठे निराकाङ्क्षैव प्रतिपत्तिः ।

यथा वा[1]—

" स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयाऽपि दिनश्रिया ॥ ३४२ ॥"

अत्र समासोक्तिवशादेव निदाघदिनश्रियः प्रतिनायिकात्वे प्रतीते द[3]यितयेवेत्यधिकम् ।

" जगाद मधुरां वाचं विशदाक्षरशालिनीम् । " इत्यादौ तु जगादेत्यादि क्रिययैव वाक्शब्दार्थेऽभिहितेऽपि विशेषणदानार्थं वाक्शब्दप्रयोग इत्यस्य नाधिक्यमित्यनुचितं क्रियाविशेषणत्वेनैव वाञ्छितार्थसिद्धेः । यदि वा विशेषणदानार्थं विशेष्यं प्रयोक्तव्यमिति मतं तथापि 'चरणत्रपरित्राणरहिताभ्यामपि द्रुतं पादाभ्यां दूरमध्वानं व्रजन्नपि न खिद्यते ।' इत्युदाहार्यम् ।

अथ पद[4]–वाक्ययोः प्रत्येकं दोषानभिधायोभयदोषानाह—

**अथ द्वयमिदं दुष्टं ग्राम्यं सन्दिग्ध–दुःश्रवे ॥ ६ ॥**

**अप्रतीतमयोग्यार्थमप्रयुक्तमवाचकम् ।**
**जुगुप्साऽमङ्गल–व्रीडाकृदश्लीलं भवेत् त्रिधा ॥ ७ ॥**

**नेयार्थं नि[5]र्हतार्थं च विरुद्धमतिकृत् पुनः ।**
**अविमृष्टविधेयांशं सं[6]क्लिष्टं स्या[7]त् समासगम् ॥ ८ ॥**

तेषु नेयार्थलक्षणमाह—

**यत् कल्पनाप्रणीतार्थं नेयार्थमिति तद् विदुः ।**

---

१ अ. यथा । २ प. व. यदि तयेव । ३ व. ०चितवि० । ४ अ. प्रत्येकं प० । ५ अ. निहि० । ६ अ. क्लिष्टं च । ७ प. च ०गमं ।

कल्पनया स्वप्रक्लृप्तसङ्केतेन प्रणीतो निर्मितोऽर्थो यस्य तन्नेयार्थमिति विदुः जानन्ति । तच्च पदं यथा—

" तवाननमिदं पूर्णं हरिद्राजीवितेश्वरम् ।
किङ्करीकुरुते तन्वि ! किमन्यद् वर्णयामि ते ? ॥ ३४४ ॥ "

अत्र हरिद्रा रजनी तया च निशोपलक्ष्यते । तस्या जीवितेश्वरश्चन्द्रः ।

वाक्यं यथा—

" मुखांशवन्तमास्थाय विमुक्तपशुपङ्क्तिना ।
पङ्क्त्यनेकगनामधृत्तुका जित उलूकजित् ॥ ३४५ ॥ "

अत्र पङ्क्तिरित्यनेन दशसङ्ख्या अनेकगा द्वन्द्वचराश्चक्रास्तेषां नाम यस्य तच्चक्रं रथाङ्गं तद् धरति यः स रथः पङ्क्तयो दश रथा यस्येति दशरथः । तत्तुक् लक्ष्मणः । तेन जित् उलूकजित् कौशिकजिदिन्द्रजिदित्यर्थः । किं कृत्वा ? आस्थाय । कं मुखांशवन्तं हनूमन्तम् । किम्भूतेन ? विमुक्तपशुपङ्क्तिना मुक्तेषुपद्धतिनाऽत्र पशुशब्देन गोशब्दो लक्ष्यते । तेनेषवः । तदिदं स्वसङ्केतेन कल्पितार्थं नेयार्थमुच्यते ।

अथ निहतार्थलक्षणमाह—

## निहतार्थं पुनर्द्व्यर्थमप्रसिद्धार्थगुम्फितम् ॥ ९ ॥

द्व्यर्थमुभयार्थं सद् यदप्रसिद्धेऽर्थे गुम्फितं निबद्धं तन्निहतार्थं पदम् । यथा—

" यावेकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥ ३४६ ॥ "

अत्र शोणितशब्दस्यारुणीकृतरूपोऽर्थो रुधिरलक्षणेनार्थेन व्यवधीयते । एवं वाक्यमपि ज्ञेयम् ॥ ९ ॥ "

---

१ अ. निहि० । २ व. ०वर० । ३ व. अ. ०रिस्म्य चु० ।

अथान्यदोषाणां सामान्येन लक्षणमाह—

शेषाः पुनरमी दोषाः स्वनामार्थैकलक्षणाः ।

शेषा लक्षितदोषद्वयादतिरिक्ता ये पुनरमी ग्राम्यादयो दोषास्ते सर्वेऽपि स्वनाम्नः स्वसंज्ञाया यः कश्चिदर्थः स एवैकं लक्षणं येषाम् । तत्र ग्राम्यं यत् केवले लोके स्थितम् । तच्च पदं यथा—

" राकाविभावरीकान्तसङ्क्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥ ३४७ ॥ "

अत्र कटिरिति ग्राम्यम् ।

वाक्यं यथा—

" ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥ ३४८ ॥ "

अत्र गल्लादयः शब्दा ग्राम्याः ।

अथ सन्दिग्धं यस्मिन्नर्थनिश्चयो नास्ति तत्पदं यथा—

" नीललोहितमूर्तिर्यो दहत्यन्ते जगन्त्यपि ।
स एष हि महादेवस्त्रिषु लोकेषु पूज्यते ॥ ३४९ ॥ "

अत्र वह्निरर्कः शिवो वेति न निश्चीयते ।

वाक्यं यथा—

" सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥ ३५० ॥ "

अत्र किं सुरादिशब्दा देव-सेना-शर-विभूत्यर्थाः ?, किं मदिराद्यर्था इति सन्देहः ।

---

१ अ. ०षा ना० । २ प. षां य० । ३ व. यथा । ४ व. यें दहन्यंते जगत्यपि । ५ व. ०स्त्रिलो० । ६ अ. प. सुर० ।

अथ दुःश्रवं श्रुतिकटु तत्पदं यथा—

" अनङ्गमङ्गलगृहापाङ्ग[1]भङ्गितरङ्गिते( तैः ) ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते [2]तदा ॥ ३५१ ॥ "

अत्र का[3]र्तार्थ्यमिति दुःश्रवम् ।

वाक्यं यथा—

" सोऽध्यैष्ट वेदांस्त्रिदर्शा[4]नयष्ट पितॄनताप्सींत् सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥ ३५२ ॥ "

अत्राध्यैष्टादीनि क्रियापदानि दुःश्रवाणि ।

अथाप्रतीतं यत् केवले शास्त्रे प्रसिद्धम् । तत्पदं यथा—

" सम्यग्ज्ञानमहो[5]ज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत् कर्म बन्धक[6]म् ॥ ३५३ ॥ "

अत्राशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः ।

वाक्यं यथा—

" किं भाषितेन बहुना रूपस्कन्धस्य सन्ति मे न गुणाः ।
गुणनान्तरीयकं च प्रेमेति न तेऽस्त्युपालम्भः ॥ ३५४ ॥ "

अत्र रूपस्कन्ध-नान्तरीयकशब्दौ शास्त्रमात्रप्रसिद्धत्वादप्रतीतौ ।

[7]अथायोग्यार्थमयोग्योऽनुचितोऽर्थो यस्य तत्पदं यथा—

" तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरि[8]ष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥३५५॥"

अत्र पशुपदं कातरतामभिव्यनक्तीत्ययोग्यार्थम् ।

---

१ अ. भङ्ग०, व. सनृत० । २ व. प. कदा । ३ व. कांतार्थ्य० । ४ व. ०नयेषु । ५ व. ०हज्ज्यो० । ६ प. बंधनं । ७ व. यथा । ८ व. ०रेष्य० ।

वाक्यं यथा—

" कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि वनस्थास्तव विभो ! ।
ज(श)रज्ज्योत्स्नागौर ! स्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ ३५६ ॥ "

अत्र कुं पृथ्वीं विन्दति प्राप्नोतीति कुविन्दो राजाऽभिधानकोशोक्तत्वात् तन्तुवायश्च । पटयसीति पटुं पटं च करोषि गुणानां शौर्यादीनां तन्तूनां च ग्रामम् । वनस्थास्तपस्विनः पुलिन्दादयश्च । विगताच्छादनं गततिरस्कारं वस्त्र-रहितं चेति । तन्तुवायाद्यर्थाः स्तूयमानस्य तिरस्कारजनकत्वादनुचिताः ।

अथाप्रयुक्तं शास्त्रप्रतीतमपि कविभिर्यन्न प्रयुज्यते तत् पदं यथा—

" यथाऽयं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥ ३५७ ॥ "

अत्र दैवतशब्दः पुंनपुंसकलिङ्गोऽपि कविभिः पुल्लिङ्गे न प्रयुक्तः ।

वाक्यं यथा—

" स रातु वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेलमूकताऽऽद्यैश्च धत्तु दोषैरसम्मतान् ॥ ३५८ ॥ "

अत्र रातु ददातु, दुश्च्यवनः शक्रः, भावुकानां मङ्गलानाम्, अनेलमूको मूकबधिर इत्येते शब्दाः प्रायः केनापि न प्रयुज्यन्ते ।

अथावाचकं विवक्षितमर्थं यन्न वक्ति तत् पदं यथा—

" अवन्ध्यकोपस्य निहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातु(त)हार्देन न विद्विषाऽऽदरः ॥३५९॥ "

---

१ अ. भवति । २ब. प. ०प्नोति । ३ अ. ०नं च ग० । ४ अ. प. न यु० ।

अत्र जन्तुपदमदातर्यर्थे विवक्षितं तस्य च नाभिधायकम् ।

वाक्यं यथा—

" प्राभ्रभ्राड् विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥ ३६० ॥ "

अत्र प्राभ्र-विष्णुधाम-विषमाश्व-निद्रा-पर्णशब्दाः प्रकृष्टजलद-गगन-सप्ताश्व-सङ्कोच-पत्राणामवाचकाः ।

अथाश्लीलं तच्च जुगुप्साऽमङ्गल-व्रीडाकारित्वात् त्रिधा भवति । तत्र जुगुप्साकृत् पदं यथा—

" लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित् केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाऽथ वा नतिमृते तेनानिशं चुम्बिता ॥ ३६१ ॥ "

अत्र वायुपदमधोवातं स्म(स्मा)रयति ।

वाक्यं यथा—

" तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्तनम् ॥ ३६२ ॥ "

अत्र वान्तोत्सर्ग-प्रवर्तनशब्दा जुगुप्साकारिणः ।

अमङ्गलकृत् पदं यथा—

"मृदुपवनविभिन्नो मत्प्रियाया विनाशाद् घनरुचिरकलापो निःसपत्नोऽस्य जातः।
रतिविलुलितबन्धे केशपाशे सुकेश्याः सति कुसुमसनाथे कं हरेदेष बर्ही ? ॥"

अत्र विनाशपदम् ।

---

१ प. ०धूते । २ व. वातं । ३ व. ०त्नोऽस्य । ४ अ. ०ममना० ।

वाक्यं यथा—

“ प्रवासयति यो कान्तं वसन्ते गृहसंस्थितम् ।
विनाशपथदानेन पिशाची सा न साऽङ्गना ॥ ३६४ ॥ ”

अत्र प्रवासयाति—संस्थित–विनाशपथ–पिशाच्यादिशब्दानाममङ्गलकारित्वम् ।

व्रीडाकृत् पदं यथा—

“ साधनं सुमहद् यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतैंरालितां भुवम् ? ॥ ३६५ ॥ ”

अत्र साधनशब्दः ।

वाक्यं यथा—

“ भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहणनोत्साहवती मोहनमादधौ ॥ ३६६ ॥ ”

अत्रोपसर्पण–प्रहणन–मोहनशब्दा व्रीडाकारिणः ।

विरुद्धमतिकृदादित्रयं पुनः समासस्थितमेव भवति । तत्र विरुद्धमतिकृत् पदं यथा—

“ सहस्राक्षैरङ्गैर्नभसितरि नीलोत्पलमयी–
मिवात्मानं मालामुपनयति पत्यौ दिविषदाम् ।
जिघृक्षौ च क्रीडारभसिनि कुमारे सह गणै–
र्हसन् वो भद्राणि द्रढयतु मृडानीपरिवृढः ॥ ३६७ ॥ ”

अत्र मृडानीपरिवृढ इति पदं मृडान्याः पत्यन्तरे प्रीतिं करोति । सह गणैरित्येतदपि जुगुप्साऽश्लीलम् ।

---

१ प. वा । २ व. पेशा० । ३ व. ०हते० । ४ व. भुवं । ५ प. ०हरण० । ६ भ. ०नै मनसि० । ७ व. ०क्षेव । ८ व. वै । ९ प. प्रतीर्ति ।

वाक्यं यथा—

" अनुत्तमानुभावस्य परैरपिहितौजसः ।
अकार्यसुहृदोऽस्माकमपूर्वास्तव कीर्तयः ॥ ३६८ ॥ "

अत्र अनुत्तम उत्कृष्टोऽपकृष्टोऽपि । अपिहितमनाच्छादितमाच्छादितं च । अकार्यसुहृत् कार्यं विना सुहृदकार्ये वा सुहृद् । अपूर्वा अद्भुताः कीर्तयोऽकीर्तयश्चेति द्वितीयो वाक्यार्थो विरुद्धमतिकृत् ।

अथा[2]विमृष्टविधेयांशम् । अविमृष्टः प्राधान्येन निर्दिष्टो विधेयो[3]ऽंशो यत्र तत्[4] पदं यथा—

" स्रस्तां नितम्बादवलम्बमानां पुनः पुनः केसरपुष्पकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥ ३६९ ॥ "

अत्र मौर्वी द्वितीयामिति युक्तः पाठो द्वितीयत्वमात्रस्यैवोत्प्रेक्षणीयत्वात् ।

यथा वा—

" वपुर्विरूपाक्षमलक्ष्यजन्मतां दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि ! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ? ॥३७०॥"

अत्रालक्षितं जनुरिति वाच्यं जन्मनोऽलक्ष(क्ष्य)त्वस्यैव प्राधान्येन निर्देष्टुमिष्टत्वात् ।

यथा वा—

" आनन्दसिन्धुरतिचापलशालिचित्तसन्दाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्तातान्ति तनोति तव सम्प्रति धिग् धिगस्मान् ॥"

अत्र[12] ' न मुक्ता ' इति निषेधो विधेयः ।

---

१ व. ०ष्टो पिहि० । २ व. यथा अवि० । ३ व. ०यांशो । ४ व. तत्र प० । ५ व. ०चलमा० । ६ ब. ०त्रमा० । ७ अ. ०क्षज०, व. जन्मना । ८ व. प्रियोचने । ९ व. ०मशक्यत्वात् । १० व. ०तातिं । ११ व. ०स्मात् । १२ व. ०त्र मु० ।

यथा—' नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः ' इत्यत्र निषेधो विधेयतां नीतः ।

यत्र तु निषेधो विधेयो न भवति, किन्तु तदनुवादेन किमप्यन्यद् विधीयते तस्मिन्नेवमपि प्रयुज्यते । यथा—

" जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥ ३७२ ।. "

अत्रात्रस्ततााद्यनुवादेनात्मनो गोपनादि विधेयम् ।

वाक्यं यथा—

" किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं ?
मात्रा स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ? ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥ ३७३ ॥ "

अत्रार्यस्येति तातस्येति च वाच्यम्, न त्वनयोः समासेन गुणीभावः कार्यः ।

यथा वा—

" शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारिपानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥ ३७४ ॥ "

अत्र शाद्वलाद्यनुवादेन शय्याऽऽदीनि विधेयानि । ततश्च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो न तु वाक्यार्थस्य ।

एवं हि विध्यनुवादौ कर्तव्यौ । यथा—

---

१ व. ०व प्र० । २ व. ०ति च० । ३ प. ०ननं । ४ व. ०सन्यप्रा० । ५ व. वेषो । ६ अ. व. न वा० ।

"त्वक् तारवी निवसनं मृगचर्म शय्या कुञ्जो गृहं विपुलपत्रपुटा घटाश्च ।
मूलं दलं च कुसुमं च फलं च भोज्यं पुत्रस्य जातमटवीगृहमेधिनस्ते ॥३७५॥"

"संरम्भः करिकीटमेघसकलोद्देशेन सिंहस्य यः
सर्वस्यापि स जातिमात्रविहितो हेवाकलेशः किल ।
इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवान्
योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी ? ॥ ३७६ ॥"

इत्यत्र तु न संरब्धवानिति निषेधो विधेयः, स च समासेन स्थगित एव । योऽसाविति पदद्वयं चास्मिन्ननुवाद्यविधेयार्थतया विवक्षितमनुवाद्यमात्रप्रतीति-कृत् । यच्छब्दप्रत्यासत्त्याऽदःशब्दस्य निगीर्णत्वात् । तथाहि– यत्–तदोरेकतर-निर्देशेनोपक्रमस्तत्र तदितरेणोपसंहारो न्याय्यस्तयोः परस्परापेक्षया नित्यसम्ब-न्धशालित्वात् । यदाहुः–' यत्तदोर्नित्यमभिसम्बन्धः ' इति । स चायमनयोरुप-क्रमो द्विविधः शाब्द आर्थश्चेति । तत्र द्वयोरुपादाने सति शाब्दो यथा—

"यदुवाच न तन्मिथ्या यद् ददौ न जहार तत् ।
सोऽभूद् भग्नव्रतः शत्रूनुद्धृत्य प्रतिरोपयन् ॥ ३७७ ॥"

एकतरोपादाने त्वार्थस्तदितरस्यार्थसामर्थ्येनाक्षिप्यमाणत्वात् । यत्र तु प्रक्रान्तप्रसिद्धानुभूतार्थविषयतया केवलस्यैव तच्छब्दस्योपादानं तत्र यच्छब्दं प्रति सापेक्षत्वाभावात् न शाब्दो नाप्यार्थः । यथा—

"कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ ३७८ ॥"

अत्र प्रक्रमे तच्छब्दः ।

' द्वयं गतं सम्प्रति ' इत्यादि । अत्र तु प्रसिद्धार्थः ।

"उत्कम्पिनी भयपरिस्खलितांशुकान्ता ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा धूमान्धितेन दहनेन न वीक्षिताऽसि ॥"

१ व. ०कलाशेकुल । २ प. ०यप्र० । ३ व. ०तिकृत् । ४ व. ०स्यादेः प्र० । ५ व. प्रक्रीत० । ६ व. यथा उत्क० ।

अत्र पुनेरनुभूतार्थः ।

यत्र पुनरुत्तरवाक्यगतत्वेन यच्छब्दः प्रयुज्यते; तत्रार्थसामर्थ्याधिगतस्य तच्छब्दस्योपादानं नापेक्षते । यथा—

" साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताऽधिके ।
उद्यता जयिनि कामिनीमुखे[3] तेन साहसमनुष्ठितं पुनः ॥ ३८० ॥ "

पूर्ववाक्योपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः । यथाऽत्रैव श्लोके पूर्वार्द्धपादद्वयव्यत्यासे ।

क्वचिदनुपात्तमपि सामर्थ्याद् द्वयमपि गम्यते । यथा—

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यते तु मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥"

अत्र यः कोऽप्युत्पत्स्यते तमेव प्रति ममैष यत्न इत्युभयोरप्यर्थाद् गम्यत्वम् । एवं च स्थिते ' संरम्भः करिकीट—' इति श्लोके तच्छब्दोपादानं विना यच्छब्दस्य साकाङ्क्षत्वम् ।

न चासाविति पदं तच्छब्दार्थमभिधत्ते । यतः—

" असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामाऽऽतुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥३८२॥ "

इत्यत्रापि तच्छब्दार्थप्रतीतिः स्यात्, न चास्ति ।

यद्यदःशब्दोऽपि तच्छब्दार्थप्रतीतिं कुर्यात् तदा—

" यस्य प्रकोपशिखिना परिदीपितोऽभूदुत्फुल्लकिंशुकतरुप्रतिमो मनोभूः ।
योऽसौ जगत्त्रयलय-स्थिति-सर्गहेतुः पायात् स वः शशिकलाकलितावतंसः ॥"

इत्यादिषु तच्छब्दस्य पौनरुक्त्यं भवेत् ।

---

१ ब. ०रभू० । २ ब. जयति । ३ ब. ०मुखीः । ४ ब. ०ने नापेक्षते यथा वि० ।
५ ब. हिमवानि० । ६ ब. ०तिगो ।

अथेदमुच्यते—

" यो[1]ऽविकल्पमिदमर्थमण्डलं[2] पश्यतीश ! नि[3]खिलं भवद्वपुः ।
स्वात्मपक्षपरिपू[4]रिते जगत्यस्य[5] नित्यसुखिनः कुतो भयम् ? ॥३८४॥ "

इत्यादिष्विदंशब्द इवादःशब्दोऽपि तच्छब्दार्थमभिदधात्येवेति साधूक्तम्, किं पुनरत्रै[6]वं व्यवहितस्यैव तस्योपादानं न्याय्यमव्यवहितस्तु प्रसिद्धिमेवार्थं प्रत्यास्मरति ।

" यत् तदूर्जितमि[7]त्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम् ॥ ३८५ ॥ "

इत्यादौ हि यच्छब्द[8]निकटस्थस्य तच्छब्दस्यापि प्रसिद्धिद्योतकत्वं किं पुनरदःशब्दस्य ? ।

अथ स्मृतिभूः 'स्मृतिभूर्विहितो येनासौ रक्षेतात् क्षताद् युष्मान्' इत्यादावव्यवहितोऽपि दृश्यते । सत्यमत्रैव यच्छब्देन भिन्नविभक्तिकस्तर्हि कार्यः ।

अथ क्लि[10]ष्टं यस्मिन्नर्थप्रतीतिर्व्यवहिता तत् पदं यथा—

" अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल ! तव चेष्टितम् ॥ ३८६ ॥ "

अत्रात्रिलोचनसम्भूतं ज्योतिश्चन्द्रस्तदुद्गमभासिभिः कुमुदैः ।

वाक्यं यथा—

" दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्ट[11]के ।
मुखं वल्गुरवं कुर्वंस्तुण्डेनाङ्गानि घट्टयन् ॥ ३८७ ॥ "

---

१ अ. यौ । २ प. मंग० । ३ व. शिखि० । ४ प. ०भूरि०, अ. ०क्षपूरि० । ५ व. ०स्य सु० । ६ व. ०त्रैव । ७ अ. ०मित्यु० । ८ व. ०ब्दस्यापि । ९ अ. प. रक्षितात् क्षता० । १० प. क्लिष्टं । ११ व. ०के द० ।

अत्र कर्कशकण्टके दण्डेऽङ्गानि घट्टयन् तुण्डेन वल्गुरवं कुर्वन् हंसः पद्मिन्या मुखं चुम्बतीति वक्तव्ये यथोक्तपदविन्यासेन क्लिष्टत्वम्। समासगतत्वं चैषां प्रायः पदापेक्षयैव, न वाक्यापेक्षया। पदैकदेशोऽपि पदमेव, तत्रानर्थकं यथा—

" आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित–
प्रोत्सर्प्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥ ३८८ ॥ "

अत्र दृशामिति बहुवचनमनर्थकम्, कुरङ्गेक्षणाया एकस्या एवोपादानात्। न च—

" अलसचलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे ! त्वयाऽद्य विलोक्यते ? ॥ ३८९ ॥ "

इत्यादिवद् व्यापारभेदाद् बहुत्वं व्यापाराणामनुपात्तत्वात् न च व्यापारेऽत्र दृक्शब्दो वर्ततेऽत्रैव कुरुते इत्यात्मनेपदमनर्थकम्, तस्या विरहिणीत्वेन कर्त्रभिप्रायक्रियाफलाभावात्।

सन्दिग्धं यथा—

" कस्मिन् कर्मणि सामर्थ्यमस्य नोत्पतेतराम् ? ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥ ३९० ॥ "

अत्र किं पूर्वं साधुरुत साधुषु चरतीति सन्देहः।

दुःश्रवं यथा—

---

१ व. कुण्डे० । २ अ. ०सोनि० । ३ व. ०वलि० । ४ अ. ०था अलम० । ५ प. कस्य । ६ व. ०र्वं साधुषु ।

" अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेन प्रियायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ ३९१ ॥ "

अत्र त्वादिति दुःश्रवम् ।

अवाचकं यथा—

" चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥ ३९२ ॥ "

अत्र विजेय इत्यत्र कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

नेयार्थं यथा—

" किमुच्यतेऽस्य भूपालमौलिमालाशिरोमणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥ ३९३ ॥ "

अत्र वचःशब्देन गीःशब्दो लक्ष्यते । अत्र न केवलं पूर्वपदं यावदुत्तरपदमपि पर्यायपरिवर्त्तनं न क्षमते । जलध्यादौ तूत्तरपदमेव, वडवानलादौ च पूर्वपदमेव ।

निहतार्थं यथा—

" यश्चाप्सरोविभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्ति ।
वलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥ ३९४ ॥ "

अत्र मत्ताशब्दः क्षीबार्थेन तिरोधीयते । एवमन्यदपि पदैकदेशे बोद्धव्यमिति ।

---

१ प. ०नाङ्गनायाः । २ ब. ०सप्तकृत्वमा० । ३ अ. पर्शु० । ४ ब. कृत्प्र० ।

अथार्थदोषानाह—

अथ धीमद्भिरर्थोऽपि दुष्टोऽयमभिधीयते ॥ १० ॥

अथ पद-वाक्योभयदोषकथनानन्तरमयं वक्ष्यमाणोऽर्थोऽपि धीमद्भिः सहृदयैर्दुष्टो दोषवानभिधीयते ॥ १० ॥

अथ कीदृशोऽर्थो दुष्ट इत्याह—

पुष्टतारहितः कष्टो दुष्क्रम-व्याहतावपि ।
सन्दिग्धोऽपदमुक्तश्च पुनरुक्तोऽनवीकृतः ॥ ११ ॥

विद्यया च प्रसिद्ध्या च विरुद्धोऽश्लील एव च ।
प्रकाशितविरुद्धश्च दुष्टविध्यनुवादभाक् ॥ १२ ॥

सामान्यविशेषाच्च नियमानियमद्वयात् ।
परिवृत्तोऽथ साकाङ्क्ष-ग्राम्य-निर्हेतवोऽपि च ॥ १३ ॥

भिन्नः सहचरेभ्योऽर्थो विमुक्तपुनरादृतः ।

अथैषां सामान्यलक्षणमाह—

एतेषामपि विज्ञेयं निजनामैव लक्षणम् ॥ १४ ॥

एतेषामपि पुष्टतारहितादीनामपि निजनामैवं स्वकीयसंज्ञैव लक्षणं विज्ञेयम् । तत्र पुष्टतारहितः प्रकृतोपयोगित्वमर्थस्य पुष्टता तया रहितो यथा—

" तमालश्यामलं क्षारमत्यच्छमतिफेनिलम् ।
फालेन लङ्घयामास हनूमानेष सागरम् ॥ ३९५ ॥ "

---

१ प. ०र्थो दु० । २ अ. सामा०, प. समासान्य० । ३ प. ०थ मुक्त-पु० । ४ व. एवा० । ५ व. ०जानामेकल० । ६ प. त्रयोदशभिः कुलकं । ७ व. ०मेव । ८ प. ०मपि फे० ।

अत्र तमालश्यामलत्वादयो[1]ऽर्था अनुपादाने[2]ऽपि प्रकृतमर्थं न बाधन्त इत्यपुष्टः[3] ॥ १ ॥

अथ कष्टः कष्टावगम्यो यथा—

" सदा मध्ये यासामियममृतनिः[4]स्यन्दसरसं
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचयाः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु[5] रुचयः ॥ ३९६ ॥ "

अत्र यासां कविरुचीनां कविप्रतिभाविशेषाणां मध्ये बहुमार्गा सुकुमार-विचित्र-मध्यमात्मक-त्रिमार्गा सरस्वती भारत्यमृतनिःस्यन्दसरसं पीयूषद्रव-सुभगं परिमलं चमत्कारं वहति ता घनपरिचया निविडाभ्यासशालिन्यो महा-काव्ये कथमितरकाव्यवत् प्रसन्ना भवन्तु । यासामादित्यप्रभाणां च मध्ये बहु-मार्गा सरस्वती गङ्गा जलनिःस्यन्दसुन्दरं चमत्कारं व्योम्नि वहति ता मेघ-परिचिताः कथं प्रसन्ना भवन्तु इति दुरधिगमार्थद्वयवाचित्वात् कष्टत्वम् ॥२॥

अथ दुष्क्रमो दुष्टो विपरीतक्रमो यत्र[6] यथा—

* " काराविऊण खउरं गामउडो मज्जिओ अ जिमिओ अ ।
नक्खत्तं तिहि-वारे जोइसिअं पुच्छिउं चलिओ ॥ ३९७ ॥ "

अत्र नक्षत्रादिप्रश्नानन्तरं क्षुरकर्मेति क्रमः, स चात्र विपरीतः ॥ ३ ॥

अथ व्याहतः पूर्वापरयोर्विरोधो यत्र यथा—

---

* कारयित्वा क्षौरं ग्रामकूटः स्नातश्च जिमितश्च ।
नक्षत्रं तिथि-वारौ ज्योतिषिकं प्रष्टुं चलितः ॥

---

१ व. ०लाद०, प. ०र्थानु० । २ अ. ०ने प्र० । ३ अ. ०पुष्टाः । ४ अ. ०निःपंद० ।
५ अ. व. ०र्यां कु० । ६ अ. ०त्र का० ।

“ जगति जयिनस्ते ते भावा नवेन्दुकलाऽऽदयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ ३९८ ॥ ”

अत्रेन्दुकलाऽऽदयो यं प्रत्यवस्तुभूताः स एवोत्कर्षार्थं चन्द्रिकात्वमारोपयतीति व्याहतत्वम्[1] ॥ ४ ॥

अथ सन्दिग्धो यः संशयस्य हेतुर्यथा—

“ मनोरथप्रियालोकरसलोलेक्षणे सखि ! ।
आराद् धृतिरियं माता न क्षमा द्रष्टुमीदृशम् ॥ ३९९ ॥ ”

अत्राराच्छब्दस्य दूरान्तिकवाचित्वात् न क्षमा द्रष्टुमीदृशमिति किं न द्रक्ष्यति[3], किं वा तवेदृशं चेष्टितं न सहिष्यत इति सन्दिग्धत्वम् ॥ ५ ॥

अथापदमुक्तोऽपदेऽस्थाने मुक्तो यथा—

“ आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो ! नेदृग् वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ? ॥ ४०० ॥”

अत्र ‘ स्याच्चेदेष न रावणः ’ इत्यत्रैव समाप्तिर्युक्ता, अर्थान्तरानुसन्धानं तु धर्मवीरस्य जनस्य[4] प्रत्युत म्लानिमुन्मीलयति ॥ ६ ॥

अथ पुनरुक्तो यत्स एवार्थः पुनरुच्यते । यथा—

“ अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं सम्भ्रमेण व्रज कृप ! समरं मुञ्च हार्दिक्य ! शङ्कां
ताते चापद्वितीये वहति रणधुरां को भयस्यात्रकाशः ? ॥ ४०१ ॥”

१ व. व्याहृतं । २ व. ०थक्रियार० । ३ प. ०क्ष्यसि । ४ अ. व. ०नकस्य ।

अत्र चतुर्थपदवाक्यार्थः पुनरुक्तः ।

यथा वा—

" पायात् स शीतकिरणाभरणो भवो वः ॥ ४०२ ॥

अ[1]त्र विशेषणाद् विशेष्यप्रतीतौ भवशब्दः ।

यत्र तु विशेषणान्न विशेष्यमात्रस्य प्रतीतिरपि तु[2] तद्विशेषस्य । तत्र न पौन[3]रुक्त्यम् । यथा—

" तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के[4] मम धन्विनोऽन्ये[5] ? ॥४०३॥"

अत्र पिनाकपाणेरित्यस्य पिनाकसान्निध्यख्यापकत्वात् न हरशब्दस्य पौनरुक्त्यम् ॥ ७ ॥

अ[6]थानवीकृतो यः परावृत्त्या नवतां न नीयते । यथा—

" प्राप्ताः श्रियः सकलकामदुघास्ततः किं ?
दत्तं पदं शिरसि विद्विषतां ततः किम् ? ।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ? ॥ ४०४ ॥ "

अत्र ततः किमिति न नवतां नीतम् ॥ ८ ॥

नवीकृतं तु यथा—

" यदि दहत्यनलो[7]ऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ? ।
लवणमम्बु सदैव म[8]होदधेः प्रकृतिरेव सतामविषादिता ॥ ४०५ ॥ "

अथ विद्याविरुद्धो विद्यया शास्त्रेण विरुद्धः । तत्र धर्मशास्त्रेण यथा—

---

१ व. अवि० । २ अ. तु तत्र । ३ व. पुनरौ० । ४ व. ते । ५ प. ०न्यैः । ६ अ. अथ न० । ७ अ. किमत्र तदद्भुतं । ८ अ. महांबुधेः ।

" असावनुपनीतोऽपि वेदानधिजगे गुरोः ।
स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ॥ ४०६ ॥ "

अत्रानुपनीतस्य वेदाध्ययनं विरुद्धम् ।

अर्थशास्त्रेण यथा—

" कामोपभोगसा[1]फल्यफलो राज्ञां महीजयः ।
अहङ्कारेण जीयन्ते द्विषन्तः किं नयश्रियां[2] ? ॥ ४०७ ॥ "

अत्र महीजयस्य धर्मफलस्य कामोपभो[3]गफलत्वेनाननुमतत्वात् । विपक्ष[4]-विजये चाहङ्कारस्य हेतुत्वाभावादर्थशास्त्रविरोधः ।

कामशास्त्रेण यथा—

" विधाय दूरे केयूरमनङ्गाङ्गनमङ्गना ।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥ ४०८ ॥ "

अत्र केयूरप[5]देन नखक्षतं न क्वापि भणितम् ॥ ९ ॥

अथ[6] प्रसिद्धिविरुद्धः प्रसिद्ध्या देश-काल-कविसमयादिजनितया विरुद्धः । तत्र देशविरुद्धो यथा—

" सुराष्ट्रे[7]ष्वस्ति नगरी मथुरा नाम विश्रुता[8] ।
अक्षोट-नालिकेराङ्का यदुपान्ताद्रिभूमयः ॥ ४०९ ॥ "

अत्र सुराष्ट्रेषु मथुरायोस्तत्पर्यन्ताद्रिषु चाक्षोटादीनामभावाद् देशविरुद्धः ।

कालविरुद्धो यथा—

" पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती ।
मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥ ४१० ॥ "

---

१ अ. ०साकल्य० । २ व. ०यः । ३ अ. ०गत्वेनानु० । ४ व. ०क्षज० । ५ व. ०दे नख० । ६ व. अत्र । ७ व. ०ट्रेऽस्ति । ८ व. ०रांता । ९ व. ०याऽस्ततः प० ।

अत्र पद्मिन्या नक्तं कुमुद्वत्या अह्नि मधौ निचुलानामुन्निद्रताऽऽयभावान्निदाघस्य मेघदुर्दिनत्वाभावाच्च कालविरुद्धः ।

कविसमयविरुद्धो यथा —

" इदं ते केनोक्तं कथय कमलातङ्कवदने !
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद् दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥ ४११ ॥ "

अत्र कामस्यास्त्रं चक्रं कविसमये न प्रसिद्धम् ॥ १० ॥

अथाश्लीलो यो व्रीडाऽऽदीनि व्यनक्ति । यथा—

" उद्यतस्य परं हन्तुं स्तब्धस्य विवरैषिणः ।
पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः ॥ ४१२ ॥ "

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ॥ ११ ॥

अथ प्रकाशितविरुद्धः प्रकाशितं व्यञ्जितं विरुद्धं येन । यथा—

" लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद् गदितुमिव गतेत्यम्बुधिं तस्य कीर्तिः ॥ "

अत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसर्तुकामेति विरुद्धं प्रकाश्यते । अनेनैव वाक्यस्य गर्भितत्वमप्यस्ति । इति श्रीनियोगादिति वाच्ये गतेत्यस्मिन्निति शब्दस्यास्थानपदत्वं च ॥ १२ ॥

---

१ व. दु । २ व. ०ङ्ग्या । ३ व. अवि० । ४ व. श्रीयो० ।

अथ दुष्टविध्यनुवादभाग् यो दुष्टौ विध्यनुवादौ भजते । यथा—

" प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिना-
मैपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥ ४१४ ॥ "

अत्र ' शयितः स्तुतिभिः प्रयत्नेन बोध्यसे ' इति शयनानुवादेन बोधो विधेयस्ततश्चानुवादो विधिश्चात्र वैपरीत्येन कृतौ ।

अथ परिवृत्तः सैसामान्यविशेषात् सामान्येन विशेषेण च सहितान्नियमा-नियमद्वयान्नियमादनियमाच्च परिवृत्तो विनियमितस्ततश्च सामान्यपरिवृत्तो विशेषपरिवृत्तो नियमपरिवृत्तोऽनियमपरिवृत्तश्चेति चतुर्धा । तत्राद्यो यथा—

" कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि मकराकर ! माऽवमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम याँच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥ "

अत्रैकेन किं न विहितो भवतः स नामेति सामान्ये वाच्ये कौस्तुभेनेति विशेष उक्तः ।

द्वितीयो यथा—

" श्यामां श्यामलिमानमानयत भोः ! सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राऽङ्किताः ॥ ४१६ ॥ "

अत्र ज्यौत्स्नीमिति विशेषे वाच्ये सामान्यमुक्तम् ।

तृतीयो यथा—

---

१ अ. न...निः० । २ व. ०मपि तु । ३ व. ०तश्चेति, प. समाद्यान्य० । ४ प. द्वयादनि० । ५ अ. यात्रा० । ६ व. ०लिमानय० । ७ व. ०न्त्रं प्र० । ८ व. ०यतत्क्ष० । ९ व. ०द्रुम० । १० व. यत्र ।

" यत्रा[1]नुल्लिखिताक्षमेवं[2] निखिलं निर्माणमेतद् विधे-
उ[3]त्कर्षप्रतियोगिकल्पनमपि न्यक्का[4]रकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पद-
स्तस्याभासमणीकृतां[5]श्मसुमणेरश्मत्वमेवोचितम् ॥ ४१७ ॥ "

अत्र छायामात्रमणीकृताश्मसुमणेस्त[6]स्याश्मतैवोचितेति नियमे वाच्ये तस्याभासेत्यानियम उक्तः ।

चतुर्थो यथा—

" वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्व[7]च्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते ! तेऽम्बुपानाभिलाषः ? ॥ "

अत्र शोण इत्यनियमे वाच्ये शोण एवेति नियम उक्तः ।

अथ साकाङ्क्षो यः पदान्तरसापेक्षः । यथा—

" अ[8]र्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मान-यशसोर्वि[9]स्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यति ? ॥ ४१९ ॥ "

अत्र स्त्रीरत्नमिति कर्मपदमुपेक्षितुमिति क्रियापदसापेक्षम् ।

अथ ग्राम्यो वैदग्ध्यवञ्चितो यथा—

" स्वपिति यावदयं निकटो जनः स्वपिमि तावदहं किमपैति ते[10] ? ।
तदयि ! साम्प्रतमाहर रूपकं(कूर्परं) त्वरितमूरुमुदञ्चय कुञ्चितम् ॥ "

---

१ व. अत्रा० । २ व. ०व. निर्मा० । ३ व. ०र्षयो० । ४ व. ०त्कानको० । ५ व. ताश्मत्वमेवाकुतं । ६ प. ०स्तश्म० । ७ व. ०च्छांत० । ८ व. अर्थत्वाप्र० । ९ अ. ते स्व० । १० व. ०दपि ।

अथ निर्हेतुर्यस्य हेतुर्निमित्तं नास्ति । यथा—

" गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद् यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्
विमोक्ष्ये शस्त्र ! त्वामहमपि यतः स्वस्ति भवते ॥ ४२१ ॥ "

अत्र स्वयं शस्त्रमोचने हेतुर्नोपात्तः, यत इति[3] च तत इत्यर्थे ।

अथ सहचरभिन्नो योऽयसहचारिभ्यः पृथग्भूतः । यथा—

" श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना नयेन चालङ्क्रियते नरेन्द्रता ॥४२२॥"

अत्र श्रुत-बुद्ध्यादिभ्यः प्रकृष्टेभ्यः सहचारिभ्यो व्यसन-मूर्खतयोरपकृष्टत्वाद् भिन्नत्वम् ।

अथ विमुक्तपुनरादृतः । यो विमुच्य पुनराद्रियते । यथा—'लग्नं रागावृताङ्ग्या' इत्यादि । अत्र 'विदितं तेऽस्तु' इत्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः। यत्रैको दोषस्तत्र दोषान्तराण्यपि सन्ति तथापि तेषामप्रकृतत्वात् तत्र प्रकाशनं न कृतम् ॥ ११–१४ ॥

अथ कियतामपि शब्दानामाधिक्यपदोषं निषेद्धुमाह—

**कर्णादिश्रुतयः कर्णावतंसादिपदस्थिताः ।**
**सन्निधानादि जल्पन्त्यो वैचित्रीं तन्वते पराम् ॥ १५ ॥**

कर्णावतंसादिषु पदेषु स्थिताः कर्णादि[श्रुतयः]शब्दाः सन्निधानादि प्रत्यासत्त्यादिकं जल्पन्त्यो ब्रुवाणाः काव्ये परां वैचित्रीं सौन्दर्यं तन्वते विस्तारयन्ति ।

---

१ व. ०रिभया० । २ व. यतः । ३ अ. ०ति त० । ४ प. ०र्व्यसनेन । ५ व. ०योप० । ६ व. ०ण्यपि तेषामकृ० । ७ व. अत्र । ८ व. परां वै० । ९ अ. जल्पंतो ।

अवतंसादीनि हि कर्णाद्याभरणान्येव तत्र कर्णादिप्रयोगो नौचितीं चुम्बत्याधिकपदोषात् । सन्निधानादिकं तु ब्रुवाणः प्रत्युत वैचित्र्यावह एव । यथा—

" अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यन्तमस्याः श्रवणकुण्डलम् ॥ ४२३ ॥ "

यथा वा—

" अपूर्वमधुरामोदप्रमोदितादिश स्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥ ४२४ ॥ "

अनयोः कर्ण–श्रवण–शिरःशब्दाः सन्निधानप्रतीत्यर्थाः ।

यथा च—

" विदीर्णाभिमुखारातिकराले सङ्गरान्तरे ।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव ॥ ४२५ ॥ "

अत्र धनुःशब्द औरूढत्वप्रतीतिकृत् ।

यथा वा—

" प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ ४२६ ॥ "

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधकृत् मुक्ताशब्दः ।

यथा च—

" सौन्दर्यसम्पत् तारुण्यं यस्यास्तत् ते च विभ्रमाः ।
षट्पदान् पुष्पमालेव कान् नाकर्षति सा सखे ! ॥ ४२७ ॥ "

अत्र मालाशब्दः पुष्पदामन्येव सङ्केतित इत्युत्कृष्टपुष्पप्रतीत्यर्थं पुष्पशब्दः । तर्हि कथं रत्नमालेत्यादि, तत्रोपचारात् तत्प्रयोगः ।

---

१ अ. इति । २ व. ॰मोदाः प्र॰ । ३ व. वा । ४ अ. ॰ब्द रू॰ । ५ प. ॰हस॰ । ६ अ. प. कांता क॰, व. कां क॰ ।

यथा वा—' त्यज करिकलभ ! त्वं प्रेमबन्धं करिण्याः । '

अत्र करिशब्दस्ताद्रूप्यप्रतीतिकृत् ।

यत्र[1] तु न संनिधानादिप्रतिपत्तिर्यथा—

" ज्याबन्धनिःस्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरम्परेण[3] ।
कारागृहे निर्जितवासवेन[4] दशाननेनोषितमाप्रसादात् ॥ ४२८ ॥ "

तथा—

" पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गारमिवाद्रिराजः ॥ ४२९ ॥ "

इत्यादिः । तत्र केवला एव ज्यादिशब्दाः प्रयुज्यन्ते ॥ १५ ॥

अथानन्तरोक्तस्यार्थस्य सार्वत्रिकप्रसङ्गनिषेधार्थमाह—

**समर्थनमिदं किन्तु स्थितेष्वेवापरेषु नो ।**

किन्तु[5] किं पुनरिदं पूर्वोक्तं समर्थनं स्थितेष्वेव प्राचीनकविनिबद्धेष्वेव, नापरेषु नितम्ब–काञ्ची–उष्ट्र–करभप्रभृतिषु, तेषां प्राक्कविभिरनादृतत्वात् ।

अथोक्तदोषाणां किञ्चिदपवादमाह—

**प्रसिद्धिस्पर्शिनः क्वापि निर्हेतोरप्यदुष्टता ॥ १६ ॥**

हेतुरहितस्याप्यर्थस्य क्वाप्यदुष्टता । कथम्भूतस्य ? प्रसिद्धिस्पर्शिनः प्रसिद्धस्येत्यर्थः । यथा—

" चन्द्रं गता पद्मगुणान्न भुङ्क्ते[6] पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ ४३० ॥ "

---

१ ब. अत्र । २ ब. संधिना० । ३ अ. ०वक्षप० । ४ प. ०नेन । ५ ब. किंतु किं पु० । ६ अ. भुंक्तं ।

अत्र रात्रौ पद्मसङ्कोचो दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न मुङ्क्ते' इति पदं हेतुं नापेक्षते ॥ १६ ॥

## अन्यस्याप्यनुकारे तु

अनुकारे त्वनुकरणे पुनर्न केवलं निर्हेतोरन्यस्याप्यसंस्कारत्वादिदोषस्यादुष्टता दोषत्वाभावः । यथा—

"पश्यतैष गवित्याह सुत्रामाणं यजेति च ।
मृगचक्षुषमद्राक्षीद् इत्यादि च वदत्ययम् ॥ ४३१ ॥"

अत्रासंस्कारप्रयुक्तः । दुःश्रवाणामदोषत्वम् ।

वक्त्राद्यौचित्यतः पुनः ।
दोषोऽपि स्याद् गुणः क्वापि

वक्त्रादीनां वक्तृ–प्रतिपाद्य–व्यङ्ग्य–वाच्य–प्रकरणादीनामौचित्यात् परिस्पन्दविशेषात् पुनरसंस्कारत्वादिर्दोषोऽपि क्वापि काव्ये गुणो भवेत् । तत्रासंस्कारस्य गुणत्वं पदे यथा—

"उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ।
हुं हु मुञ्च म म मेति च मन्दं जल्पितं जयति मानवतीनाम् ॥४३२॥"

अत्र हुं हु म म मेति पदद्वयं सकोपस्त्रीरूपवक्तृविशेषादसंस्कारमपि गुणत्वं भजते ।

निरर्थकस्य यथा—

"योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम् ।
क्षोभमाशु हृदयं नयदूनां रागवृद्धिमकरोन्न यदूनाम् ॥ ४३३ ॥"

अत्र खलुशब्दस्य निरर्थकत्वेऽपि यमकत्वाद् गुणत्वम् ।

भग्नक्रमस्य यथा—

---

१ व. ०प्रकार० । २ प. ०नामनौ० । ३ प. ०र्थस्य ।

" अभिनववधूरोषस्वादुः करीषतनूनपा—
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे—
र्विरहिवनितावक्त्रक्लैब्यं बिभर्ति निशाकरः ॥ ४३४ ॥ "

अत्र ' उपमानं सामान्यैः ' [ हैम ३ । १ । १०८ ] इति समासविशेषस्य प्रक्रान्तस्याज्ञेवेत्यस्मिन्निवशब्दप्रयोगात् क्लैब्यमित्यत्र तद्धितप्रयोगाच्चानिर्वाहेऽपि भणितिविच्छित्त्युत्कर्षाद् गुणत्वम् ।

अक्रमस्य यथा—

" जुगुप्सत स्मैनमदुष्टभावं मैवं भवानक्षतसाधुवृत्तः ।
इतीव वाचो निगृहीतकण्ठैः प्राणैररुध्यन्त महर्षिसूनोः ॥ ४३५ ॥ "

अत्र ' मा स्म जुगुप्सत ' इति वक्तव्ये ' जुगुप्सत स्मैनमदुष्टभावं मा ' इति क्रमलोपस्यापि व्यस्तेऽपीच्छन्ति केचिदिति विशेषलक्षणत्वाद् गुणत्वम् ।

न्यूनस्य यथा—

" मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्षः ॥४३६॥ "

अत्र दहत्वित्यादिभिः क्रियाभिर्न्यूनस्याप्यतिप्रसिद्ध्या तासां प्रतीयमानत्वाद् गुणत्वम् ।

सङ्कीर्णस्य यथा—

" बाले ! नाथ ! विमुञ्च मानिनि ! रुषं रोषान्मया किं कृतम् ?
खेदोऽस्मासु, न मेऽपराध्यति भवान् , सर्वेऽपराधा मयि ।
तत् किं रोदिषि गद्गदेन वचसा ?, कस्याग्रतो रुद्यते ?
नन्वेतन्मम का तवास्मि ! दयिता, नास्मीत्यतो रुद्यते ॥ ४३७॥ "

---

१ ब. ०धूरोष० । २ ब. ०कांताशे० । ३ ब. ०वेत० । ४ ब. ०गानि० । ५ प. ऽति । ६ ब. ०वं मावि० । ७ ब. ०न्यूनस्याप्यविप्र० । ८ भ. ०स्याति० । ९ भ. ०ते अत्र ।

अत्र पुनोरुक्ति-प्रत्युक्तौ वाक्यसङ्करस्यापि गुणत्वम् ।

गर्भितस्य यथा—

" दिग्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत् कथाऽद्भुतमिदं यत्रैव चास्तं गतम् ॥ ४३८ ॥ "

अत्र यथोक्ता मही साध्यते, सिद्धा सा च विप्राय प्रतिपाद्यते इत्यस्य वाक्यस्य वीराद्भुतरसवशात् प्रवृत्तेन वदन्त एव हीत्यादिवाक्यान्तरेण गर्भितस्यापि गुणत्वम् ।

संन्धिकष्टत्वस्य यथा—

" जयन्ति वर्षास्विव भर्ग-दुर्गयोः सुदुर्वचा दुर्वचकप्रयुक्तयः ।
अभेद्ग्वगेद्जे ! खमपोग्रभोग्ररुग्द्रुडभ्रमब्जुण्मुखि ! सङ्घ्यगेधि नः ॥४३९॥"

अत्रोत्तरार्द्धव्याख्या तत्र शम्भुराह—हे अगेड्जे ! अगानां पर्वतानामिट् यः सोऽयमगेट् शैलराजः तस्माज्जाता अगेड्जा पार्वती तस्याः सम्बोधनम् । खं नभो वर्त्तते कीदृशम् ? अभेड्गु न विद्यन्ते भेषश्चन्द्रस्य गावः किरणान्यत्र मेघाच्छादितत्वात् तदभेड्गु । अपकृष्टात्युग्रभस्य तरणेरुग्राश्चण्डा या रुचस्ताभ्यो द्रुह्यन्तीत्येवम्भूतानि चाभ्राणि यत्र तद् तथा । अप्सु रोहतीत्यब्रुद् कमलं तद्वन्मुखं यस्यास्तस्याः सम्बोधनमब्रुण्मुखि ! । अथ गौरी प्राह—यद्येवं तर्हि नोऽस्माकं सङ्घ्यगेधि सहचरो भव । अत्र—

" शुक-स्त्री-बाल-मूर्खाणां मुखसंस्कारसिद्धये ।
प्रहासाय च गोष्ठीषु वाच्या दुर्वचकादयः ॥ ४४० ॥ "

---

१ प. व. ०थोद्गा० । २ व. साधिक० । ३ अ. प. ०यतं व०, व. स्विति, गर्भ०, अ. ०स्वति । ४ व. ०युक्तः । ५ व. ०गुण । ६ व. ०णा य० । ७ व. ०धि च० । ८ अ. सप्र० ।

इत्युक्तद(दि)शा दुर्वचके सन्धिकष्टत्वस्य गुणत्वम् ।

पतत्प्रकर्षस्य यथा—

" प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाऽऽविर्भवत्-
क्रोधप्रेरित भीम-भार्गवभुजस्तम्भापविद्धः क्षणम् ।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥ ४४१॥ "

अत्रान्त्यपादे क्रोधाभावाद् बन्धदार्ढ्यस्य पतत्प्रकर्षत्वमपि गुणः ।

त्यक्तप्रसिद्धिकस्य यथा—

" आशु लङ्घितवतीष्टकराग्रे नीवीमर्द्धमुकुलीकृतदंष्ट्या ।
रक्तवैणिकहताधरतन्त्री मण्डलक्वणितचारु चुकूजे ॥ ४४२ ॥ "

अत्र कूजितस्य पक्षिभ्योऽन्यत्राप्रसिद्धत्वेऽपि कामशास्त्रेऽनुमतत्वाद् गुणत्वम् ।

पुनरुक्तपदन्यासस्यानुकम्पायां यथा—

" हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥ ४४३ ॥ "

लाटानुप्रासे यथा—

" जयति क्षुण्णतिमिरस्तिमिरान्वैकवल्लभः ।
वल्लभीकृतपूर्वाशः पूर्वाशातिलको रविः ॥ ४४४ ॥ "

अर्थान्तरसङ्क्रान्तवाच्ये ध्वनौ यथा—

---

१ प. ०दृष्ट्या । २ अ. भुवंतणे । ३ अ. ०रणैकां० ।

* " ताला जायंति गुणा जाला ते सहियएहिं घिप्पंति ।
रविकिरणाणुग्गहियोइं हुंति कमलाइं कमलाइं ॥ ४४५ ॥ "

विहितानुवादे यथा—

" जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥ ४४६ ॥ "

अतिरिक्तपदस्य यथा—

" यद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत् साधवो न न विदन्ति विदन्ति किन्तु कर्तुं वृथा प्रणयमस्य न पारयन्ति"

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

" वद वद जितः स शत्रुर्न हतो जल्पंश्च तव तवास्मीति ।
चित्रं चित्रमरोदीद् हा हेति परं मृते पुत्रे ॥ ४४८ ॥ "

इत्येवमादौ हर्ष—भयादियुक्ते वक्तरि द्विरुक्तौ पदाधिक्यमपि गुणः ।

ग्राम्यस्य यथा—

÷ " फुल्लुकरं कलमकूरसमं वहन्ति जे सिन्दुवारविडवा मम वल्लहा ते ।
जे गालिदस्स महिसीदहिणो सरिच्छा ते किं च मुद्धवियइल्लपसूणपुंजा ॥"

---

* तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

÷ पुष्पोत्करं कलमकूरसमं वहन्ति ये सिन्दुवारविटपिनो मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृशास्ते किं च मुग्धविचकिलप्रसूनपुञ्जाः ? ॥

---

१ अ. ०हिभए० । २ अ. ०हिआइं । ३ ब. विनिपम्य । ४ ब. ०गः प्रवहि । ५ ब. अरि० । ६ अ. ०मति ब० । ७ ब. कल० । ८ ब. ०तेषु । ९ ब. ०दौ भ० । १० ब. ०कूवस० । ११ ब. ये सिंदूार० ।

अत्र विदूषकोक्तत्वात् कलमकूर-महिषीदधिशब्दानां ग्राम्याणामपि गुणत्वम् ।

सन्दिग्धस्य यथा—

“ पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥ ४५० ॥ ”

अत्र सन्दिग्धत्वमपि व्याजस्तुतिपर्यवसायित्वाद् गुणः ।

दुःश्रवस्य यथा—

“ दीधीङ्-वेवीङ्समः कश्चिद् गुण-वृद्ध्योरभाजनम् ।
क्तिप्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते ॥ ४५१ ॥ ”

यथा च—

“ यदा त्वामहमद्राक्षं पदविद्याविशारद ! ।
उपाध्यायं तदाऽस्मार्षं समस्प्राक्षं च सम्मदम् ॥ ४५२ ॥ ”

इत्यादौ वक्तृ-बोद्धव्ययोर्वैयाकरणत्वाद् गुणत्वम् ।

यथा वा—

“ अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ ४५३ ॥ ”

अत्र तु रौद्ररसाश्रयित्वात् ।

यथा च—

---

१ प. ०गुणत्वम् । २ ब. प. क्तिप्र० । ३ ब. यथा । ४ अ. ०नर० । ५ प. प्रापं । ६ ब. ०प्राघार० । ७ अ. ०वपु द० । ८ प. ०द्धुरं । ९ प. ०त्र रौ० ।

" रक्ताशोक ! कृशोदरी क नु गता त्यक्त्वाऽनुरक्तं जनं
नो दृष्टेऽपि मुधैव धूनयसि किं वाताभिभूतं शिरः ? ।
उत्कण्ठाघटमानषट्पदघटासङ्घट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ? ॥ ४५४ ॥ "

अत्र पुनरुत्तरार्द्धे वक्तुः प्रकुपितत्वात् ।

अप्रतीतस्य यथा—

" सर्वकार्यशरीरेषु मुक्त्वाऽङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्माऽन्यो नास्ति मन्त्रो महीभृताम् ॥४५५॥ "

यथा वा—

" आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोत्सेकाद् विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ? ॥ ४५६ ॥ "

अनयोः शास्त्रमात्रप्रसिद्धस्याप्यर्थस्य तद्विदसंवादे गुणत्वम् ।

अयोग्यार्थस्य यथा—

" चतुरसखीजनवचनैरतिवाहितवासरा विनोदेन ।
निशि चण्डाल इवायं मारयति वियोगिनीश्चन्द्रः ॥ ४५७ ॥ "

अत्र चन्द्रस्यानुचितमपि चण्डालोपमानं निन्दायां गुणः ।

अप्रयुक्त-निहितार्थयोर्यथा—

" येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥ ४५८ ॥ "

---

१ प. ०ष्टेति । २ व. ०घन० । ३ व. किम० । ४ अ. न मनसां । ५ प. ०स्मात् । ६ व. ०प्यर्थत० । ७ अ. ०निहता० । ८ प. ०द्धत० । ९ व. ०रोह । १० व. व नामा नधः । ११ व. ०क्षपक्षक० ।

व्याख्या–स त्वां सर्वदा नित्यमुमाधवः शङ्करः पायादन्धकस्य दैत्यविशेषस्य क्षयं विनाशं करोतीति । येन ध्वस्तमनोभवेन क्षपितस्मरेण बलिजितः कृष्णस्य कायः पुरा पूर्वं कुर्वता त्रिपुरदाहमस्त्रीकृतो बाणीकृतः । यश्च दुष्टभोगिहारवलयो यश्च गङ्गां सुरसिन्धुमधारयत् । यस्य शिरः शशिमन्मृगाङ्कयुक्तं हर इति च नाम स्तुत्यं स्तोतव्यममरा आहुः कथयन्ति । माधवोऽपि पायात् । सर्वदः सर्वप्रदस्तथाऽन्धकेषु वृष्णिषु क्षयं निवासं करोतीति । येनाभवेन संसारमुक्तेन ध्वस्तं भग्नमनः शकटं बलिजित् स्वकीयः कायश्च पुरा मुरवधे स्त्रीकृतो नारीत्वं प्रापितः । यश्चोद्धृत्तभुजङ्गहा कालिकाख्यं नागं हतवान् । खेलयो खे शब्दब्रह्मणि लयो लीनता यस्य तथाऽगं पर्वतं गोवर्द्धनाख्यं गां पृथिवीं च कूर्मादिरूपेण यो धृतवान् । यस्य च शशिमच्छिरोहर इति शशिनं मथ्नातीति शशिमत् सैंहिकेयस्तस्य शिरो हरतीत्येवं नाम सुरा आहुः । अत्र माधवपक्षे शशिमत्–क्षयशब्दावप्रयुक्त–निहतार्थौ श्लेषाश्रयेण गुणभूतौ ।

जुगुप्साऽश्लीलस्य यथा—

" पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः ।
भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥ ४५९ ॥ "

अत्र निष्ठ्यूतोद्गीर्ण–वान्तीनां जुगुप्साहेतूनामप्युपचाराश्रयणाद् गुणत्वम् ।

यथा वा—

" उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ? ॥ ४६० ॥ "

अत्र वक्तुः शमैकनिष्ठत्वाद् गुणत्वम् ।

अमङ्गलाश्लीलस्य यथा—

---

१ अ. ०यं क० । २ अ. ०तः का० । ३ ब. शिशिरमृन्म० । ४ प. विनाशं । ५ ब. ०रोति । ६ ब. ०रा ब०, प. पुरा मद० । ७ ब. नख० । ८ ब. ०मस्थिरोह० । ९ ब. ०भुभि० । १० अ. ०हिता० । ११ ब. ०णभूतो ।

" भद्रे ! मारि ! प्रशस्तं वद सदसि मुदा नृत्य कृत्ये ! मुहूर्तं
मृत्यो ! रत्नैश्चतुष्कं विरचय रचयारात्रिकं कालरात्रि !
चामुण्डे ! मुण्डमालामुपनय विनय स्वायतां भैरवीर्ष्या-
मेवं देवे भवानीं वहति परिजनव्याहृतिस्त्रायतां वः ॥ ४६१ ॥ "

अत्र मारी-कृत्याऽऽदीनां पदानाममङ्गलानामप्यखिलमङ्गलाश्रयस्य देवस्य पुरारेः सम्बन्धित्वेनोक्तत्वाद् गुणत्वम् ।

संवीत-गुप्त-लक्षितस्य व्रीडाऽश्लीलस्यापि गुणत्वम् । तत्र संवीतं लोकसंवृत्तम् । गुप्तं तु यस्योभयार्थस्य प्रसिद्धेनार्थेनाप्रसिद्धोऽसभ्योऽर्थस्तिरोधीयते । लक्षितं पुनर्यल्लक्षणयाऽसभ्यार्थं न तु मुख्यया वृत्त्या । तेषु संवीतं यथा—

" तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ ४६२ ॥ "

अत्र तद्वीर्यनिषेकभूमिरित्यस्य संवीतत्वाद् गुणत्वम् ।

यथा वा—

" ब्रह्माण्डकारणं योऽप्सु निदधे वीर्यमात्मनः ।
उपस्थानं करोम्येष तस्मै शेषाहिशायिने ॥ ४६३ ॥ "

तथा—

" स तेऽनुनेयः सुभगोऽभिमानी भगिन्ययं नः प्रथमोऽभिसन्धिः ॥४६४॥"

अत्र पूर्वस्मिन् श्लोकेऽपरस्मिन् वृत्तार्द्धे च ब्रह्माण्डोपस्थान-सुभग-भगिनीशब्दानामेकदेशेनासभ्यार्थस्मृतिहेतुत्वेऽपि संवीतत्वाद् गुणत्वम् । यदाह—

" संवीतस्य हि लोकेन न दोषान्वेषणं कृतम् ।
शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावनम् ? ॥ ४६५ ॥ "

---

१ प. रात्तै० । २ व. ०त्वं तत्र । ३ व. ०तलो० । ४ व. ०द्धो नार्यमाप्र० । ५ व. न मु० । ६ व. ०मार्थे । ७ व. याता० । ८ प. ०तस्य । ९ व. सुते, अ. स तेन ने० । १० व. ०मो न स० ।

गुप्तं यथा—

'गजैरसम्बाधमयाम्नभूवे ।' अत्र 'सम्बाधः सङ्कटे भगेऽप्युक्तः' इति वचनादुभयार्थस्य सम्बाधशब्दस्यासभ्योऽर्थः प्रसिद्धेन सङ्कटार्थेन तिरोहितः ।

लक्षितं यथा—

'सुदुस्त्यजा यद्यपि जन्मभूमिः ।' अत्र जन्मभूमिशब्दस्य प्रतीयमानोऽसभ्योऽर्थोऽलाक्षणिक इत्यसभ्यस्मारकत्वेऽपि न दोषत्वम् । एवं दोहदाभिप्रेतकुमारीप्रभृतिशब्देष्वपि ज्ञेयम् ।

विरुद्धमतितो यथा—

"अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः ।
भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ॥ ४६६ ॥"

अत्र विपक्षदूतोक्तिः प्रथमं सन्धिविषयाऽपि द्व्यर्थत्वात् पर्यन्ते विरुद्धस्य विग्रहस्य मतिं करोतीति वक्तृवैदग्ध्यप्रकाशकत्वात् तस्या गुणत्वम् ।

क्लिष्टस्य गुणत्वं यथा—

"अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः सजायं रामाभिधानो हरिरित्युवाच ॥४६७॥"

अत्र शब्दगुणमात्मनः पदमित्यनेन झगित्याकाशप्रतीतौ गुणत्वम् ।

अथार्थदोषाणां गुणत्वमाह । तत्र दुष्क्रमस्य यथा—

"पश्चात् पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥ ४६८ ॥"

अत्र कारण-कार्ययोः पौर्वापर्यक्रमभ्रंशस्यातिशयोक्तिपर्यवसायित्वाद् गुणत्वम् ।

---

१ अ. ना० य० । २ ब. संबोध० । ३ अ. ०मत० । ४ ब. ०वोमि० । ५ अ. ०मानाः । ६ अ. स पुरु० । ७ अ. ब. ०स य० । ८ अ. ब. प. ०जायां । ९ ब. ०र्यवस्य । १० प. ०र्दीर्ण ।

पुनरुक्तस्य यथा—

" असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ? ॥ ४६९ ॥ "

अत्रासारं संसारमित्यस्यैव प्रकारान्तराऽभिहितः शेषेष्वप्यर्थ इत्यर्थपौनरुक्त्यस्यापि वक्तुः शोकरसाक्षिप्तत्वेन गुणत्वम् । अत्रैवं च ' मरणशरणं बान्धवजनम् ' इति वाक्यं सुन्दरत्वादन्यवाक्यपङ्क्तेरनर्ह इति सहचरभिन्नत्वं ' विधिमपि विपन्नाद्भुतविधिम् ' इति तु युक्तः पाठः ।

अश्लीलस्य यथा—

" अद्यापि तत् कनककुण्डलघृष्टगण्ड—
मास्यं स्मरामि विपरीतरताभियोगे ।
आन्दोलनश्रमजलस्फुटसान्द्रबिन्दु—
मुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥ ४७० ॥ "

अत्राश्लीलस्याप्यर्थस्य कविभिरादृतत्वाद् गुणत्वम् ।

विमुक्तपुनरादृतस्य यथा—

" शीतांशोरमृतच्छटा यदि कराः कस्मान्मनो मे भृशं
संप्लुष्यन्त्यथ कालकूटपटलीसंवाससंदूषिताः ।
किं प्राणान् न हरन्त्युत प्रियतमाः संजल्पमन्त्राक्षरै
रक्ष्यन्ते किमु मोहमेमि हहहा ! नो वेद्मि का मे गतिः ॥ ४७१ ॥ "

अत्र सन्देहालङ्कारस्य त्यक्त्वा त्यक्त्वा पुनरुपात्तस्य रसपोषकत्वाद् गुणत्वम् ।

---

१ अ. वक्तुं । २ अ. ०व म० । ३ व. घृष्टमा० । ४ प. साम्यं । ५ व. अ. ०त्वय । ६ प. ०कुल्य० । ७ अ. रक्ष० । ८ व. मह० । ९ प. ससन्देहालस्य । १० व. ०त्र० ।

न दोषो न गुणः क्वचित् ॥ १७ ॥

क्वापि काव्ये पुनरसंस्कारादीनां न दोषत्वं न गुणत्वम् । तत्र समाप्त-पुनरारब्धस्य यथा—'प्रागप्राप्तनिशुम्भशाम्भव—' इत्यादि । यत्र हि [1]विशेषणमात्रं तच्छब्दालङ्कृतं वाक्यान्तरं वा पुनरुपादीयते तत्र दुष्टत्वम् । यत्र तु यच्छब्देन स्वरूपमात्रकथनाय पुनर्वाक्यान्तरमारभ्यते तत्र न दोषो नापि गुणः कश्चित् ।

न्यूनस्य यथा—

'तिष्ठेत् कोपवशात् प्रभावपिहित-' इत्यादि । अत्र 'पिहित' इति पदाद् 'भवेद्' इति पदाच्चानन्तरं 'नैतद् यते' इत्येतैः पदैर्न्यूनैर्विशेषबुद्धेरकरणाच्च गुणः । 'पूर्वा प्रतिपत्तिमुत्तरा प्रतिपत्तिर्बाधते' इति न दोषः ।

दुःश्रवस्य यथा—

"शीर्णघ्राणांघ्रि-पाणीन् घृणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ ४७२ ॥"

अत्र नीरसत्वादेव दोष-गुणत्वाभावः ॥ १७ ॥

अथ रसदोषानाह—

रसादीनां स्वशब्दोक्तिर्विना सञ्चारिभिः क्वचित् ।
या च क्लेशकृता व्यक्तिरनुभाव-विभावयोः ॥ १८ ॥
विभावादिप्रतीपत्वं भूयो भूयश्च दीपनम् ।
अप्रस्तावे प्रथा-च्छेदौ क्वचिदङ्गातिविस्तृतिः ॥ १९ ॥

---

१ ब. ०त या । २ प. च. ०घोषान् ।

नाङ्गिनोऽप्यनुसन्धानं प्रकृतिव्यत्ययस्तथा ।
अनङ्गोपनिबन्धश्च दोषा इत्यादयो रसे ॥ २० ॥

इत्यादयः स्वशब्दोक्त्यादयो रसे रसाश्रया दोषाः । तेषु रसादीनां स्वशब्दोक्तिः । रसादीनां रस-स्थायि-व्यभिचारिणां स्वशब्देनोक्तिः कथनम् । तत्र रसस्य स्वशब्देन शृङ्गारादिशब्देन वाऽभिधेयत्वम् । यथा—

" शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याऽद्भुतस्तुङ्गया ।
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसात्मकः पशुपतिर्भूयात् सतां भूतये ॥ ४७३ ॥ "

अत्र रसशब्दस्य शृङ्गारादिशब्दानां च प्रयोगः ।

स्थायिनां यथा—

" संप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
टणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥ ४७४ ॥ "

अत्रोत्साहस्य यत्रापि स्वशब्देनाभिधानमस्ति, तत्रापि विभावादिप्रतिपादनमुखेनैव रसादीनां प्रतीतिः । स्वशब्देन तु सा केवलमनूद्यते । यथा—' याते द्वारवतीम् ' इत्यादि ।

अत्र विभावानुभावबलादेवोत्कण्ठा गम्यते । सोत्कण्ठशब्दस्त्वनुवादक एव । उक्तमित्यस्यावकाशदानाय च सोत्कण्ठशब्दप्रयोग इत्यनुवादस्यापि नानर्थक्यम् ।

व्यभिचारिणां यथा—

" सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रे सुधास्यन्दिनि ।

१ प. ०ब्दोक्तिः । २ प. ०रांगि० । ३ व. ०र्वत्र र० । ४ व. सज्ञ० । ५ ज. संहा० ।
६ प. ०मत्रा० ७ व. विभावब० । ८ व. क्ष. ०ब्द इ० ।

सेर्ष्या जह्नुसुताऽवलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ ४७५ ॥ "

अत्र व्रीडादीनां 'व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे सोत्कम्पा भुजगे निमेषरहिता चन्द्रे सुधास्यन्दिनि । मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे' इत्यादिपाठो युक्तः ।

विना सञ्चारिभिः क्वचित् इति वचनात् क्वचिन्न दोषः । यथा—

" औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताऽभिमुख्यं पुनः ।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ ४७६ ॥ "

अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् ।

अत एव 'पश्यत्युत्सुकमागते विचलितम्' इत्यादौ व्रीडाद्यनुभावानां विचलितत्वादीनामिवौत्सुकत्वानुभावस्य सहसा प्रसरणादिरूपस्य तथाप्रतीतिकारित्वाभावादुत्सुकमिति कृतम् ।

या च क्लेशकृता व्यक्तिरनुभाव–विभावयोः । तत्रानुभावानां यथा—

" कर्पूरधूलिधवलद्युतिपूरधौतदिग्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नयनावतंसा ॥ "

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्यवसायिनः स्थिता इत्यनुभावानां क्लेशव्यक्तिः ।

---

१ अ. ०ता च० । २ प. ०द्भ्रूः । ३ अ. ब. ०वर० । ४ प. हसिता, ब. सहसा । ५ प. ०वौत्सुक्य० । ६ ब. ०वनौ सा । ७ प. ०स्थायि० । ८ ब. ०रानां य० । ९ प. ब. व्यक्तिः ।

विभावानां यथा—

" परिहरति रतिं मतिं लुनीते[1] स्खलतितरां परिवर्त्तते च भूयः ।
इति बत विषमा दशाऽस्य देहं परिभवति[2] प्रसभं किमत्र कुर्मः ? ॥ "

अत्र रतिपरिहारादीनामनुभावादीनां करुणादावपि सम्भवात् कामिनी-रूपो विभावो यत्न[3]प्रतिपाद्यः ।

विभावादिप्रतीपत्वं प्रातिकूल्यं यथा—

" प्रसादे वर्त्तस्व प्रकटय मुदं[4] सन्त्यज रुषं
प्रिये ! शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे ! प्रत्येतुं प्रभवति गतः कालहरिणः ॥ ४७९ ॥ "

अत्र कालो हरिण इव शीघ्रं गच्छति, न च पुनर्निवर्तत इत्यनित्यताप्रकाश-नरूपः शृङ्गारप्रतिकूलस्य शान्तस्य विभाव इति विभावप्रतीपत्वं तत्प्रकाशितो निर्वेदश्च स्वदत इति व्यभिचारिप्रतीपत्वं च । एवं शृङ्गार-बीभत्सयोर्वीर-भया-नकयोः शान्त-रौद्रयोरप्युदाहार्यम् ।

भूयो भूयश्च दीपनम् । यथा कुमारसम्भवे रतिप्रलापेषु । रसो हि स्वसामग्रीलब्धपरिपोषः पुनः पुनः परामृश्यमानः परिम्लानकुसुमकल्पः कल्पत इति ।

अप्रस्तावे प्रथा-च्छेदौ । तत्राकाण्डे प्रथा प्रथनम् । यथा वेणी[5]संहारे द्वितीयेऽङ्के वीरलक्षक्षयकारिणि समरसंरम्भे प्रवृत्ते वीरोद्धतस्यापि दुर्योधनस्य भानुमत्यां[6] सह शृङ्गार[7]वर्णने ।

---

१ अ. लुनाति । २ व. ०रिहरति० । ३ प. यत्र । ४ व. मुदं त्य० । ५ अ. वीणासं० । ६ व. ०त्याह । ७ व. ०वर्णान् ।

अकाण्डे च्छेदो यथा वीरचरिते द्वितीयेऽङ्के राघव-भार्गवयोर्धाराधिरूढे वीररसे कङ्कणमोचनाय गच्छामीति राघवस्योक्तौ ।

क्वचिदङ्गातिविस्तृतिः । क्वाप्यङ्गस्याप्रधानस्यातिविस्तरेण वर्णनम् । यथा हयग्रीववधे हयग्रीवस्य । यथा वा शिशुपालवधे शिशुपालं हन्तुं सर्वाभिसारेणाभ्युद्यतस्य हरेर्वीररसानुबन्धेऽपि तदनङ्गभूतानामपि ऋतुपवनविहार-पुष्पावचयादीनां तदित्थमप्रस्तुतवस्तुविस्तृतिः प्रस्तुततिरस्कारिण्यपि महाकविलक्ष्येषु भूयसा दृश्यते इति तत्त्वं त एव जानन्ति ।

नाङ्गिनोऽप्यनुसन्धानम् । अङ्गिनोऽपि प्रधानस्यापि नानुसन्धानं न स्मरणम् । यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः ।

प्रकृतिव्यत्ययस्तथा । प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च । वीर-रौद्र-शृङ्गार-शान्तरसप्रधाना धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्ता उत्तमाधम-मध्यमाश्च । तत्र रति-हास-शोकाद्भुता अदिव्योत्तमप्रकृतिवद् दिव्येष्वपि वर्णनीयाः; किन्तु रतिः सम्भोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया । तद्वर्णनं हि पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम् । क्रोधोऽपि भ्रुकुट्यादिविकारवर्जितः सद्यःफलदो निबन्धनीयः । यथा—

> " क्रोधं प्रभो ! संहर संहरेति यावद् गिरः खे मरुतां चरन्ति ।
> तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ४८० ॥ "

स्वः-पातालगमन-समुद्रोल्लङ्घनादावुत्साहश्च दिव्येष्वेव । अदिव्येषु तु यावदवदानं प्रसिद्धमुचितं वा तावदेवोपनिबन्धव्यम् । अधिकं तु निबध्यमानमसत्यं प्रतिभासेत । नायकवद् वर्तितव्यम्, न प्रतिनायकवद् इत्युपदेशेन च पर्यवस्येत् । दिव्यादिव्येषु तूभयथापि । एवमुक्तौचित्यानां दिव्यादीनां धीरोदात्तादीनां च प्रकृतीनामन्यथा वर्णनं व्यत्ययः । तत्र भवन्भगवन्नित्युत्तमेन नाधमेन, मुनिप्रभृतौ न राजादौ, भट्टारकेति न राजादौ, परमेश्वरेति न मुनिप्र-

१ व. ०प्र.धान्यस्या० । २ व. ०वस्य । ३ व. ०पि ह० । ४ प. ०क्ष्ये भू० । ५ व. ०नं स्म० । ६ व. अथ । ७ व. ०यो दिव्यादि० । ८ अ. ०न प० । ९ व. ०नां च । १० व. ०ति प्र.० ।

मृतौ प्रकृतिव्यत्ययापत्तेर्वाच्यमेवं देश-काल-वयो-जात्यादीनामुचितमेव वेष-व्यवहारादिकमुपनिबन्धनीयम् ।

अनङ्गोपनिबन्धश्चानङ्गस्य रसानुपकारकस्योपनिबन्धो वर्णनम् । यथा कर्पूरमञ्जर्यां नायिकया स्वात्मा च वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य तस्य राज्ञा प्रशंसनमित्यादयः । इत्यादिशब्दान्नायिकापादप्रहारादिना नायककोपादिवर्णनं ग्राह्यमनुचितत्वेन तस्य रसभङ्गकारित्वात् । यदुक्तं ध्वनिकृता—

" अनौचित्याद् ऋते नान्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥४८१॥ " इति ॥१८-२०॥

अथामीषां क्वचिददोषत्वमाह—

**विरुद्धस्यापि सञ्चारिप्रमुखस्य क्वचिद् गुणः ।**
**बाध्यत्वेनाभिधानं यत् तदत्यन्तमनोहरम् ॥ २१ ॥**

क्वचित् पुनर्विरुद्धस्यापि व्यभिचारिप्रभृतेर्यदन्यबाध्यत्वेनाभिधानं तन्न केवलं न दोषः, प्रत्युतात्यन्तमनोहरं प्रकृतरसपरिपोषकारित्वात् । यथा—

' क्वाकार्यं शशलक्ष्मणः क्व च कुलम् ' इत्यादौ ।

अत्र वितर्कौत्सुक्य-मति-स्मरण-शङ्का-दैन्य-धृति-चिन्तानामुत्तरोत्तरबाध्यत्वेनोपात्तानामपि पर्यन्ते चिन्तायामेव विश्रान्तिरिति तद्बाध्यत्वेन तेषां प्रकृतरसपरिपोषकत्वम् ।

" पाण्डुक्षामं वक्त्रं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥ ४८२ ॥ "

इत्यादौ तु पाण्डुताऽऽदीनां साधारणत्वेन प्रतिकूलत्वमिति द्वयोरपि सखिपरिहासाङ्गत्वमिति वा न विरुद्धत्वम् ।

---

१ व. नायिकयाः स्वात्मना । २ व. ०र्णितस्य रा० । ३ अ. व. ०चित् पुनः । ४ प. ०न्तंयम० । ५ व. क्षत्रि० । ६ प. ०नां तु । ७ व. ०त्वं प्र० । ८ व. ०ति स० ।

अत्र क्षेत्रियो[1] राजयक्ष्मा उपपतिश्च ।

" सत्यं मनोरमा रामाः[2] सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गना[3]पाङ्गभङ्गलोलं हि जीवितम् ॥ ४८३ ॥ "

अत्राद्यमर्द्धं[4] बाध्यत्वेनैवोक्तं द्वितीयं तु प्रसिद्धास्थैरत्वापाङ्गभङ्गोपमाने-[5]
नापि जीवितस्यास्थिरत्वं प्रतिपादयद् बाधकत्वेनोपात्तं शान्तमेव पुष्णाति;
न पुनः शृङ्गारस्यात्र प्रतीतिस्तदङ्गा[6]नामप्रतिपत्तेः । ध्वनिकारस्तु—

" विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा ।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥ ४८४ ॥ "

इति विरोधपरिहारमाह । तदयुक्तम्, शान्त–शृङ्गारयोर्नैरन्तर्यस्याभावात् ।
काव्यशोभा तु रसान्तराद् अनुप्रासमात्राद् वा स्यादेवेति ॥ २१ ॥

**भिन्नाश्रयत्वं कर्तव्यमाश्रयैक्ये विरुद्धयोः ।**
**नैरन्तर्ये तु रसयोरन्तः कार्यं रसान्तरम् ॥ २२ ॥**

आश्रयैक्येऽभिन्नाश्रयत्वे सति विरुद्धयो रसयोर्भिन्नाश्रयत्वं कर्तव्यम् ।
यथाहि–वीर–भयानकयोरेकाश्रयत्वे विरोध इति प्रतिपक्षगतत्वेन भयानको-
निवेशयितव्यः । यथाऽर्जुनचरिते[7]—

" समुत्थिते भयावहे धनुर्ध्वनौ किरीटिनः ।
महाननुपप्लवोऽभवत् पुरे पुरन्दरद्विषाम् ॥ ४८५ ॥ "

एकस्मिन्नेवाश्रये विरुद्धयो रसयोर्निरन्तरत्वे[8] पुनरन्तर्मध्ये रसान्तरं
कार्यम् । यथा नागानन्दे शान्तरसैकमयस्य जीमूतवाहनस्य 'अहो ! गीत-
महो ! वादितम्' इत्यद्भुतमन्तरे निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः ।
न केवलं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधानेन विरोधो निवर्त्तते ।
यथा—

---

१ ब. क्षमीयो । २ अ. ब. कामा । ३ अ. कोकाङ्ग० । ४ ब. ०द्धिरं० । ५ अ. ब.
०मेन जी० । ६ प. ०दङ्गनाना० । ७ प. ०रित्रे । ८ ब. ०रं का० ।

भूरेष(णु)दिग्धान् नवपारिजातमौल्यारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरम्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः ॥ ४८६ ॥ "

सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥ ४८७ ॥

विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानाँल्ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ॥ ४८८ ॥ "

अत्र बीभत्स-शृङ्गारयोरन्तरे वीरा इत्यनेनाविष्कृतस्य वीररसस्य निवेशान्न विरोधः । कर्तृकारकस्य च स्वातन्त्र्येण सकलवाक्यव्यापकत्वमिति प्रान्ते स्थितमपि वीरा इत्येतत् पदमादौ मध्ये च द्रष्टव्यम् । स्वदेहानित्यनेनैकत्वाभिमानादाश्रयैक्यम् ॥ २२ ॥

विरोधपरिहारान्तरमाह—

**विरुद्धोऽपि स्मृतिं प्राप्तो वक्तुं साम्येन वा मतः ।**
**अङ्गिन्यङ्गत्वमायातौ न विरुद्धौ रसौ मिथः ॥ २३ ॥**

प्रकृतरसविरुद्धोऽपि रसः स्मृतिमारोहन्न विरुद्धो यथा—

" अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरु-जघनस्पर्शी नीवीविस्रंसनः करः ॥ ४८९ ॥ "

इदं भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूनामनुशोचनम् । अत्र करस्य पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं पुष्णाति । प्रकृतिरम्या हि पदार्थाः शोच्यां दशां गताः स्मर्यमाणपूर्वस्वरूपाः कामं शोकावेगमुन्मीलयन्ति ।

तथा साम्येन वक्तुमिष्टोऽपि न विरुद्धः । यथा—

" दन्तक्षतानि करजैश्च विपाटितानि प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥४९०॥"

---

१ ब. भूतेषु दि० । २ प. दग्धान् । ३ अ. मलो(०) । ४ अ. सुशो० । ५ अ. ०मपवी० । ६ प. ०र्यस्त० । ७ ब. वीररस । ८ प. निदे० । ९ प. ०इयम । १० ब. ०कृता० ।

अत्र यथा कस्यचिन्मनोरथशतप्रार्थितप्रेयसीसम्भोगावसरे पुलको जायते, तथा तथापि परार्थसम्पादनाय स्वशरीरदानावसर इति साम्यविवक्षा ।

तथा कस्मिन्नप्यङ्गिन्यैङ्गभावं प्राप्तौ रसौ मिथः परस्परं न विरुद्धौ । यथा—

" क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैर(रि)व पतद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ ४९१ ॥ "

अत्र राजविषयाया रतेः करुण इव शृङ्गारोऽप्यङ्गमिति न विरोधः ।

पराङ्गत्वेऽपि विरोधिनोः कथं न विरुद्धत्वमिति चेत्, उच्यते—विधौ विरुद्धसमावेशस्य दुष्टत्वं नानुवादे । यथा—

" एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ४९२ ॥ "

न ह्यत्र तदैव एहि, तदैव गच्छेति विधिः, किं पुनरेहीति क्रीडन्ति, गच्छेति क्रीडन्तीत्यागमन-गमनानुवादेन क्रीडैव विधेयेति क्रीडाऽङ्गयोस्तयोर्न विरोधः ।

एवं रसेष्वपि द्रष्टव्यम् । यथा वा—

" क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ ४९३ ॥ "

अत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम्, तस्यापि शृङ्गारः, तथापि न

---

१ प. ०थप्रा० । २ प. ०प्यङ्ग० । ३ प. ०रं वि० । ४ प. द्रष्ट० । ५ प. ०धवा र० । ६ प. ०ङ्गमपि । ७ प. ०दे क्री० । ८ प. तस्यापि ।

करुणे विश्रान्तिरित्यस्य शम्भुप्रभावातिशयं प्रत्यङ्गतैव । यदि वा प्राग् यथा कामुकस्तास्ताश्चाचरति स्म तथेदानीं शराग्निरिति स्मर्यमाणेन शृङ्गारेण परिपोषितः करुणोऽङ्गतामाश्रयन् सुतरामीश्वरप्रभावातिशयमुपचिनोति । यदुक्तम्—

" गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे[1] हि तथा भूयसि वर्तते ॥ ॥ ४९४ ॥ "

इति[2] न कश्चिद् विरोध इति ॥ २३ ॥

इत्युक्तदोषाहिविषोर्मिविक्लवां सरस्वतीं स्वस्थतनूं[3] तनोति यः ।
स एव धत्ते कविमण्डले ध्रुवं जगच्चमत्कारकरीं नरेन्द्रताम्[4] ॥२४॥

इत्यलङ्कारमहोदधौ दोषव्यावर्णनो नाम पञ्चमस्तरङ्गः ॥ ५ ॥



---

१ प. ०कारे । २ प. ०ति कश्चिन । ३ प. स्वच्छ० । ४ प. ०रेन्द्रः ।

# अथ षष्ठस्तरङ्गः ।

अथ गुणालङ्कारविवेकमाह—

शौर्यादय इवात्मानं रसमेव श्रयन्ति ये ।
गुणास्ते सहजाः काव्ये नित्यवैचित्र्यकारिणः ॥ १ ॥

यथा शौर्य-स्थैर्य-सत्त्वादयो गुणा आत्मानमेव श्रयन्ति, नाकारं तथा माधुर्यादयोऽपि रसमेव श्रयन्ति रसस्यैव धर्मा न वर्णसन्निवेशस्य ते गुणा इत्यलङ्कारेभ्यो भेदः। क्वचित् पुनर्यथा शौर्योचितस्याकारमहत्त्वादेर्दर्शनात् क्वचिदशूरेऽपि शूर इति । क्वचित् तु मूर्तिलाघवदर्शनात् शूरेऽप्यशूर इत्यतत्त्वदर्शिनां व्यवहारस्तद्वन्मधुर-रसोचितसुकुमारवर्णश्रवणात् क्वाप्यमाधुर्येऽपि माधुर्यमिति, क्वचित् तु माधुर्येऽप्यसुकुमारवर्णश्रवणादमाधुर्यमिति या व्यवहृतिः सा रसपर्यन्तविश्रान्तिज्ञानशून्यानामेव । अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते, न तु वर्णमात्रैस्तच्च पुरो वक्ष्यते । कीदृशाः सहजा अनाहार्यस्वरूपाः । अत एव काव्ये नित्यं सदाऽवस्थितं वैचित्र्यमुत्कर्षं कुर्वन्ति । तान् विना हि सालङ्कारस्यापि काव्यस्य काव्यत्वहानिर्यदाह—

"यदि भवति वचश्च्युतं गुणेभ्यो वपुरपि यौवनवन्ध्यमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥ ४९५ ॥"

श्रयन्तोऽपि रसं सन्तं जातु तेभ्यो विपर्ययम् ।
ये तु बिभ्रत्यलङ्कारास्तेऽनुप्रासोपमादयः ॥ २ ॥

ये पुनस्तेभ्यो गुणेभ्यो विपर्ययं विपरीततां बिभ्रति, तेऽनुप्रासोपमादयोऽलङ्काराः। गुणा हि शौर्यादिवत् सहजा नित्यवैचित्र्यकारिणश्च । अलङ्कारास्तु हारादिवदाहार्याः । अत एव नित्यं वैचित्र्यं न कुर्वते। कदाचित् तेषामभावेऽपि गुणैकशोभिनः काव्यस्य दर्शनादिति गुणेभ्योऽलङ्काराणां वैपरीत्यमयमेव च भेदः ।

---

१ प. अ. ०पुषि यौ० ।

कीदृशाः सन्तो गुणेभ्यो वैपरीत्यं बिभ्रतीत्याह— सन्तं विद्यमानं रसं जातु कदाचित् श्रयन्तोऽपि । यथा—

" अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ? ।
अलमलमालि ! मृणालैरिति वदति दिवानिशं बाला ॥ ४९६ ॥"

अत्रानुप्रासो रसपर्यवसायी ।

यथा वा—

" मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव बलीयानित इतो
न मां तातस्त्रातुं प्रभवति न चाम्बा न भवती ॥ ४९७ ॥"

अत्र मालोपमा रसैकनिष्ठा ।

जात्विति वचनात् कदाचित् सन्तमपि न श्रयन्ति । यथा—

+ " चित्ते चहुट्टदि न खुट्टदि सा गुणेसुं
सेज्जाइ लुट्टदि विसट्टदि दिग्मुहेसुं ।
वोल्लंमि वट्टदि पयट्टदि कव्वबंधे
झाणे न तुट्टदि चिरं तरुणी तरु(र)ट्टी ॥ ४९८ ॥"

इत्यादौ शब्दमेवानुप्रासः श्रयति, न तु विद्यमानमपि रसम् ।

---

+ चित्ते श्लिष्यति न क्षीणाति सा गुणेषु
शय्यायां लुठति विसर्प(कस)ति दिङ्मुखेषु ।
वचने वर्तते प्रवर्तते काव्यबन्धे
ध्याने न त्रुट्यति चिरं तरुणी प्रगल्भा ॥

---

१ प. ०नर० । २ अ. वस० ।

" मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नां पुरः सारसीम् ।
चक्राङ्केन(ङ्गे)न वियोगिना बिसलता नास्वादिता नोज्झिता
वक्त्रे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥ ४९९ ॥ "

इत्यादौ त्वर्थमेवोपमालङ्कारः । बिसलता जीवस्य सूक्ष्मत्वात् तं निरोद्धुं न क्षमते इति प्रकृताननुगुणोपमा ।

सन्तमिति वचनाच्च यत्र नास्ति रसस्तत्र शब्दार्थवैचित्र्यमात्रपर्यवसायिनोऽलङ्कारास्तच्च प्रथमतरङ्गे दर्शितमेव । एवं च यथा समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादयस्तथैव माधुर्यादयोऽनुप्रासोपमादयश्चेत्यस्तु गुणालङ्कारविवेकः । यत् पुनरुक्तम्—"काव्यशोभायाः कर्त्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः" इति तन्न युक्तम् । यतः किं समस्तैर्गुणैः काव्यव्यवहारः?, किं वा कतिपयैः? न तावत् समस्तैरसमस्तगुणाया गौडीयायाः पाञ्चाल्याश्च रीतेः काव्यात्मकैत्वभावात् । अथ कतिपयैः—

' अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः '
इत्यादावप्योजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तेः ।

किं च—

" स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥ ५०० ॥ "

इत्यादौ तु विशेषोक्ति-व्यतिरेकौ गुणनिरपेक्षावपि काव्यव्यवहारमात्रं प्रवर्तयतः । अत्र तथाविधव्यञ्जकवर्णाभावाद् गुणरहितत्वमिति ॥ २ ॥

अथ गुणालङ्कारविवेकं कृत्वा गुणसङ्ख्यामाह—

**गुणांश्चान्ये जगुः शब्दगतान् दश दशार्थगान् ।**
**माधुर्यौजः-प्रसादास्तु संमतास्त्रय एव नः ॥ ३ ॥**

---

१ प. वक्त्रे केन । २ ब. प. ०त्मत्वा० ।

अन्ये वामनादयः केचिदाचार्या दश शब्दगतानर्थगतांश्च दश गुणान् जगुरूचिरे । नोऽस्माकं माधुर्यौजः-प्रसादास्त्रय एव गुणाः सम्मता अभिमताः ॥ ३ ॥

कुत इत्याह—

यतः पृथक्पदन्यासमूर्ति माधुर्यमत्र यत् ।
क्रोधादावप्यतीव्रत्वरूपं यच्चैतदिष्यते ॥ ४ ॥

बन्धस्याजरठत्वं यत् सौकुमार्यमिति स्मृतम् ।
यच्च वाचामपारुष्यं सौकुमार्यमुदीर्यते ॥ ५ ॥

यः कश्चिदर्थदृष्ट्याऽऽत्मा समाधिरभिधीयते ।
अर्थस्य घटनारूपो यश्च श्लेषः प्रकीर्तितः ॥ ६ ॥

तान्यग्रे वक्तुमिष्टस्य माधुर्यस्य प्रसूतयः ।

यतो यस्मादत्रैतेषु विंशतौ गुणेषु यत् पृथक्पदन्यासमूर्ति असमासाल्पसमास-पदनिवेशशरीरं माधुर्यं वर्तते । यथा—

" अस्त्युत्तरस्यां दिशि देवताऽऽत्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वेगाह्य स्थितः पृथिव्या इव मानदण्डः ॥ ५०१ ॥ "

यच्चैतन्माधुर्यं क्रोधादावपि हेतौ सत्यचण्डत्वस्वरूपमिष्यते । यथा—

" भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥ ५०२ ॥ "

बन्धस्य पदगुम्फस्याजरठत्वमनिष्ठुरत्वं सौकुमार्यमिति यत् स्मृतं यथा—

---

१ अ. पृथक्पृथक्पद । २ प. ०विगा० ।

" मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।
कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥ ५०३ ॥ "

वाचां वाणीनामपारुष्यमकठोरत्वं यत् सौकुमार्यमुदीर्यते कथ्यते । यथा ' मृतं यशःशेषमित्याहुः । एकाकिनं देवताद्वितीयमिति, गच्छेति साधयेति ।

अर्थदृष्ट्याऽऽत्मा यः कश्चिदर्थदर्शनस्वरूपः समाधिरभिधीयते कथ्यते । यथा—

' आश्वपेहि मम सीधुभाजनाद् यावदग्रदशनैर्न दश्यसे ।
चन्द्र ! मद्दशनमण्डलाङ्कितः खं न यास्यसि हि रोहिणीभयात् ॥ ५०४ ॥ "

अर्थस्याभिधेयस्य कौटिल्यानुल्बणत्वोपपत्तियोगमूर्तिर्या घटना सैव रूपं यस्य तादृग्विधो यः श्लेषः प्रकीर्तितः कथितो यथा—

" दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलक[ः] स्वेदोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥ ५०५ ॥ "

अत्र पश्चादागमनादेः क्रमस्य कौटिल्यस्य वैदग्ध्यस्य चानुल्बणत्वेनाग्राम्यत्वेनोपपत्तियोगोऽस्ति ॥ ६ ॥

तानि माधुर्यादीनि सर्वाण्यप्यग्रे पुरतो वक्तुमिष्टस्यास्माभिर्विवक्षितस्य माधुर्यस्य प्रसूतयोऽपत्यानि तत्परतन्त्राण्येवेत्यर्थः ॥

अथौजःपरिस्पन्दमाह—

**बन्धगाढत्वमोजो यदर्थप्रौढिमयं च यत् ॥ ७ ॥**

**श्लेषो यश्चैकवद्भावः पदानां भूयसामपि ।**
**समाधिर्योऽयमारोहावरोहक्रमलक्षणः ॥ ८ ॥**

---

१ अ. ॰त्मकः । २ अ. दृष्टैका॰ । ३ अ. संगते । ४ ब. ॰वर्तित॰ । ५ ब. ॰प्रेमोल्ल॰ ।

या च प्रकटिताबन्धविकटत्वमुदारता ।
बन्धौज्ज्वल्यं च या कान्तिः प्रदीप्तरसता च याः ॥ ९ ॥
पुरोऽभिधास्यमानस्य परिस्पन्दोऽयमौजसः ।

बन्धगाढत्वं गुम्फनिबिडत्वं यदोजो यथा—

"जयति भुजगरज्जुग्रन्थिनिष्पीडितेन्दुस्रवदमृतनिवृत्तप्रेतभावैः कपालैः ।
विरचितनुतिबन्धो मूर्ध्नि सद्यः पुरारेः परिणतबहुकल्पब्रह्मणां ब्रह्मघोषः॥५०६॥"

अर्थस्य प्रौढिरुत्कर्षो यदाह—

" पदार्थे वाक्यवचनं वाक्यार्थे च पदार्थता ।
प्रौढिर्व्यास–समासौ च साभिप्रायत्वमस्य च ॥ ५०७ ॥"

तन्मयं यदोजस्तत्र पदार्थवाक्यवचनं यथा—

" अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥५०८॥"

अत्र चन्द्रपदवाच्येऽर्थे नयनसमुत्थं ज्योतिरत्रेरिति वाक्यमुक्तम् ।

वाक्यार्थे पदार्थता यथा—

दिव्येयं न भवति किन्तु मानुषीति वक्तव्ये निमिषतीत्याह । एवं व्यासाद-योऽप्यभ्यूह्याः । न चैतेषु वैचित्र्यमन्तरेणातिप्रसङ्गः कार्यो वैचित्र्यैकजीवितत्वाद् गुणानाम् ।

बहूनामपि पदानामेकपदवद्भावो यश्च श्लेषो यथा—

" उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनो(तदो)पमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ ५०९ ॥ "

आरोहावरोहपरिपाटीरूपो योऽयं समाधिर्यथा—

" निरानन्दः कौन्दे मधुनि विधुरो बालबकुले
न साले सालम्बो लवमपि लवङ्गे न रमते ।

प्रियङ्गौ नासङ्गं रचयति न चूते विचरति
स्मरँल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥ ५११ ॥"

अन्ये पुनरन्यधर्माणामन्यत्राधिरोपणं समाधे(धि)रित्याहुः । यथा—

"प्रतीच्छत्याशोकीं किशलयपरावृत्तिमधरः
कपोलः पाण्डुत्वादवतरति ताडीपरिणतिम् ।
परिम्लानप्रायामनुवदति दृष्टिः कमलिनी-
मितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥ ५१२ ॥"

अस्मन्मते त्वियमुपचारविचित्रतैव ।

बन्धविकटत्वं यत्र पदानि नृत्यन्तीवेति प्रतीतिस्तद्रूपा या चेयमुदारता प्रकटिता । यथा—

"आरोहत्यवनीरुहः प्रविशति श्वभ्रं नगैः स्पर्द्धते
खं व्यालेढि विचेष्टते क्षितितले कुञ्जोदरे लीयते ।
अन्तर्भ्राम्यति कोटरस्य विरसत्यालम्बते वीरुधः
किं तद् यन्न करोति मारुतवशं यातः कृशानुर्वने ॥ ५१३ ॥"

या च बन्धौज्ज्वल्यलक्षणा कान्तिर्यां विना पौराणी छायेत्युच्यते । यथा—

"ग्रामैरक्रमलूयमानकलमैर्गोष्ठैररण्योदरै-
र्द्रोणीकोणवितन्यमानधृतिभिः सार्थैस्त्वरावाहिभिः ।
दुर्गैरर्गलगोपुराद्भुघटनानिर्विण्णविज्ञानिकै-
र्यद्यात्रासमयं वदन्ति परितः प्रत्यर्थिनां भूमयः ॥ ५१४ ॥"

या च प्रदीप्तरसतारूपा कान्तिर्यथा—

"उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विग(लु)लितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कार्यकान्तिद्विगुणितसुरतप्रीतिना सौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥५१५॥"

१ व. स्विय० । २ अ. ०दरे० । ३ व. ०से व० । व. ०रकालका० ।

एवं रसान्तरेष्वप्युदाहार्यम् । अयं बन्धगाढत्वमोज इत्यादिकः सर्वोऽपि पुरोऽस्माभिरभिधास्यमानस्यौजस एव परिस्पन्दो विस्फूर्जितम् ।

अथ प्रासादान्तर्भावमाह—

ओजोमिश्रश्लथत्वात्मा यः प्रसाद इति स्मृतः ॥ १० ॥

यश्चायमर्थवैमल्यवपुषा विदुषां मतः ।

या झगित्यर्थसंवित्तिरर्थव्यक्तिरुदाहृता ॥ ११ ॥

वस्तुस्वभावस्फुटतारूपा या चेयमुच्यते ।

तेऽस्मत्प्रसादप्रासादकक्षालक्ष्मीविडम्बिनः ॥ १२ ॥

ओजोमिश्रं श्लथत्वमात्मा यस्य स यः कश्चित् प्रसाद इति स्मृतो यथा—

" अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपत्रारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ५१६ ॥ "

यश्चायं प्रसादोऽर्थवैमल्यवपुषाऽर्थस्फुटत्वारूपेण शरीरेण विदुषां कोविदानां मतोऽभिमतो यथा—

" अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन् कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥ "

वाक्यस्य सम्पूर्णत्वात् झगित्यर्थसंवित्तिरूपा याऽर्थव्यक्तिरुदाहृता कथिता । यथा—

" वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वती-परमेश्वरौ ॥ ५१८ ॥ "

---

१ ब. झटित्य० ।

वस्तूनां भावानां स्वभावस्य सूक्ष्मस्वरूपस्य या स्फुटता व्यक्तिस्तद्रूपा तदात्मिका या चेयमर्थव्यक्तिरुच्यते । यथा—

" स्पृष्टेषु शङ्खशकलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितवस्तुबहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥५१९॥ "

ते प्रसादादयो गुणा अस्मत्प्रसादोऽस्माभिर्वक्तुमीष्टो यः प्रसादः स एव प्रासादस्तस्य कक्षालक्ष्मीविडम्बिनः प्रदेशविशेषसम्पदनुकारिणस्तदन्तर्भूता इत्यर्थः ॥ १०–१२ ॥

अथ कियतामपि दोषत्यागेन स्वीकारमाह—

या तु मार्गापरित्यागस्वरूपा समता मता ।
या च सा प्रक्रमाभेदरूपा वैषम्यविग्रहा ॥ १३ ॥

अग्राम्यत्वशरीरा च या काऽपि स्यादुदारता ।
ता भग्नप्रक्रम–ग्राम्यदोषत्यागक्रियात्मिकाः ॥ १४ ॥

मार्गापरित्यागः प्रक्रान्तपदबन्धवर्त्मापरिहारः स्वरूपं यस्यास्तादृशी या च समताऽभीष्टा । यथा—

" यच्चन्द्रकोटिकरकोरकभारभाजि बभ्राम बभ्रुणि जटापटले हरस्य ।
तद् वः पुनातु हिमशैलशिलानिकुञ्जझाङ्कारडम्बरविराजिसुरापगाऽम्भः ॥ "

अत्रारम्भादापरिसमाप्ति पदबन्धस्यैकरूपतानिर्वाहात् समता ।

प्रक्रमाभेद एव रूपं यस्य तदेवंविधं यद् वैषम्यं तद्विग्रहः शरीरं यस्यास्तादृशी या च सा[3] मता । यथा—

" अग्रे स्त्रीनखपाटलं कुरबकं श्यामं द्वयोर्भागयो–
र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।

---

१ अ. ०सक० । २ अ. ०चंद्रकर० । ३ ब. सा सम० । ४ अ. ०ह्व० । ५ अ. ०मपो० ।

ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे ! मध्ये मधुश्रीः स्थिता ॥५२१॥"

अत्र मधुश्रियो मौग्ध्यत्याग-यौवनारम्भकृतानां विशेषणनामारम्भ-निर्वाहः ।

न पुनरेवं यथा—

" च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा
मलयमरुतः सर्पन्तीमे वियुक्तधृतिच्छिदः ।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्रमोदयदायिनीम् ॥ ५२२ ॥ "

अत्र ऋतुसन्धिवर्णने मलयमरुतामुभयसाधारणत्वाभावात् प्रक्रमभेदः ।

अग्राम्यत्वं ग्राम्यत्वाभावः शरीरं यस्यास्तथाविधा या काऽप्युदारता स्यात् । यथा—

" त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमान्तं परमिह युवामेव भजथः ।
अयि ! द्वन्द्वं दिष्ट्या तदेति सुभगे ! संवदति वा-
मनः(तः) शेषं चेत् स्याज्जितमथ तदानीं गुणितया ॥ ५२३ ॥"

तास्तिस्रोऽपि भग्नप्रक्रम-ग्राम्ययोर्दोषयोर्या त्यागक्रिया परिहारविधिस्त-दात्मिकास्तत्स्वरूपास्ततश्च माधुर्यौजः-प्रसादास्त्रय एव गुणाः । ये च कैश्चिच्चतु-र्विंशत्यादयोऽप्युक्तास्तेऽप्येष्वेवान्तर्भवन्तीति ॥ १३-१४ ॥

अथ माधुर्यस्वरूपमाह—

**सर्वप्रह्लादि माधुर्यं चेतसो द्रुतिकारणम् ।**
**मूलायतनमेतस्य शृङ्गारः स्मरजीवितम् ॥ १५ ॥**

सर्वेषामबला-बाल-गोपालादीनामानन्दकारि माधुर्यं माधुर्याख्यो गुणः । कृत

१ ब. ॰षाणामा॰ । २ अ. जठर॰ । ३ व. अपि । ४ ब. तदिति ।

इत्याह–चेतसो मनसो द्रुतिकारणं गलितत्वहेतुरयं च विशेषणद्वारेण हेतुरुक्तः । एतस्य माधुर्यस्य शृङ्गारोऽर्थाद् भोगरूपो मूलायतनं कुलभवनम् । कीदृशः स्मरजीवितं शृङ्गारप्रसक्त्या हि पञ्चेषुर्जीवति । हास्याद्भुतादयस्तु शृङ्गाराङ्गत्वादेवास्यास्पदानीति पृथग् नोक्ताः ॥ १५ ॥

अथास्य विशेषमाह—

**शान्ते सातिशयं विप्रलम्भे च करुणे च तत् ।**

तन्माधुर्यं शान्ते विप्रलम्भे च सातिशयमत्यन्तद्रुतिहेतुत्वात् ।

अथास्य व्यञ्जकानाह—

**तत्र वर्गा निजैरन्त्यैराक्रान्तशिरसः स्मृताः ॥ १६ ॥**

**टवर्गपरिहारश्च ह्रस्वव्यवहितौ रणौ ।**
**असमासः पदन्यासः समासाल्पवानथ ॥ १७ ॥**

तत्र माधुर्ये माधुर्यव्यञ्जका इत्यर्थः । वर्गाः कवर्गादयो निजैरन्त्यैर्ङका-राद्यैराक्रान्तशिरसोऽधिष्ठितमूर्द्धानः स्मृताः कथिताः । यथा—

" अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥५२४॥"

टवर्गस्य परिहारस्त्यागो न पुनरेवं यथा—

" अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि ! माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ ५२५ ॥ "

तथा रेफ–णकारौ ह्रस्वान्तरितौ—

" दारुणरणे रणन्तं करिदारणकारणं कृपाणं ते ।
रमणकृते रणरणकी पश्यति तरुणीजनो दिव्यः ॥ ५२६ ॥ "

---

१ अ. ०ते क० । २ अ. ०र्गा नि० । ३. व. अकुंठो । ४ व. कलं ।

समासरहितः स्वल्पसमासो वा पदन्यासो यथा—

" मनीषिताः सन्ति गृहेऽपि देवतास्तपः क वत्से ! क च तावकं वपुः ! ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥ ५२७ ॥ "

न त्वेवं यथा—

" बाले ! मालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानां
किं त्वं पक्ष्मान्तवान्तैर्मलिनयसि मुधा वक्त्रमश्रुप्रवाहैः ।
एषा प्रोद्वृत्तमत्तद्विपकटकषणक्षुण्णविन्ध्योपलाभा
दावाग्नेर्व्योम्नि लग्ना मलिनयति दिशां मण्डलं धूमरेखा ॥५२८॥"

अत्र दीर्घः समासः स च विप्रलम्भानुचितः[1] ॥ १६-१७ ॥

अथास्मिन् विशेषव्यञ्जिकां रचनामाह—

सहजप्रातिभोन्मीलद्वाच्य-वाचकचारिमा ।
अक्लेशकल्पितस्वल्पताद्विदाह्लादिभूषणा ॥ १८ ॥
भावस्वाभाविकौदार्यतर्जिताहार्यकौशला ।
अमन्दरसनिःस्यन्दसुधोद्गारतरङ्गिता ॥ १९ ॥
कविकर्मैकमर्मज्ञमनस्ताण्डवनाट्यभूः ।
अलक्ष्यावयवा तस्मिन् रचना काचिदीदृशी ॥ २० ॥

सहजं स्वाभाविकं यत् प्रातिभं प्रतिभैव तेनोन्मीलन्नाविर्भवन् वाच्य-वाचकयोरर्थ-शब्दयोश्चारिमा हृदाह्लादीनि सहृदयचमत्कारीणि भूषणान्यलङ्कारा यस्यां सा । तथा भावानां पदार्थानां स्वाभाविकं यदौदार्यं परिस्पन्दविशेषस्तेन तर्जितं न्यक्कृतमाहार्यं कृतकं कौशलं कविवैदग्ध्यं यस्यां सा । तथा अमन्दः स्तोकेतरो यो रसनिःस्यन्दः स एव सुधोद्गारः पीयूषोल्लासस्तेन तरङ्गिता रसामृतकल्लोलमयीत्यर्थः । कविकर्मणः काव्यस्य यदेकमद्वितीयं मर्म रहस्यं तद् ये जा-

---

१ व. ०नुप्रासोचि० ।

न्ति तेषां मनसो यत् ताण्डवमानन्दनृत्यं तस्य नाट्यभूर्नाट्यागारमलक्ष्याव-
यवा गुम्फविशेषवशादविज्ञातपदविभागा काचिदीदृशी रचना वन्धविच्छित्ति-
स्तस्मिन्निति तस्य माधुर्यस्य व्यञ्जिकेत्यर्थः ॥ १८–२० ॥

अथौजो लक्षयति—

**दीप्तत्वेनात्मविस्तारहेतुरोजो निगद्यते ।**
**वीरो नाम रसस्तस्य केलिचङ्क्रमकुट्टिमम् ॥ २१ ॥**

दीप्तत्वेन दीप्तरूपतया योऽयमात्मनश्चित्तस्य विस्तारस्तस्य हेतुरोजो निगद्यते कथ्यते । तस्य वीरो नाम वीराख्यो रसः केलिचङ्क्रमस्य लीला-विहारस्य कुट्टिमं स्फटिकादिबद्धा भूमिस्तत्रेदं विलसतीत्यर्थः ॥ २१ ॥

अस्य स्वरूपान्तरमाह—

**आधिक्यं तस्य पूर्वस्मात् क्रमाद् बीभत्स–रौद्रयोः ।**

तस्यौजसः पूर्वस्माद् वीररसाद् बीभत्स–रौद्रयोः क्रमादाधिक्यम् । वीराद् बीभत्से ततोऽपि रौद्रे तेषामङ्गभूतेऽप्यधिकमोजः कार्यमित्यर्थः ।

अथास्य व्यञ्जकानाह—

**तत्र योगस्तदाद्याभ्यां स्याद् द्वितीय–चतुर्थयोः ॥ २२ ॥**

**यस्य कस्यापि रेफेण मिथश्च सदृशोर्युतिः ।**
**कार्यौ श–षौ टवर्गश्च तथा दीर्घसमासता ॥ २३ ॥**

तत्र तस्मिन्नोजसि द्वितीय–चतुर्थयोर्वर्गाक्षरयोस्तदा द्वा(द्या)भ्यां प्रथम–तृती-याभ्यां योगः शिरसि सम्बन्धस्तथा यस्य कस्यापि वर्णस्याथ उपरि उभयत्र वा रेफेण युतिस्तथा सदृशोरेकरूपयोर्वर्णयोश्च युतिस्तथा शकार–षकारौ कार्यौ टवर्गश्चार्थाण्णकारवर्जः कार्यः । तथा दीर्घः समासश्च व्यञ्जकः कार्य इति ॥२३॥

अथास्य व्यञ्जकं गुम्फमाह—

१ अ. अथ व्य० । २ द. ०कुु० ।

परस्परं परिस्यूतपदद्राढिमबन्धुरः ।
व्युत्पन्नप्रतिभोत्पन्नवाच्यवैचित्र्यचुम्बितः ॥ २४ ॥

उल्लसन्नवलावण्यभङ्गिकल्लोललालितः ।
सूत्रयन् नवतामुच्चैरनवस्यापि वस्तुनः ॥ २५ ॥

वितन्वन् मनसः कामं दीप्तिसंवलितां मुदम् ।
निसर्गकलितौद्धत्यस्तत्र गुम्फः किलोदितः ॥ २६ ॥

त्रिभिर्विशेषकम् ।

परस्परं मिथः परिस्यूतान्यलक्ष्यसन्धिबन्धानि यानि पदानि तेषां द्रढिम्ना निविडत्वेन बन्धुरो रमणीयः । व्युत्पन्ना विदग्धा या प्रतिभा तया यदुत्पन्नं वाच्यवैचित्र्यमभिधेयप्रागल्भ्यं तेन चुम्बितः स्पृष्टः । उल्लसन्ती नवा नूतना या लावण्यभङ्गिः कान्तिविच्छित्तिस्तस्याः कल्लोलास्तरङ्गास्तैर्लालितः खेलितः । अनवस्यापि पूर्वकविस्पृष्टस्यापि वस्तुनः काव्यार्थस्योच्चैरतिशयेन नवतामचुम्बितत्वं सूत्रयन् कुर्वन् । तथा मनसश्चेतसो 'रसिकानामिति गम्यम्' दीप्तिसंवलितामुत्साहकरम्बितां मुदं प्रीतिं वितन्वन् विस्तारयन् । निसर्गेण स्वभावेन कलितौद्धत्यः सहजोद्धतस्तत्र तस्मिन् ओजसि गुम्फः पदबन्धः कलेति पूर्वाचार्यैरुदितो व्यञ्जकत्वेन कथितः । यथा वा—

" यस्या( अद्या )वस्कन्दलीलाचलितबलपरिस्पन्दखर्वीकृतोर्वी-
संरम्भोत्तम्भनाग्रो(यो)न्नमितभर[ नमत् ]कन्धरासन्धिरासीत् ।
शेषो विस्फारफुल्लस्फुटपृथुलफणास्फूत्कृताग्निस्फुलिङ्ग-
स्फूर्जा[र्जित्)सन्दोहसन्देहितविकटशिखामण्डलीरत्नखण्डः ॥ ५२९ ॥"

न पुनरेवं यथा—' देशः सोऽयमरातिशोणितजलैः ' इत्यादि ।
अत्र यथोक्तवर्णाभावोऽनुद्धतो गुम्फः समासदैर्घ्याभावश्च विरुद्धः ॥ २३ ॥

---

१ अ. ०१५० । ६ अ. ये नव० ।

अथ प्रसादं विवृणुते—

शब्दश्रवणमात्रेण दुर्विगाहगभीरिमा ।
रसपर्यन्तविश्रान्तिर्नानाऽऽकूतमनोरमः ॥ २७ ॥
विद्वदाह्लादको यत्र झगित्यर्थः प्रतीयते ।
सर्वसाधारणात्मानं तं प्रसादं गुणं विदुः ॥ २८ ॥

यत्र यस्मिन् सति शब्दश्रवणमात्रेणार्थोऽभिधेयो विमर्शमन्तरेणापि झगित्येव प्रतीयते । किम्भूतोऽर्थः ? दुर्विगाहो दुःखविज्ञेयो गभीरिमाऽगाधत्वं यस्य स तथा । रस एव पर्यन्ते निकषे विश्रान्तिरवस्थानं यस्य स तथा । नानाकूतमनोरमो विविधाभिप्रायसुन्दरः । सर्वत्राप्यपिशब्दो द्रष्टव्यः । अत एव विद्वदाह्लादकः सचेतनचमत्कारी तं सर्वेषां रस–समास–गुम्फानां साधारणात्मानं सामान्यस्वरूपं प्रसादं नाम गुणं विदुः कथयन्ति । यथा—

" परिम्लानं पीनस्तन–जघनसङ्गादुभयत–
स्तनोर्मध्यस्यान्तः परिमलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥ ५३० ॥ "

अथ माधुर्यादीनां मतान्तरेण संज्ञान्तरमाह—

माधुर्यं सुकुमाराख्यं मार्गं केऽप्यवदन् बुधाः ।
विचित्रमोजस्तन्मिश्रीभावजं मध्यमं पुनः ॥ २९ ॥
उपनागरिकां वृत्तिं परुषां कोमलां परे ।
रीतिं केचित् तु वैदर्भीं गौड–पञ्चालजे अपि ॥ ३० ॥

माधुर्यं सुकुमाराभिधमोजो विचित्राभिधं तदुभयमिश्रत्वसम्भवं मध्यमं नाम मार्गं केऽपि बुधाः कुन्तु(त)कादयोऽवदन् उक्तवन्तः । यदाहुः—

१ ब. ०णात्मना । २ अ. ०र्थं त० ।

" सन्ति तत्र त्रयो मार्गाः कविप्रस्थानहेतवः ।
सुकुमारो विचित्रश्च मध्यमश्चोभयात्मकः ॥ ५२१ ॥ "

परे केचिदुपनागरिकां परुषां कोमलां च वृत्तिमवदन् । यदूचुः—

" माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा कोमला परैः ॥ ५३२ ॥ "

केचित् पुनर्वैदर्भी गौड-पञ्चालजे अपीति गौडीयां पाञ्चालीं च रीतिमवदन् । यदूचिरे—

' वैदर्भी गौडीया पाञ्चालीति रीतयस्तिस्रः ' इति ॥ ३० ॥

अथ गुणविशेषनियतवर्णादीनामपवादमाह—

वक्तृ-वाच्य-प्रबन्धानामौचित्येन क्वचित् पुनः ।
वर्ण-सङ्घटनाऽऽदीनां वैपरीत्यं न दोषकृत् ॥ ३१ ॥

क्वचित् पुनर्वक्तृवाच्ययोः प्रबन्धस्य चौचित्येन वर्णानामक्षराणां सङ्घटनानां गुम्फानामादिशब्दाद् वृत्तीनां च वैपरीत्यमन्यथात्वं न दोषकृत् न दुष्टमित्यर्थः ।

तत्र वक्त्रौचित्येन यथा—

" मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटाऽन्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ? ॥५३३॥ "

अत्र यद्यपि न वाच्यं कोपादिव्यञ्जकं काव्यं चाभिनेयं तथापि भीमसेनस्य वक्तुरौचित्यादुद्धता वर्णादयः ।

वाच्यौचित्येन यथा—

---

१ अ. ०नां वैष० । २ अ. ०कादि० । ३ व. वाच्यं ।

" प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत् काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥ ५३४ ॥ "

अत्र वक्तृप्रबन्धानपेक्षं वाच्यमेवोद्धतं तदनुरूपा वर्णादयः ।

प्रबन्धौचित्येन यथा—आख्यायिकायां शृङ्गारेऽपि न मसृणा वर्णादयः कथायां नात्यन्तमुद्धताः । नाटकादौ रौद्रेऽपि न दीर्घसमासादयः । एवमन्यद-प्यौचित्यमनुसर्तव्यमिति ॥ २१ ॥

गिरो गुणैरित्यधिकां विचित्रतां दधत्यलङ्कारविवर्जिता अपि ।
हरन्ति हारप्रमुखैर्विभूषणैर्विनाऽपि सौभाग्यजुषो [2]हि योषितः ॥

इत्यलङ्कारमहोदधौ गुणनिर्णयो नाम षष्ठस्तरङ्गः ॥ ६ ॥

—卐—

१ ब. ०पेक्ष्य । २ प. ०षोपि ।

# अथ सप्तमस्तरङ्गः ।

अथ शब्दालङ्कारानभिधित्सुस्तत्प्रस्तावनामाह—

निर्दोषोऽपि गुणाढ्योऽपि शब्दो नालङ्कृतिं विना ।
वैचित्र्यमश्नुते तादृक् तच्छब्दालङ्कृतीर्ब्रुवे ॥ १ ॥

निर्दोषोऽप्यसंस्कारत्वादिदोषरहितोऽपि गुणाढ्योऽपि माधुर्यादिगुणस्फीतोऽपि शब्दो वाचकोऽलङ्कृतिं विनाऽलङ्कारमन्तरेण न नैव तादृक् चेतनचमत्कारि वैचित्र्यं विचित्रतामश्नुते प्राप्नोति । यदुक्तम्—

" युवतेरिव रूपमङ्गकाव्यं स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः ॥ ५३५ ॥ "

तत् तस्मात् कारणात् शब्दालङ्कृतीः शब्दनिष्ठालङ्कारान् ब्रुवे वच्मीति ॥१॥

अथादौ[1] तावत् सकलकविकुलाराध्यमनुप्रासं लक्षयति—

अनुप्रासोऽक्षरावृत्तिर्नातिदूरान्तरस्थिता ।
स चतुर्धा श्रुति–च्छेकै–वृत्ति[2]–र्लाटानुवृत्तिभिः ॥ २ ॥

अक्षराणां वर्णानां सस्वरत्वास्वरत्वनियमरहितानामावृत्तिस्तेषामेव पुनर्न्यसनमनुप्रासाख्योऽलङ्कारः । सा[3] च कीदृशी ? न नैवातिशयेन दूरान्तरस्थिता प्रकृष्टव्यवधानवर्तिनी[4], किन्तु वर्णान्तरेण स्वल्पव्यवधानवर्तिनी । यतो निरन्तरा दूरान्तरा च न तादृक् सौन्दर्यावहा । स चानुप्रासः श्रुतेः श्रवणस्य च्छेकानां विदग्धानां वृत्तीनामुपनागरिकाऽऽदीनां लाटानां देशविशेषोद्भवनराणां चानुवृत्तिभिरनुसृतिभिश्चतुर्धा चतुर्विधो भवतीति ॥ २ ॥

अथ श्रुत्यनुप्रासलक्षणमाह—

---

१ अ. ॰विकार॰ । २ प. ॰दौ स॰ । ३ प. स । ४ प. ॰शो । ५ अ. ॰नी य॰ ।

तुल्यस्थानभवैर्वर्णैरावृत्तैः श्रुतिहारिभिः ।
विश्रुतः श्रुत्यनुप्रासः सर्वस्वं कविकर्मणः ॥ ३ ॥

तुल्यमेकमेव स्थानमुत्पत्तिक्षेत्रमुरः-कण्ठादि । यदुक्तम्—

" अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ ५३६ ॥ "

तत्त्वैस्तदुत्पन्नैः श्रुतिहारिभिः श्रवणानन्दिभिर्वर्णैरावृत्तैः पुनरुच्चारितैः श्रुत्यनुप्रासो नामानुप्रासो विश्रुतः प्रथितः । स च कीदृश इत्याह– कविकर्मणः काव्यस्य सर्वस्वं रहस्यम् । यदुक्तम्—

" निवेशयति वाग्देवी प्रतिभानवतः कवेः ।
पुण्यैरमुमनुप्रासं सुसमाधिनि चेतसि ॥ ५३७ ॥ " ॥ ३ ॥

अथास्य भेदानाह—

स एष त्रिविधः शुद्धः सङ्कीर्णो नागरस्तथा ।

तत्र शुद्धस्य स्वरूपमाह—

शुद्धस्तत्रोदितः पूर्वैः शुद्धपूर्वोक्तलक्षणः ॥ ४ ॥

पूर्वैः पूर्वसूरिभिः शुद्धं केवलं पूर्वोक्तं तुल्यस्थानेत्यादि सूत्रभणितं लक्षणं यस्य । यथा—

" एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः ।
तदा प्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥ ५३८ ॥ "

अत्र प्रथम-तृतीययोः पादयोर्मूर्धन्य-तालव्य-दन्त्यौष्ठ्यवर्णानां निरन्तराऽऽवृत्तिर्द्वितीय-चतुर्थयोस्तु सान्तरा ॥ ४ ॥

अथ सङ्कीर्णमाह—

---

१ अ °र्णैः पु० । २ प. प्रकीर्तितः ।

**ज्ञेयोऽन्तरान्तरा हृद्यछेकानुप्रासलाञ्छितः ।**
**सङ्कीर्णः पाटलाबन्धकाम्यस्रग्दामसोदरः ॥ ५ ॥**

श्रुत्यनुप्रास एवान्तरान्तरा मध्ये[1] मध्ये हृद्येन मनोज्ञेन वक्ष्यमाणेन छेकानुप्रा-सेन लाञ्छितोऽङ्कितः सङ्कीर्णनामा ज्ञेयः । स च कीदृशः ? पाटलाबन्धेन पाट-लायाः पुष्पविशेषस्य बन्धेन[2] निवेशेन काम्यं यत् स्रग्दाम तस्य सोदरस्तद्वत् कमनीय इत्यर्थः । यथा—

" स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेघनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥५३२॥ "

अत्र दन्त्यौ मूर्धन्यावोष्ठ्यौ ड-लयोरैक्येन दन्त्यपञ्चकं मूर्धन्य इत्यादिना क्रमेण पूर्ववद् आवृत्तिस्तत्र च[3] क्षणं पक्ष्मसु[4] धराः पयोधरा वली स्खलिताः दिरे चिरेण[5]दबिन्दवः । इति छेकानुप्रासप्रवेशः[6] ।

यथा वा—

" विमुच्य साहारमहार्यनिश्चया विलोलदृष्टिः प्रविलुप्तचन्दनम् ।
बबन्ध बालाऽरुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहतिः ॥ ५४० ॥ "

अत्रापि सर्वं पूर्ववत् ॥ ५ ॥

अथ नागरमाह—

**भेदेऽप्येकमतौ भेदबुद्धावैक्येऽपि जायते ।**
**ड-लयोरैक्यमित्यादिवाक्यैरैक्ये च नागरः ॥ ६ ॥**

भेदेऽपि कथञ्चिदेकत्वबुद्धावेको नागराख्यः श्रुत्यनुप्रासो जायते । तथा[7] कथञ्चिदैक्येऽपि भेदबुद्धौ द्वितीयः । तथा ड-लयोरैक्यमित्यादिवाक्यैरेकत्वे सति[8] च तृतीयः । तत्राद्यस्तुल्यस्थानानां यथा—

---

१ अ. मध्ये । २ अ. ०न का । ३ अ. च प० । ४ प. ०सु धराधरो ब० । ५ प. चरेण द० । ६ प. प्रविशेषः । ७ व. यथा । ८ अ. च सति ।

" हरेर्लङ्घितघर्मांशुर्व्योम्नि दीर्घेण रंहसः ।
बलिबन्धनघोरांह्रिरंहःसङ्गं निहन्तु वः ॥ ५४१ ॥ "

अत्र वैसदृश्याद् भेदेऽपि तुल्यस्थानानां हकार–घकाराणां तुल्यश्रुतित्वादेकत्वबुद्धिः ।

अतुल्यस्थानानां यथा—

" उच्छलन्मत्स्यपुच्छाग्रदण्डपातहतार्णसि ।
जगदुद्यानमम्भोधावुन्ममज्ज ममज्ज च ॥ ५४२ ॥ "

अत्र त्यकारस्य च्छकाराभ्यां सह तुल्यस्थानत्वाभावाद् भेदेऽपि तुल्यश्रुतित्वादैक्यमिति ।

द्वितीयो यथा—

" क्रोडे मा डिम्भमादाय चण्डि ! पीडय वक्षसा ।
कर्णे ब्रूहि वयस्याया युवा यदयमुच्यते ॥ ५४३ ॥ "

अत्र डकार–वकार–यकाराणामेकत्वेऽपीषत्स्पृष्टताऽऽदिभिर्भेदात्रभासः ।

तृतीयो यथा—

" शयने यस्य शेषाहिः सनीडे वडवानलः ।
महासाहसिनामग्र्यं तमीडे जलशायिनम् ॥ ५४४ ॥ "

अत्र ड–लयोरैक्येनानुप्रासः ।

न–णयोरैक्येन यथा—

" बाणैः क्षुण्णेषु सैन्येषु त्वया देव ! रणाङ्गणे ।
हतशेषाः श्रयन्तीमे शून्यारण्यानि विद्विषः ॥ ५४५ ॥ "

अत्र क्षुण्णेषु सैन्येषु शून्यारण्यानीति न–णयोरैक्यम् ।

र–लयोरैक्येन यथा—

" विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥ ५४६ ॥ "

अत्र करीरनीलैरिति र-लयोरैक्येन पादचतुष्टयेऽप्यनुप्रासनिर्वाहः । एवं दन्त्य-तालव्यादिभेदेऽप्यैक्येन नागरो विज्ञेयः ॥ ६ ॥

अथ छेकानुप्रासमाह—

यत्रावृत्तिरनेकस्य वर्णस्य सकृदीक्ष्यते ।
स च्छेकानामनुप्रासश्चतस्रस्तद्भिदास्त्विमाः ॥ ७ ॥

यत्र यस्मिन्ननेकस्य द्विप्रभृतेर्वर्णस्य सकृदेकवारमावृत्तिरीक्ष्यते स छेकानामनुप्रासस्तदभीष्टत्वादिमास्तु वक्ष्यमाणाश्चतस्रस्तद्भिदाश्चत्वारस्तद्भेदाः ॥७॥

ता एवाह--

क्रमशाली विपर्यस्तो वेणिको गर्भितस्तथा ।

तत्र क्रमशालिनमाह—

क्रमशाली क्रमोपेतः

यथापूर्वमुत्तरो वर्णनिवेशः क्रमस्तेन युक्तः क्रमशाली । यथा—

" नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन ।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविमोक्षमग्नौ ॥ ५४७ ॥

अत्र गुर्वी गुरुणेत्यादिवर्णानां क्रमावृत्तिः ।

यथा वा—

" ततोऽरुणपरिस्पन्दमन्दीकृतरुचिः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥ ५४८ ॥ "

विपर्यस्तमाह—

१ अ. ०स्रजे० । २ प. ०तिव० । ३ व. ०धानप्र० । ४ अ. ०स्पंदीकृ० । ५ अ. ०गंडु० ।

विपर्यस्तः क्रमात्ययी ॥ ८ ॥

क्रमोल्लङ्घी विपर्यस्तो यथा—

“ प्रणवः प्रवणो यत्र प्रथमः प्रमथेषु यः ।
रणवान् वारणमुखः स वः पातु विनायकः ॥ ५४९ ॥ ”

अत्र क्रमाभावो व्यक्त एव ॥ ८ ॥

अथ वेणिकामाह—

आवाक्यान्तगतानेकवर्णावृत्तिस्तु वेणिका ।

आवाक्यान्तं वाक्यपरिसमाप्तिं यावद् गता स्थिताऽनेका भूयसी वर्णावृत्तिर्यस्यां सा वेणिका । यथा—

“ विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे
जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे ।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नं
निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी ॥५५०॥ ”

अथ गर्भितमाह—

गर्भितस्त्वपरो वर्णस्तोमो यत्रान्यगर्भितः ॥ ९ ॥

अपरो वर्णसमुदायो यत्रान्येन वर्णेन गर्भितः स्यात् स गर्भितः । यथा—

“ कालं कपालमालाङ्कमेकमन्धकसूदनम् ।
वन्दे वरदमीशानं शासनं पुष्पधन्वनः ॥ ५५१ ॥ ”

अत्र कालं कपालेत्यादिषु द्वितीयो वर्णस्तोमः पकारादिभिर्गर्भितः ॥ ९ ॥

अथ वृत्त्यनुप्रासमाह—

---

१ प. क्रमात्ययी क० । २ प. प्रणवो । ३ प. ०यमे० ।

उपनागरिकाऽऽदीनां वृत्तीनामनुरोधतः ।
त्रैविध्यजुषि वर्णानामेकताऽनेकतावताम् ॥ १० ॥
यस्मिन्नसकृदावृत्तिर्दृश्यते तं विपश्चितः ।
वृत्त्यनुप्रासमिच्छन्ति त्रिविधोऽपि द्विधा च सः ॥ ११ ॥[1]

उपनागरिकाऽऽदयस्तिस्रो वृत्तयः पूर्वमुक्तास्तासामनुरोधात् त्रैविध्यजुषि त्रिविधत्वभाजि[2] यत्र यस्मिन्नलङ्कारविषये क्वचिदेकत्वभाजां क्वचिदनेकत्वभाजां वा वर्णानामसकृदनेकवारमावृत्तिर्दृश्यते[3], तमलङ्कारं विपश्चितो विद्वांसो वृत्त्यनुप्रासाख्यमिच्छन्ति मन्यन्ते वृत्त्याऽऽश्रितत्वात् ।

तत्रोपनागरिकाऽनुप्रासो यथा—

" न मालतीदाम विमर्दयोग्यं न प्रेम नव्यं सहतेऽपराधान् ।
म्लानाऽपि न म्लायति केसरस्रक् देवी न खण्ड्यप्रणया कथञ्चित् ॥ ५५२ ॥ "

अत्र प्रथमपादे मकारस्यासकृदावृत्तिः ।

परुषानुप्रासो यथा—

" नीते निर्व्याजदीर्घामघवति मघवद्वज्रलज्जानिदाने
निद्रां द्रागेव देवद्विषि मुषितरुषः संस्मरन्त्याः स्वभावम् ।
देव्या दृग्भ्यस्तिसृभ्यस्त्रय[4] इव गलिता राशयो रक्तताया
रक्षन्तु त्वां त्रिशूलक्षतिकुहरभुवो[5] लोहिताम्भःसमुद्राः ॥ ५५३ ॥ "

अत्र दीर्घामघवदित्यादिरसकृदनेकवर्णावृत्तिः[6] ।

कोमलानुप्रासो यथा—

" लोलल्लवङ्ग–लवलीवलया निकुञ्जकूजत्कपिञ्जलकुला वकुलावनद्धाः[7] ।
अध्यूषिरे कनकचम्पकराजिकान्ता येनापरान्तविजये जलधेरुपान्ताः ॥५५४॥"

---

१ प. युग्मं । २ अ. त्रिधात्व० । ३ अ. ०कृदावृ०, ब. ०देश० । ४ अ. ब. दिग्भ्य० ।
५ अ. ब. ०क्षिति० । ६ प. ०देकवर्ण० । ७ प. ०वन० ।

यथा वा—

" अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ? ।
अलमलमालि ! मृणालैरिति वदति दिवानिशं बाला ॥ ५५५ ॥ "

स चैवं त्रिविधोऽपि प्रत्येकं द्विप्रकारश्च भवति ॥ १०–११ ॥

तावेव प्रकारावाह—

**चित्रो विचित्रश्च तयोराद्यो यमकसन्निभः ।**
**द्वितीयस्त्वाद्य एवानुप्रासान्तरतरङ्गितः ॥ १२ ॥**

व्यक्त एव श्लोकार्थः । तत्रोपनागरिकानुप्रासश्चित्रो यथा—

" सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि ( द्रुधि ) ।
शुष्यत्स्रोतसि तप्तभूरिरजसि ज्वालायमानाम्भसि
ग्रीष्मे मासि ततार्कतेजसि कथं पान्थ ! व्रजन् जीवसि ? ॥५५६॥ "

अत्र स्फुटैव यमकच्छाया ।

विचित्रो यथा—

" उद्यद्बर्हिषि दुर्दुरारवपुषि प्रक्षीणपान्थायुषि
स्थ्योतद्विप्रुषि चन्द्ररुग्मुषि सखे ! हंसद्विषि प्रावृषि ।
मा मुञ्चोच्चकुचान्तसन्ततगलद्बाष्पाकुलां बालिकां
काले कालकरालनीलजलदव्यालुप्तभास्वत्त्विषि ॥ ५५७ ॥ "

अत्र मा मुञ्चोच्चकुचान्तेत्याद्यनुप्रासान्तरानुप्रवेशः । एवं परुष–कोमलानुप्रासावपि द्रष्टव्यौ ॥ १२ ॥

अथ प्रकारान्तरेण विचित्रमाह—

१ प. युग्मम् । २ प. ०कारमा० । ३ प. ०र्हिषि दुर्दराव० । ४ प. ०ज्जुषि । ५ अ. ०मुखि । ६ अ. ०बाकु० । ७ प. ०प्रावप्र० । ८ अ. व. पुरु० ।

आवृत्तेरेकवर्णाया वाक्यव्यापकताजुषः ।
यद्द् वर्णान्तरवैचित्र्यं तं विचित्रं वदन्ति वा ॥ १३ ॥

एक एव वर्णो यस्यां सा तथा तस्याः समग्रवाक्यव्यापकताभाजे आवृत्तेर्यदन्तरान्तरा वर्णान्तरवैचित्र्यं तं वा विचित्राख्यं वृत्त्यनुप्रासं वदन्ति । अत्र वाशब्दोऽथवार्थे । यथा—

" चञ्चत्काञ्चनकान्तयो लयचलच्चेलाञ्चलैरञ्चिता-
चारीसञ्चरणैकचारुचरणाः सिञ्चन्ति चित्तं मम ।
लीलाचञ्चुरचञ्चरीकरुचिभिश्चूडालकैश्चर्चिताः
किञ्चिच्चन्दन-चन्द्र-चम्पकरुचां चौर्यो मृगीलोचनाः ॥ ५५८ ॥"

अत्र समग्रेऽपि वाक्ये ककारादिवर्णान्तरिता चकारावृत्तिः ॥ १३ ॥

अथास्यैव प्रभेदान्तरमाह—

यदि वा यत्र वर्ग्याणां वर्ग्यैरावर्त्तनं निजैः ।
वृत्त्यनुप्रासमिच्छन्ति तं कवित्वैकजीवितम् ॥ १४ ॥

यदि वेति प्रकारान्तरसूचनार्थः । यत्र यस्मिन् वर्ग्याणां कवर्गादिवर्गाक्षराणां निजैरेव वर्गाक्षरैरावर्त्तनं वृत्तीनां [3]कार्णाटीप्रभृतीनामनुप्रासं तं कवितायाः एकं[4]चैतन्यभूतमिच्छन्ति । तत्र कवर्गावृत्त्या [5]कार्णाटी यथा—

" कान्ते ! कुटिलमालोक्य कर्णकण्डूयनेन किम् ? ।
कामं कथय कल्याणि ! किङ्करः करवाणि यत् ॥ ५५९ ॥ "

चवर्गावृत्त्या कौन्तली यथा—

" ज्वलज्जटिलदीपार्चिरञ्जनोच्चयचारवः ।
चम्पकेषु चकोराक्षि ! चञ्चरीकाश्चकासति ॥ ५६० ॥ "

टवर्गावृत्त्या कौङ्की यथा—

---

१ प. ०जरचा० । २ प. ०चुंचु० । ३ अ. कर्णा० ।४ अ. एकं चै० । ५ अ. कर्णा० ।

" कुम्भकूटाट्टकुट्टाकेकुटिलोत्कटपाणिरुट् ।
हरिः करटिपेटेन न द्रेष्टुमपि चेष्यते ॥ ५६१ ॥ "

तवर्गावृत्त्या कौङ्कणी यथा —

" मधुर्मधूनि गान्धर्वं मन्दिरं मदिरेक्षणा ।
इन्दुरैन्दीवरं दाम काममानन्दयन्ति नः ॥ ५६२ ॥ "

एवं पवर्गावृत्त्या वानवासिका । अन्तःस्थावृत्त्या त्रावणी । ऊष्मावृत्त्या माथुरी । द्वित्रिवर्गावृत्त्या मात्सी । एकत्रवर्गोत्थवर्ग्यद्वयावृत्त्या मागधी । स्वान्त्यसंयोगिवर्ग्यावृत्त्या तामलिप्तिका । सरूपसंयुक्तावृत्त्या औंड्री । असरूपसंयुक्तावृत्त्या पौण्ड्री वृत्तिरिति द्वादशधा वृत्त्यनुप्रासः ॥ १४ ॥

अथ लाटानुप्रासमाह —

**एकवृत्ति–पृथक्वृत्ति–वृत्त्यवृत्तिस्थितिस्पृशाम् ।**
**भूयः साम्येऽपि तात्पर्यमात्रतो भेदशालिनाम् ॥ १५ ॥**
**नाम्नां यदियमावृत्तिर्वृत्तिवर्जं पदस्य च ।**
**पदानां च स लाटानामनुप्रासः प्रकीर्त्यते ॥ १६ ॥**

एकस्मिन् समासे पृथग् विभिन्ने समासे समासासमासे वा स्थितिमतां भूयो बाहुल्येन साम्येऽपि तात्पर्यमात्रतो ऐदम्पर्यमात्राद् भेदवतां नाम्नां तथा समासं विना पदस्य विभक्त्यन्तस्य पदानां च तादृशानामेव यदियमावृत्तिः स लाटानां देशविशेषसम्भूतनराणामनुप्रासस्तदभीष्टत्वात् प्रकीर्त्यते कथ्यते । तत्र क्रमेण नाम्नां यथा—

" सितकरकररुचिरविभा विभाकराकार ! धरणिधव ! कीर्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥ ५६३ ॥ "

अत्र सितकरकरेत्येकः समासः, विभा विभाकरेति पृथक् समासः । कमला-कमलेति समासासमासः" । १५–१६ ॥

---

१ प. व. ॰कः कु॰ । २ प. नष्टु॰ । ३ पं. प. ॰रिंदी॰ । ४ अ ॰त्रिप॰ । ५ प. ॰वर्गाद्वि॰ । ६ अ. स्वरू॰ उं॰ । ७ प. ॰म्येन । ८ अ. ॰नां स । ९ अ. ॰त्र ऐ॰ । १० प. ॰तां त॰ । ११ प. युगली ।

अथ पदस्थस्यास्य भेदानाह—

स्वभावादुपचाराच्च वीप्सयाऽऽभीक्ष्ण्यतोऽपि वा ।
कषादिभ्यश्च धातुभ्यः स्वात्मन्युपपदस्थिते ॥ १७ ॥
आवृत्तिर्दृश्यते या च या च काचन सम्भ्रमात् ।
अनुप्रासं तमप्याहुर्लाटीयं कविपुङ्गवाः[1] ॥ १८ ॥

या च काचिदावृत्तिः स्वभावात् निसर्गात् दृश्यते । यथा—

" कुर्वन्तोऽमी कलकलं मारुतेन चलाचलाः ।
गुलगुलायन्ते[2] गजा इव घनाघनाः ॥ ५६४ ॥ "

अत्र स्वाभाविकी सर्वाऽप्यावृत्तिः ।

या चोपचाराद् यथा—

" अमृतममृतं चन्द्रश्चन्द्रस्तथाऽम्बुजमम्बुजं
रतिरपि रतिः कामः कामो मधूनि मधून्यपि ।
इति न भजते वस्तु प्रायः परस्परसङ्करं
तदियमबला धत्ते लक्ष्मीं कथं सकलात्मिकाम् ? ॥ ५६५ ॥ "

अत्रार्थान्तरसङ्क्रान्तवाच्य उपचारः ।

या च वीप्सया यथा—

" शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
[3]देशे देशे न विद्वांसश्चन्दनं न वने वने ॥ ५६६ ॥ "

अत्र वीप्सया द्विरुक्तिः ।

[4]यथा वाऽऽभीक्ष्ण्यतो यथा—

---

१ प. मुनिपु० । २ अ. व. ०र्गुलु० । ३ व. दिशि दिशि । ४ अ. व. या चाभी० ।

" श्लेषं श्लेषं मृगदृशा दत्तमानन-पङ्कजम् ।
मया मुकुलिताक्षेण पायं पायमदृश्यत ॥ ५६७ ॥ "

अत्राभीक्ष्ण्यतो द्विरुक्तिः ।

तथा कषादिभ्यो धातुभ्यः सकाशात् तेषामेव धातूनां स्वात्मन्येवोपपदस्थिते प्रत्यासत्तिस्थे या च काचिदावृत्तिर्यथा—

" निमूलकाषं कषति स्वान्तमन्तःस्मरज्वरे ।
लाजस्फोटं स्फुटन्त्यस्या हृदये हारयष्टयः ॥ ५६८ ॥ "

या च सम्भ्रमाद् यथा—

" अस्थीन्यस्थीन्यजिनमजिनं भस्म भस्मेन्दुरिन्दु-
गङ्गा गङ्गोरग उरग इत्याकुलाः सम्भ्रमेण ।
भूषा-वेषोपकरणगणप्रापणव्यापृतानां
नृत्तारम्भप्रणयिनि शिवे पान्तु वाचो गणानाम् ॥ ५६९ ॥ "

एवं भक्तिप्रह्वताद्या वृत्तिरपि गृह्यते । यथा—

" जयति जयति देवः श्यामकण्ठः पिनाकी
जयति जयति देवी लोकमाता भवानी ।
जयति जयति धन्यः कोऽपि भक्तस्तयोर्यैः
किमपरमिह वन्द्यं वन्द्यमेतावदेव ॥ ५७० ॥ "

तमप्यनुप्रासं लाटीयं लाटसम्बन्धिनमाहुर्ब्रुवते कविपुङ्गवाः कवीश्वराः ।
एवं गजोऽयमागच्छतीत्यादिवाक्येषु पदानामपि द्रष्टव्यः ॥ १७-१८ ॥

अथावृत्तिसाधर्म्याद् यमकमाह—

**सत्यर्थे पृथगर्थानां वर्णानां सस्वरात्मनाम् ।**
**पुनरावर्त्तनं स्थाननियमे यमकं विदुः ॥ १९ ॥**

---

१ अ. ०क्ष्ये । २ अ. ब. कोपि धन्यस्त० । ३ प. कवींद्राः । ४ प. युग्मं ।

वर्णानां पुनरावर्तनं यमकं विदुः। स्थाननियमाभावे सस्वरनियमाभावे चानुप्रास एव स्यात्, तद्व्यवच्छेदार्थमाह—स्थाननियमे इति, सस्वरात्मनामिति च। इह च क्वचिदुभयत्रापि सार्थकत्वम्। क्वचिदेकत्र सार्थकत्वम्, अपरत्र निरर्थकत्वम्। क्वचिदुभयत्राप्यनर्थकत्वम्। यथा—

" नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्।
मृदुलतांतलतांतमलोकयत् स सुरभिं सुरभिं सुमनोभरैः ॥ ५७१ ॥ "

अत्र प्रथमपादे उभयत्रापि सार्थकत्वम्। द्वितीय-तृतीयपादयोरेकत्र सार्थकत्वमपरत्रानर्थकत्वम्। चतुर्थपादे सुरभिं सुरभिं स्वित्यत्रोभयोरप्यनर्थकत्वमित्याह—सत्यर्थे पृथगर्थानां यद्यर्थो भवति तदा भिन्नार्थानामेवावृत्तिरर्थाभावे त्वन्यथापि ॥ १९ ॥

अथैतस्य भेदानाह—

**पाद-पादादि-मध्यान्त-श्लोकार्ध-श्लोकवर्तिनीम्।**
**मनोज्ञां दधदावृत्तिं भिद्यते तदनेकधा ॥ २० ॥**

तद् यमकमनेकधा बहुभिः प्रकारैर्भिद्यते। कीदृशं सदित्याह-पादयोः-श्लोके[1] तुर्यभागयोः समग्रयोः पादानां वा सर्वेषां पादादौ पादाद्योः पादादिषु च पादमध्ये पादमध्ययोः पादमध्येषु च। पादान्ते पादान्तयोः पादान्तेषु च। श्लोकार्द्धयोः श्लोकयोश्च समग्रयोर्वर्त्तमानां मनोज्ञामावृत्तिं दधद् धारयेदिति।

तत्र पादयोर्यथा—

" या बिभर्ति कलवल्लकीगुणस्वानमानमति कालिमालया।
नात्र कान्तमुपगीतया तया स्वानमानमतिकालि मालया ॥ ५७२ ॥ "

एवं प्रथमादिपादानामपि द्वितीयादिपादेषु चतुर्णां वा मिथो यमनं ज्ञेयम्।

---

१ प. ०भयो० । २ अ. ०स्तु० । ३ व. च । ४ अ. यति ।

पादादौ यथा—

" राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णं ततिभिस्तरूणाम् ।
कान्तालकान्ता ललनाः सुराणां रक्षोभिरक्षोभितमुद्वहन्तम् ॥ ५७३ ॥ "

पादाद्योर्यथा—

" उच्चारणज्ञोऽथ गिरां दधानमुच्चारणत्पक्षिगणास्तटीस्तम् ।
उत्कन्धरं द्रष्टुमवेक्ष्य शौरिमुत्कन्धरं दारुक इत्युवाच ॥ ५७४ ॥ "

पादादिषु यथा—

" काञ्चित्प्रतोलीमनु कामिनीनां काञ्चिस्रवन्तीवनमातरिश्वा ।
काञ्चिप्रभृत्याभरणोज्झिनीनां काञ्चिल्लुनीते सुरतश्रमार्तिम् ॥ ५७५ ॥ "

पादमध्ये यथा—

" दधतमाकरिभिः करिभिः क्षतैः समवतारसमैरसमैस्तटैः ।
विविधकामहिता महिताम्भसः स्फुटसरोजवना जवना नदीः ॥ ५७६ ॥ "

पादमध्ययोर्यथा—

वधूर्वसन्ते रमणीषु विभ्रमं विनिद्रयन्त्यो रमणीयतागुणैः ।
जगज्जिगीषोः सहकारितां गताः सङ्कल्पयतेः सहकारपङ्क्तयः ॥ ५७७ ॥ "

पादमध्येषु यथा—

" मदनदारुण उत्थित उच्छिखो मधुमदारुणघूर्णितमुखच्छविः ।
तरुणि ! दारुण एष दिशः समं मम हृदारुणदाप्रवणानलः ॥ ५७८ ॥ "

पादान्ते यथा—

" व्यथितसिन्धुमनीरशनैः शनैरमरलोकवधूजघनैर्घनैः ।
फणभृतामभितो विततं ततं प्रियलवङ्गलता—बकुलैः कुलैः ॥ ५७९ ॥ "

---

१ प. सौ० । २ प. कांति० । ३ प. ०म–धार० । ४ अ. प. व. नदी । ५ प. निर्लि०, ब. न नि० । ६ अ. ०रुषि । ७ प. ०नान० । ८ अ. प. व. ०घूर्ज० ।

पादान्तयोर्यथा—

"इह मुहुर्मुदितैः कलभै रवः प्रतिदिशं क्रियते कलभैरवः ।
स्फुरति चानुवनं चमरीचयः कनकरत्नभुवां च मरीचयः ॥ ५८० ॥"

पादान्तेषु यथा—

"तव प्रिया सच्चरिताप्रमत्त ! या विभूषणं धार्यमिहांशुमत्तया ।
रतोत्सवामोदविशेषमत्तया न मे फलं किञ्चन कान्तिमत्तया ॥५८१॥"

व्याख्याऽस्य यथा—काचिद् विभूषणार्पणे गोत्रस्खलितं प्रियमेवमाह—हे सच्चरिताप्रमत्त ! हे सदाचारनिपुण ! या काचित् तव प्रिया इह तया रतोत्सवामोदविशेषमत्तया अंशुमत् कान्तियुक्तं विभूषणं धार्यम् । मम पुनस्तव प्रसादबहिष्कृताया विभूषणसमुद्भवया कान्तिमत्तया न किञ्चन फलमिति सम्बन्धः । अत्रामोदो हर्षः ॥ १० ॥

श्लोकार्द्धयोर्यथा—

"अयशोभिदुरालोके कोपधामरणाद् ऋते ।
अयशोभिदुरालोके कोपधा मरणाद् ऋते ! ॥ ५८२ ॥"

श्लोकयोर्यथा—

"स त्वारंभव(र)तोऽवश्यमवलंबिततारवम् ।
सर्वदा रणमानैषीदवानलसमस्थितः ॥ ५८३ ॥
सत्वारम्भव(र)तोवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषी दवानलसमस्थितः ॥ ५८४ ॥[4]"

एवमाद्यन्त-मध्याद्यंशानां मिथो यमने भूयांसो यमकप्रकाराः स्युः । ते च प्रायः काव्यस्य व्याधिभूता इति साकल्येन नोदाहृताः, दिङ्मात्रं तु दर्शितमेवेति ॥ २० ॥

---

१ प. ०या का० । २ अ. ०या त० । ३ प. ०रण० । ४ प. युग्मम् । ५ प. ०स्ते ।

अथ चित्रमाह—

लिप्यक्षराणां विन्यासे खड्ग–पद्मादिरूपता ।
यस्मिन्नालोक्यते चित्रा तच्चित्रमिति गीयते ॥ २१ ॥

यस्मिन् यत्र लिप्यक्षराणां लिपिवर्णानां न तूच्चार्यमाणानां, जिह्वापाटनादिप्रसङ्गात् विन्यासे पत्रादिलेखने सति खड्ग–पद्मादिरूपता खड्ग–पद्मादीनामाकृतिश्चित्राऽवलोक्यते । तच्चित्रमित्यलङ्कारो गीयते ।

तत्र खड्गरूपता यथा—

" मारारिशक्ररामेभमुखैरासाररंहसा ।
सारारब्धस्तवा नित्यं तदर्तिहरणक्षमा ॥ ५८५ ॥ "

माता नतानां संघट्टः श्रिया बाधितसम्भ्रमा ।
मान्याथ सीमा रामाणां शं मे दिश्यादुमाऽऽदिजा ॥ ५८६ ॥ "

स्थापना चेयम्—

[ खड्गबन्धः । ]




१ ब. अन । २ ब. ०त्रिजा । प. युग्मम् ।

पद्मरूपता यथा—

"या श्रिता पावनतया यातनच्छिदनीचया ।
याचनीया धिया मायायामायासं श्रिता श्रिया ॥ ५८७ ॥"

यातनं पीडां छिनत्तीति क्विपि यातनच्छित् । मायाया अविद्याया आयामो दैर्घ्यं तस्यायासं विनाशमनीचया धिया याचनीयेति देवीस्तुतिः ।

स्थापना चेयम्—

[ पद्मबन्धः । ]




आदिशब्दान्मुरज-चक्रादिरूपता गृह्यते । सा च शिशुपालवध-रुद्रटादिष्वालोकनीया । शक्तिमात्रप्रकाशनफलैवेयं कविता न भूम्ना महाकविभिरादृता रसवीथीबहिष्कृतत्वादिति ज्ञापनाय न प्रपञ्च्यते ॥ २१ ॥

अथ श्लेषमाह—

**शब्दानां भिन्नवाच्यानां भङ्गाभङ्गविधिस्पृशाम् ।**
**एकप्रयत्नोच्चार्यत्वं श्लेषो वर्णादिरष्टधा ॥ २२ ॥**

भिन्नवाच्यानां पृथगर्थानां भङ्गविधिचुम्बिनामभङ्गविधिचुम्बिनां च शब्दानां यदेकेनैव प्रयत्नेन ताल्वोष्ठपुटादिव्यापारेण तुल्यकालमुच्चारणीयत्वं स श्लेषालङ्कारः ।

---

१ अ. ०च्छद० । २ अ. यथा । ३ प. भिन्नवि० । ४ प, च य० ।

स च वर्णादिः वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनमयोऽष्टधा भवति । तत्र वर्णश्लेषो यथा—

" अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको गतवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ? ॥ ५८८ ॥ "

अत्र विधाविरयत्र वर्णश्लेषो विधोर्विधेश्च व्यवस्थापकः ॥ १ ॥

पदश्लेषो यथा—

" दोषाकरेण सम्बध्नन् नक्षत्रपथवर्तिना ।
राज्ञा प्रदोषो मामित्थमप्रियं किं न बाधते ? ॥ ५८९ ॥ "

लिङ्गश्लेषो यथा—

" भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः ॥ ५९० ॥ "

वचनश्लेषोऽप्येष एव ॥ ४ ॥

भाषाश्लेषो यथा—

" महदेसुरसंघमे तमवसमासंगमागमाहरणे ।
हरबहुसरणं तं चित्तमोहमवहरेउमे सहसा ॥ ५९१ ॥ "

अत्र संस्कृत-प्राकृतयोः श्लेषः । एतद्व्याख्या यथा—महदे उत्सवप्रदे सुरैः सह सन्धानं यस्य तं समासङ्गं मे ममाव पालय आगमाहरणे आम्नायग्राह्ये बहुसरणं भूरिसरणं तं प्रसिद्धं चित्तमोहमवसर

---

१ व. बहुव० । २ ज. यत्राम० । ३ प. व. ०विधिश्च । ४ प. ०पद० । ५ प. व, ०सर० ।

काले हरापनय हे उमे! गौरि! सहसा बलेन। तथा मह मम धंमे धर्मे रसमासक्तिं देसु देहि। गमागमात् संसारात् तमोवशमाशां णे नोऽस्माकं हर। हे हरवधु! त्वं शरणं मे मम चित्तमोहोऽपसरतु सहसा झगिति। मोहमित्यत्र नपुंसकत्वं प्राकृतत्वात्। एवं भाषान्तराणामपि बोद्धव्यः॥ ५॥

प्रकृतिश्लेषो यथा—

"अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः॥ ५९२॥"

प्रत्ययश्लेषो यथा—

"रजनिरमणमौलेः पादपद्मावलोकक्षणसमयपराप्तापूर्वसम्पत्सहस्रम्।
प्रमथनिवहमध्ये जातुचित्[3] तत्प्रसादादहमुचितरुचिः स्यान्नन्दिता सा तथा मे"

अत्राहमुचितरुचिः सन्नन्दिता प्रमोदवान् स्याम्, तथा तेन प्रकारेण मे मम सा नन्दिता नन्दिकेश्वरत्वं स्यादिति प्रत्ययश्लेषः।

विभक्तिश्लेषो यथा—

"विषं निजगले येन बभ्रे च भुजगप्रभुः।
देहे येनाङ्गजो दध्रे जाया च स जयत्यजः॥ ५९४॥"

अत्र येन विषं निजगले गिलितं भुजगश्च निजगले कण्ठे बभ्रे धृतः। अनङ्गो देहे दग्धः। जाया च देहे वपुषि दध्रे धृतेति। त्यादि-स्याद्योर्विभक्त्योः श्लेषः। सर्वेष्वप्येषु[4] सभङ्गश्लेषोऽयम्। अभङ्गश्लेषोऽप्यष्टधैव यथासम्भवं ज्ञेयः। अत्र केचिदभङ्गश्लेषत्वमिच्छन्ति। एकस्मिन् वृन्ते फलद्वयवदेकस्मिन् शब्देऽर्थद्वितीयस्यावलग्नत्वात्। तदयुक्तम्। दोष-गुणालङ्काराणां हि शब्दार्थाश्रयत्वेऽन्वय-व्यतिरेकावेव व्यवस्थापकौ। यो यस्यान्वयं व्यतिरेकं वाऽ(चा)नुविधत्ते स तदीय इति व्यवस्था। ततश्च—

---

१ अ. ब. प्रा० न०। २ प. प्रथम०। ३ प. ०चित्तप्र०। ४ अ. ०पु भङ्गश्लेषोऽप्य०। ५ अ. ०षस्यार्थश्लेषत्व०, प. ०षस्य इ०।

" असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।
राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥ ५९५ ॥ "

इत्यादावभङ्गश्लेषोऽपि सभङ्गश्लेष इव शब्दपरावृत्तौ न भवत्येवेत्ययमपि शब्दालङ्कार एव । स पुनरर्थश्लेषस्य विषयो यत्र शब्दपरावर्तनेऽपि न श्लेषत्वहानिः । यथा—

" स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो ! सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥ ५९६ ॥ "

श्लेषश्चायमप्राप्तो विधीयते इति निरवकाशत्वादलङ्कारान्तराणां बाधक इति न वाच्यमलङ्कारान्तरविविक्तविषयस्याप्यस्य दर्शनात् । यथा—

" योऽसकृत् परगोत्राणां पक्षच्छेदक्षणक्षमः ।
शतकोटिदतां बिभ्रद् विबुधेन्द्रः स राजते ॥ ५९७ ॥ "

यत्राप्यलङ्कारान्तरसहचरस्तत्रापि न खलु स एव तत्प्रतिभोत्पत्तिहेतुः । किन्तु तान्येवास्य प्रतिभोत्पत्तिहेतव इति तद्व्यपदेशेनैव व्यवहारः । सौन्दर्यस्य तेष्वेव विश्रान्तत्वात् । सौन्दर्यं चालङ्कारः । तथाहि—

" सकलकलं पुरमेतज्जातं सम्प्रति सितांशुबिम्बमिव ।

अत्र श्लेषप्रतिभोत्पत्तिहेतुरुपमैव ।

नन्वर्थालङ्कारत्वमेवोपमायास्तत् कथं शब्दसाम्येऽप्येवैव तस्मादुपमा प्रतिभोत्पत्तिहेतुरत्र श्लेष इत्युच्यताम् । साधूक्तम्, किन्तु पूर्वाचार्यैरस्याः क्वापि शब्दालङ्कारत्वमप्यङ्गीकृतम् । यदुक्तम्—

" स्फुटमर्थालङ्कारावेतावुपमा-समुच्चयौ किन्तु ।
आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः ॥५९९॥ " इति ।

एवं च—

---

१ प. ०नुप्रासो । २ अ. न च । ३ अ. ०प्यद० । ४ प. तत्र व्य० । ५ अ. प. ० तं सि० । ६ अ. ०पोत्प० । ७ प. ०म्यलं० ।

'अविन्दुसुन्दरी नित्यं गलल्लावण्यविन्दुका' इत्यादौ विरोधः। 'सद्वंशमुक्तामणिः' इत्यादावेकदेशविवर्ति रूपकम्। 'नाल्पकविरिव स्वल्प-श्लोको देव! महान् भवान्।' इत्यादौ व्यतिरेकः।

"अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो! दैवगतिश्चित्रा तथापि न समागमः॥ ६०३॥"

इत्यादौ समासोक्तिः।

"आदाय चापमचलं कृत्वा हीनं गुणं विषमदृष्टिः।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै॥ ६०४॥"

इत्यादौ विरोधश्च श्लेषप्रतिभोत्पत्तिहेतुरिति बोद्धव्यम्। एष च श्लेषः 'प्राकरणिकयोरप्राकरणिकयोर्वा विशेषण–विशेष्यसाम्ये सत्येव भवति' इति यदुक्तं केनचित् तन्नातिसमीचीनं प्राकरणिकयोस्तावदुभयथाऽपि दर्शनात्। तथाहि–

"मधुरागविवर्द्धिन्यः कोमलाः कोकिलागिरः।
आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चा(चा)सितेक्षणाः॥ ६०५॥"

अत्रासिते अन्तःप्रमोदानुभवान्निश्चलीकृते ईक्षणे यकाभिः लोकानां ताः कोकिलागिर आकर्ण्यन्ते। तथा कोकिलातुल्यगिरोऽसितेक्षणाः श्लिष्यन्ते इति विशेष्यसाम्यम्। विशेषणसाम्यं तु स्फुटमेवात्र।

तथा—

"स्वभावमधुराः स्निग्धाः शंसन्त्यो रागमुल्बणम्।
दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान्॥ ६०६॥"

अत्र दृशां दूतीनां च प्राकरणिकानामपि विशेष्याणां साम्यं नास्ति। एवमप्राकरणिकयोरपि क्वापि द्रष्टव्यम्। प्राकरणिकाप्राकरणिके तु विशेषण—विशेष्यसाम्ये यत्र प्रकरणादिनियमनं तत्र ध्वनेर्विषयः। यथा—

१ अ. ०नवि०। २ प. ०शिरो। ३ अ. लक्ष०। ४ अ. ०कत्वे। ५ प. प्राकरणिकादि०।

'असावुदयमारूढः' इत्यादि । अत्र प्रकरणादिनियमिता राजादिशब्दा ध्वनिनैव चन्द्राद्यर्थान्तरं प्रतिपादयन्ति । केवलं विशेषणसाम्ये पुनरस्यैव विषयः । यथा—

" स्वेच्छोपजातविषयोऽपि न याति वक्तुं देहीति मार्गणशतैश्च ददाति दुःखम् ।
मोहात् समाक्षिपति जीवनमप्यकाण्डे कष्टो मनोभव इवेश्वरदुर्विदग्धः ॥६०७॥

अथ वक्रोक्तिमाह—

वाक्यं यत्रान्यथैवोक्तमन्यो व्याकुरुतेऽन्यथा ।
काक्वा श्लेषेण वा तस्मात् सा वक्रोक्तिर्द्विधा मता ॥२३॥

यत्र यस्यामन्यथैव प्रकारान्तरेणैव केनचिद् वाक्यमुक्तम् । अन्यः कश्चिदन्यथा पूर्वस्मात् प्रकारान्तरेण व्याकुरुते समर्थयति । कया हेतुभूतया ? काक्वा ध्वनिविशेषेणाथवा श्लेषेण सभङ्गाभङ्गात्मना । तस्मात् काकु-श्लेषलक्षणहेतुद्वयात् सा वक्रोक्तिनामाऽलङ्कृतिर्द्विधा मता । तत्र काक्वा यथा—

" गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिले ललिते नैष्यति सखि ! सुरभिसमयेऽसौ ॥ ६०८ ॥"

एतद् वाक्यं नायिकया पत्युरागमननिषेधपरत्वेनोक्तम् । तत्सख्या नञ्शब्दस्थितकाकुप्रयोगेण विधिपर्यन्ततां प्रापितम् ।

सभङ्गश्लेषेण यथा—

" त्वं हालाहलभृत् करोषि सहसा मूर्छां समालिङ्गितो
हालां नैव बिभर्मि नैव च हलं मुग्धे ! कथं हालिकः ? ।
सत्यं हालिकतैव ते समुचिता सक्तस्य गोवाहने
वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरोऽवताद् वः शिवः ॥६०९॥"

---

१ अ. ०लवि०, ब. विशेष्य० । २ प. ० लल०, ब. ०ललिते । ३ अ. यत्क०, ब. स्यात्क० ।

[1]अभङ्गश्लेषेण यथा—

" अहो ! केनेदृशी बुद्धिर्दारुणा तव निर्मिता ? ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥ ६१० ॥ "

अत्र दारुणेति प्रथमान्तं प्रक्रान्तं श्लेषेण तृतीयान्तं सम्पादितमिति ॥२३॥

[2]अथ पुनरुक्तवदाभासमाह—

**शब्दानामामुखे यस्मिन्नेकार्थत्वावभासनम् ।**
**पुनरुक्तवदाभासं शब्द–शब्दार्थगामि तत् ॥ २४ ॥**

यस्मिन् यत्र शब्दानामेकार्थत्वेनावभासनमेकार्था इव शब्दाः[3] प्रतिभासन्ते इत्यर्थः । क ? आमुखे प्रथमप्रतिपत्तौ न तु पर्यवसानेऽपि दोषप्रसङ्गेनालङ्कारत्वाभावात् तत् पुनरुक्तवदाभासनामाऽलङ्कारः । नपुंसकत्वेन संस्कारो लौकिकालङ्कारवैलक्षण्येन काव्यालङ्काराणामलङ्कार्यपारतन्त्र्यध्वननार्थः । तच्च किम्भूतम् ? शब्द–शब्दार्थगामि शब्दगामि शब्दार्थगामि च शब्दालङ्कारः शब्दार्थालङ्कारश्चेत्यर्थः । तत् द्वयोरपि सभङ्गत्वे शब्दालङ्कारो यथा—

" अरिवधदेहशरीरः सहसा रथिसूततुरगपादातः ।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥ ६११ ॥ "

सभङ्गाभङ्गत्वे शब्दार्थालङ्कारो यथा—

" अहीनभुजगाधीशवपुर्वलयकङ्कणम् ।
शैलादिनन्दिचरितं क्षतकन्दर्पदर्पकम् ॥ ६१२ ॥
वृषपुङ्गवलक्ष्माणं शिखिपावकलोचनम् ।
स सर्वमङ्गलं नौमि पार्वतीसखमीश्वरम् ॥ ६१३ ॥ युगली "

इदं स्याद्यन्तापेक्षया ।

---

१ अ. अथ भ० । २ प. पु० । ३ व. ०ब्दा भा० । ४ प. ०ामा० । ५ प. ०क्ष्येन । ६ व. तत्र । ७ प. ०रौ । ८ अ. व. ०रं इ० ।

त्याद्यन्तापेक्षया यथा—

" भुजङ्गकुण्डली व्यक्तः शशिशुभ्रांशुशीतगुः ।
जगन्त्यपि सदा पायादव्याच्चेतोहरः शिवः ॥ ६१४ ॥ "

इत्यादावेकस्मिन् पदे परिवर्तिते नालङ्कार इति शब्दनिष्ठोऽपरस्मिंस्तु परिवर्तितेऽप्यलङ्कार इत्यर्थाश्रय इत्युभयालङ्कारोऽयम् । अत एव शब्दालङ्काराणामर्थालङ्काराणां चान्तराले निवेशित इति ॥ २४ ॥

इति शब्दगतामलङ्कृतिं दधती भात्यरसापि भारती ।
कटकादिविभूषणाङ्किता हरते कृत्रिमपुत्रिकाऽप्यलम् ॥

इत्यलङ्कारमहोदधौ शब्दालङ्कारवर्णनो नाम सप्तमस्तरङ्गः ॥ ७ ॥



१ प. ०क्तशु० । २ प. ०र इत्यु० ।

# अथाष्टमस्तरङ्गः ।

अथार्थालङ्कारप्रस्तावनामाह—

शब्दालङ्कृतिभिः कामं सरस्वत्येककुण्डला ।
द्वितीयकुण्डलार्थं तद् ब्रूमोऽर्थालङ्कृतीरिमाः ॥ १ ॥

शब्दालङ्कृतिभिः पूर्वप्रतिपादितैः शब्दनिविष्टालङ्कारैरेककुण्डलैव देवी सरस्वती। तादृश्याश्च तस्यास्तथाविधं न शोभाशालित्वम्। तत् तस्मात् कारणाद् द्वितीयकुण्डलार्थं द्वितीयताडङ्कहेतोरिमा वक्ष्यमाणस्वरूपा अर्थालङ्कृतीरर्थावस्थितालङ्कारान् ब्रूमः कथयाम[3] इति ॥ १ ॥

अथ सर्वालङ्कारचैतन्यभूतत्वात् प्रथममतिशयोक्तिं विशेषतो लक्षयति—

भेदे वा सत्यभेदे वा प्रस्तुताप्रस्तुतात्मनाम् ।
सम्बन्धे वाऽप्यसम्बन्धे यो भवेत् तद्विपर्ययः ॥ २ ॥

गुणानां च क्रियाणां च लोकसीमातिवर्तिनी ।
प्रगल्भप्रतिभोल्लासादुत्कर्षभणितिश्च या ॥ ३ ॥

पौर्वापर्यविपर्यासो यश्च कारण—कार्ययोः ।
वदन्त्यतिशयोक्तिं तां सर्वालङ्कारजीवितम् ॥ ४ ॥

प्रस्तुतानि वर्ण्यमानवस्तूनि अप्रस्तुतानि तत्प्रतियोगीनि आत्मशब्दोऽत्र स्वरूपवाची। तेषां भेदे मिथः पृथक्त्वे सति यस्तद्विपर्ययः कश्चिदभेदो निबद्धो भवति। यथा—

---

१ व. शब्दनिष्ठा० । २ प. ०लीव । ३ प. ०मः । ४ अ. व. ०र्कित ल० । ५ व. प्रागल्भ्य० ।
६ प. वक्त्य० । ७ व. मानानि व० । ८ प. भति० । ९ प. ०द् भे० । १० प. व. बकुलव० ।

" कमलमनम्भसि कमले चं कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ? ॥ ६१५ ॥ "

अत्र मुखादीनां कमलाद्यैर्भेदेऽप्यभेदाध्यवसायः । इयं चातिशयोक्तिः साध्यवसानोपचारमूलेति ।

तथाऽभेदे वस्त्वैक्येऽपि तद्विपर्ययो भेदभणनम् । यथा—

*" अण्णं लडहत्तणयं अण्ण च्चिअ (य) का वि वत्तणच्छाया ।
सामा सामण्णपयावइस्स रेह च्चिअ न होइ ॥ ६१६ ॥ "

अत्र लटभत्वादीनामभेदेऽप्यन्यत्वेन भेदः ।

यथा वा—

+ " नारायणो त्ति परिणयवयाहिं सिरिवल्लहो त्ति तरुणीहिं ।
वालाहिं पुण कोऊहलेण एमेव सच्चविओ ॥ ६१७ ॥ "

अत्र विष्णोरेकस्यैव विषयविभागाद् भेदेनोपनिबन्धः ।

तथा सम्बन्धे योगेऽपि तद्विपर्ययोऽसम्बन्धनिबन्धो यथा—

" अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तद्युतिः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ६१८ ॥ "

अत्र पुराणप्रजापतिनिर्माणसम्बन्धेऽप्यसम्बन्धो निबद्धः ।

तथाऽसम्बन्धे योगाभावेऽपि सति तद्विपर्ययः सम्बन्धो यथा—

" उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ ६१९ ॥ "

---

* अन्यत् लटभत्वमन्या काऽपि वर्त(द)नच्छाया ।
श्यामा सामान्यप्रजापते रेखैव न भवति ॥

\+ नारायण इति परिणतवयस्काभिः श्रीवल्लभ इति तरुणीभिः ।
बालाभिः पुनः कुतूहलेनैवमेव दृष्टः ॥

अत्र व्योम्नो गङ्गाप्रवाहद्वयस्य च सम्भावितः सम्बन्धः ।

यथा वा—

" चन्द्रास्तत्र चलन्ति खेलति यतस्तन्व्या मुखं चेष्टते
दृष्टिर्यत्र ततोऽपि कन्दलयति प्रस्तारमिन्दीवरम् ।
यत्रोन्मीलति दन्तदीधितिरितोऽप्यामोदते कौमुदी
यस्मिन् बाहुलताऽपि वल्गति ततो वेल्लन्ति कल्लोलयः ॥ ६२० ॥

अत्र मुखादिखेलनस्थानानां चन्द्रभूयस्त्वादिभिरसम्बन्धे सम्बन्धारोपः । तथा गुणानां क्रियाणां च लोकमर्यादोल्लङ्घिनी सातिशयप्रतिभोन्मीलनाद् या काचिदुत्कर्षभणितिरतिप्रौढिख्यापनम् ।

तत्र गुणानां यथा—

" निपीतः पातालैः पशुपतिकपालैः कवलितः
समन्तादाचान्तस्तुहिनगिरिपर्यन्तकुहरैः ।
निमग्नो दिग्नागश्रुतिषु च तनोति स्म तदपि
प्रभो ! शब्दाद्वैतं जगति तव कीर्तेः कलकलः ॥ ६२१ ॥ "

अत्र कीर्तिकोलाहलमहत्त्वस्योत्कर्षः ।

यथा वा—

" स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये ! तव ।
अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्तते ॥ ६२२ ॥ "

अत्र तु मध्यतानवस्य ।

यथा वा—

"अत्युच्चाः परितः स्फुरन्ति गिरयः" इत्यादि । अत्र पुनर्भूपालभुजबलस्य ।

क्रियाणां यथा—

" भ्रातः ! कोक ! विमुञ्च शोकमसमं कान्तावियोगोद्भवं
यस्यागप्रणयी तथाऽयमभवद् देवश्चुलुक्येश्वरः ।

---

१ अ. ०के म० । २ प. ०भिरिति । ३ प. ०पु त० । ४ अ. च, प. तथा च ।

शैलः सोऽपि यथा हिरण्मयवपुः स्मर्तव्यतामेष्यति
व्यक्तं तत्र चिराद् भविष्यति दिनाद्वैतावदातं जगत् ॥६२४॥"

अत्र त्यागक्रियोत्कर्षः । तत्र कारणस्य प्राक्कालभावित्वं कार्यस्य चोत्तरकालभावित्वमित्यस्ति पौर्वापर्यक्रमनियमस्तस्यै च यो विपर्यासः कालव्यत्यासात् तुल्यकालत्वाद् वा विध्वंसो यथा—

" हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ ! लोचनविषयं त्वया भजता ॥ ६२५ ॥"

अत्र कार्मुकाधिष्ठानस्य कारणस्यै कामबाणाधिष्ठानस्य च कार्यस्य पूर्वापरकालेव्यत्यासः ।

यथा वा—

" सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पैत्र्यमखिलं चारिमण्डलम् ॥ ६२६ ॥"

अत्र सिंहासनाक्रमणस्य कारणस्यारिचक्राक्रमणस्यै कार्यस्य च कालतुल्यत्वमुक्तम् ।

तामेतां सर्वामप्यतिशयोक्तिं वदन्ति विद्वांसो ब्रुवते । कीदृशीम् ? सर्वालङ्कारजीवितम् । अलङ्कारा हि सर्वेऽप्यनयैव स्फुरद्रूपाः क्रियन्ते । एतां विना तु प्रमीतकल्पा एव । अत एवोक्तं केनापि—

" सैषा सर्वाऽपि वक्रोक्तिरनयाँऽर्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ? ॥ ६२७ ॥"

अपरोऽप्याह—

" अलङ्कारान्तराणामप्याहुरेकं परायणम् ।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥ ६२८ ॥"

अत एवास्याः सर्वेभ्यः प्रथमं लक्षणारम्भः । देवता-मुनि-मन्त्रादिप्रभावोत्कर्षोऽपि गुणोत्कर्ष एवेति । त्रिभिर्विशेषकम् ॥ २-४ ॥

---

१ प. हरिण्म० । २ प. ०स्य यो । ३ प. ०त्वाद् वि० । ४ प. ०स्य का० । ५ प. ०कालव्य० । ६ अ. न कार्यस्य का०; प. ० स्य काल० । ७ प. ०या वि० । ८ प. ०कप० ।

अथातिशयोक्तिसब्रह्मचारिणीं सहोक्तिमाह—

**सहार्थयोगे या मुख्यामुख्ययोरेकधर्मता ।**
**क्रोडस्थातिशयोक्तिः सा सहोक्तिरिति विश्रुता ॥ ५ ॥**

सहोर्थानां सह साकं सार्धं प्रभृतिशब्दानां योगे सम्बन्धे सति मुख्यं वर्ण्यमानत्वेन प्रधानँकारणभूतममुख्यं तु तदनुगामितया वर्ण्यमानत्वादप्रधानं कार्यभूतं तयोर्या काचिदेकधर्मता एकः क्रियारूपो गुणरूपो वा धर्मो ययोस्तौ तथा तयोर्भावः। या चेयमेकधर्मता सा सहोक्तिरिति विश्रुता विख्याता। तत्र क्रियारूपधर्मो यथा—

" कोकिलालापमधुराः सुगन्धिवनवायवः ।
यान्ति सार्द्धं जनानन्दैर्वृद्धिं सुरभिवासराः ॥ ६२९ ॥ "

अत्र वासराणां जनानन्दानां च कर्तृभूतानां वृद्धिं यान्तीति क्रियारूपमेकधर्मत्वम्। धर्मसम्बन्धश्च वासराणां शाब्दो जनानन्दानां पुनरार्थः।

यथा वा—

*" उज्झसि पियाइ समयं तह वि अरे ! भणासि कीस किसिअँ त्ति ।
उं अरिभरेण अयाणुअ ! मुँयइ बइल्लो वि अंगाइं ॥ ६३० ॥ "

अत्रापि युष्मदर्थप्रिययोः कर्मभूतयोरुह्यस इति क्रियारूपं धर्मैक्यम्। मालारूपा त्वेका दीपकोपस्कृता तद्रहिता च दृश्यते। यथा—

+" धीरेण समं जामा हिअएण समं अणिट्ठिआ उवँएसा ।
उत्सा(च्छा)हेण सँहं भुआ वाहेण समं गलंति से उल्लावा ॥६३१॥ "

---

* उह्यसे प्रियया समदं तथापि अरे ! भणसि कथं कृशितेति ।
पश्यारिभरेणाज्ञ ! मुञ्चति बलीवर्दोऽप्यङ्गानि ॥

+ धैर्येण समं यामा हृदयेन सममनिष्ठिता उपदेशाः ।
उत्साहेन समं भुजौ बाष्पेण समं गलन्ति तस्य उल्लापाः ॥

---

१ व. स्रुता । २ प. ०ह सार्था० । ३ प. व. ०नं का० । ४ प. ०पधम० । ५ प. ०यत्ति । ६ प. ओ । ७ अ. ०णु मु० । व. मुअइ । ८ अ. व. ०पं स्वे० । ९ प. जन्मो । १० प. ड पए० । ११ प. भुषा, व. समं० ।

अत्र गलन्तीति क्रियारूपं सर्वान् प्रत्येकधर्मत्वमिदमेव दीपकं च ।

तद्रहिता च[1] यथा—

" उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्कं मुखैर्नामितं
भूपानां जनकस्य संशयधिया सार्धं समास्फालितम् ।
वैदेहीमनसा समं च सहसा कृष्टं ततो भार्गव-
प्रौढाहंकृतिकन्दलेन च समं भग्नं तदैशं धनुः ॥ ६३२ ॥ "

गुणरूपधर्मा यथा—

" सह दीर्घा मम श्वासैरिमाः सम्प्रति रात्रयः ।
पाण्डुराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः ॥ ६३३ ॥ "

अत्र रात्रीणां श्वासाङ्गानां च दैर्घ्यगुणेन पाण्डुरत्वगुणेन चैकधर्मत्वम् । इयं च सहोक्तिः प्रायः क्रोडस्थातिशयोक्तिरेवोपनिबद्धव्या । यथाऽत्रैव कोकिलालापेत्यादौ । अत्र हि वासरवृद्धिः कारणम्, जनानन्दवृद्धिश्च कार्यम् । तयोः समकालोक्तौ[2] पौर्वापर्यविध्वंसेनातिशयोक्तिः स्फुरन्ती प्रतिभातीत्येवं सर्वत्र विचार्यम् । तत्परिमलमन्तरेण पुनः—

' अनेन सार्द्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु । '

इत्यादावपि सहोक्तिप्रसङ्गः ।

' अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि । '

इत्यत्र पुनरस्तं प्रयात इत्यस्तैक[3]क्रियायोगोऽस्ति च भेदेऽप्यभेद इत्येवंरूपाऽतिशयोक्तिरस्त्वमित्यस्योभयार्थत्वादिति ॥ ५ ॥

अथैतस्या एव स्वरूपान्तरमाह—

**सहार्थानां परित्यागादिवादीनां परिग्रहे ।**
**गर्भीकृतोपमारूपा सेयमौपम्यगर्भिता ॥ ६ ॥**

---

१ अ. च उ० । २ ब. ०क्तिः स्फु० । ३ प. ०स्तै० ।

सहार्थान् परित्यज्येवादीनां परिग्रहे सत्युपमारूपं गर्भे कुर्वाणा सहोक्तिरे-वौपम्यगर्भिता इत्युच्यते । यथा—

" धत्ते पत्युः प्रभाणां नलिनवनमिव ज्योतिरुज्जागरत्वं
भर्तुर्वारान्तरङ्गा इव तुहिनरुचेरंसवः सङ्कुचन्ति ।
रामाणां कामलीला इव च कुमुदिनीसम्पदः संम्रियन्ते
शोकः कोकाङ्गनानामिव तिमिरभरः स्तोकतां च प्रयाति ॥६२६॥"

अत्र नलिनवनादिभिर्ज्योतिरादीनामिवशब्देनौपम्यं द्योत्यते । सहार्थस्तु वाक्यार्थसामर्थ्येनैव लभ्यते ॥ ६ ॥

अथातिशयोक्तिसौरभतरङ्गितामेव सकलालङ्कारबीजभूतामुपमां लक्षयति—

**यदुत्कर्षवताऽन्येन तत्स्वरूपप्रतीतिकृत् ।**
**भेदाभेदे मनोहारि साधर्म्यं वर्ण्यवस्तुनः ॥ ७ ॥**
**सर्वालङ्कृत्युपादानकारणं सोपमा स्मृता ।**

वर्ण्यवस्तुनो वर्ण्यमानस्य प्रकृतस्योपमेयभूतस्य वस्तुनोऽन्येन प्रकृतेनोप-मानभूतेन वस्तुना यत् साधर्म्यं समानधर्मत्वं सा उपमानामालङ्कृतिः स्मृता पूर्वाचार्यैः कथिता । कथम्भूतेनाप्रकृतेन वस्तुनोत्कर्षवताऽत्यन्तमुत्कर्षशालिना । न ह्युत्कर्षधर्षितेनोपमानेन किमप्युपमेये सौन्दर्यमाधीयते । अत एवोक्तं तत्स्वरूप-प्रतीतिकृद् इति । तस्योपमानस्य यत् स्वरूपं परिस्पन्दविशेषस्तस्य प्रतीतिं करोति यत् साधर्म्यम् । उपमेये ह्युपमानस्वरूपप्रतीतौ कोऽपि सातिशयः प्रकर्षः । तत एवोक्तं भेदाभेदे इति । व्यतिरेके हि भेदप्राधान्यम् । रूपके चाभेदप्राधान्यम् । अस्यां पुनर्भेदाभेदप्राधान्यम् । यदाहुः—'यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इति उपमानोपमेययोर्हि कारणभेदेन भेदः । समान-धर्माभ्यासात् पुनरभेदः । किञ्चिदभेदप्रतीतौ ह्युपमानस्वरूपस्योपमेयगतत्वेना-ध्यवसायादौपम्यं प्रकल्प्यते । पुनः कीदृशं साधर्म्यं मनोहारि सचेतनचेतश्चम-

१ प. ०ज्जारकत्वं । २. प. व. संम्रिय० । ३ ब. द्योतयति । ४ अ. ०र्म्यं च वस्तु० । ५ अ. ०नाप्र० । ६ अ. ०नाल०,. प. ०माल० । ७ ब. प. ममुत्क० ।

त्कारि तेन सत्त्व–ज्ञेयत्व–प्रमेयत्व-वृत्तत्वादिमात्रसाधर्म्येणोपमा यथा कुम्भ इव मुखमित्यादि। शृङ्गारादौ हास्यादौ तु न दोष इति। उपमायाः स्वरूपविशेषणमाह–सर्वालङ्कृतीत्यादि। सर्वासां रूपकाद्यलङ्कृतीनामियमेवोपादानकारणं समवायिकारणभूतेत्यर्थः। अत एव ताभ्यः प्रथममुपदिष्टेति।

तद्भेदानाह—

इयं च पूर्णा लुप्तेति बिभर्ति द्विप्रकारताम् ॥ ८ ॥

इयं चोपमा पूर्णा लुप्ता चेति द्विप्रकारतां बिभर्ति धारयतीति ॥ ८ ॥

अथ पूर्णामाह—

सामान्यस्योपमानोपमेययोर्द्योतकस्य च।
प्रयोगे प्रथमा वाक्ये समासे प्रत्ययेऽपि च ॥ ९ ॥

सामान्यस्य साधारणधर्मस्योपमानोपमेययोश्च द्योतकस्य चोपमाप्रकाशकस्य इव–वा–यथाऽऽदेः सम–सदृश-सन्निभादेश्च शब्दस्य समस्तानामप्येषां प्रयोगे प्रथमा पूर्णोपमा। सा च क्व भवतीत्याह–वाक्ये समासे प्रत्ययेऽपि च। तत्र वाक्ये यथा—

" कमलमिव चारु वदनं मृणालमिव[3] कोमलं भुजायुगलम्।
अलिमालेव च नीला तवैव मदिरेक्षणे! कबरी ॥ ६३७ ॥ ".

समासे यथा—

" अत्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार ॥६३८॥

अत्र भुजैरिवेत्यत्र कैश्चिदिवेन सह विभक्त्यलोपे नित्यसमासो मन्यते। तन्मतानुसारेणेयं समासे पूर्णोपमा।

---

१ प. युगली। २ अ, चेति। ३ प. ०लकमि०। ४ प. ०हदारैः।

प्रत्यये यथा—

" गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥ ६३९ ॥ "

एवमादाविवादिद्योतकशब्देभ्य एव साक्षादौपम्यप्रतीतिरिति श्रौती पूर्णोपमा । आर्थी वाक्ये यथा—

" चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते ॥ ६४० ॥

समासे यथा—

" अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर ! न कस्य ? ॥ ६४१ ॥ "

इत्यादिषु तु समादिद्योतकशब्दसद्भावेऽपि तात्पर्यार्थपर्यालोचनेनौपम्यप्रतीतिरित्यार्थी पूर्णोपमा ॥ ९ ॥

अथ लुप्तामाह—

**लुप्तैकद्वित्रिलोपे स्यात् तद्वद् धर्मादिषु स्थिते ।**

धर्मादिषु धर्मोपमानोपमेयद्योतकेष्वेकस्य द्वयोस्त्रयाणां वा लोपे स्थिते सञ्जाते सति लुप्ता नामोपमा । साऽपि तद्वत् पूर्णोपमावद् वाक्ये समासे प्रत्ययेऽपि च भवति ।

तत्र वाक्ये यथा—

" राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।
रम्भास्तम्भाविवोरू च करिकुम्भाविव स्तनौ ॥ ६४२ ॥ "

---

१ अ. ०णहा० । २ व. ०विदं ध० । ३ प. भगवा० ।

अत्र साधारणधर्मलोपः ।

यथा वा—

" त्वन्मुखं पुण्डरीकं च फुल्ले सुरभिगन्धिनी ।
कोमलापाटलौ तन्वि ! पल्लवश्चाधरश्च ते ॥ ६४३ ॥ "

अत्र द्योतकलोपः ।

द्विलोपे यथा—

" *ढुंढुल्लंतु मरीहिसि[1] कंटयकलिआइं केअईअवणाइं ।
मालइकुसुमेण समं भमर ! भमंतो न पाविहिसि ॥ ६४४ ॥ "

अत्र धर्मोपमानयोर्लोपः ।

समासे यथा—

" मुखमिन्दुसुन्दरं ते बिसकिसलयकोमले भुजालतिके ।
जघनस्थली च सुन्दरि ! तव शैलशिलाविशालेति ॥ ६४५ ॥ "

अत्र द्योतकलोपः ।

द्विलोपे यथा —

' ढुंढुल्लंतु मरीहसि ' इत्यादि गाथायां ' मालइकुसुमसरिच्छं ' इति समासे कृते धर्मोपमानयोर्लोपः ।

त्रिलोपे यथा—

" तरुणिमनि कृतावलोकना ललितविलासविलम्बितविग्रहा[2] ।
स्मरशरविशरारितान्तरा मृगनयना नयते मुनेर्मनः ॥ ६४६ ॥ "

---

* गवेषयन् मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमेन समं भ्रमर ! भ्रमन् न प्राप्स्यसि ॥

---

१ अ. मिरी० । २ अ. ०ब्ध० ।

अत्र मृगनयने इव नयने यस्या इति समासे धर्मोपमानद्योतकानां लोपः।

प्रत्यये यथा—

" सूर्यायति सुधारश्मिमनाथति मृतायते ।
मृतस्तु कान्ताविरहे स्वर्गेऽपि नरकायते ॥ ६४७ ॥ "

अत्र द्योतकलोपः । अनाथतीत्यत्र तु द्योतकसामान्ययोर्द्वयोर्लोपः ।

यथा वा—

" हंसो ध्वाङ्क्षविरावी स्यादुष्ट्रक्रोशी च कोकिलः ।
खरनादी मयूरोऽपि त्वं चेद् वदसि वाग्मिनि ! ॥ ६४८ ॥ "

अत्रापि ' कर्तुर्णिन् ' [ हैम ५।१।१५३ ] इति णिनि प्रत्यये द्योतकलोपः।

यथा वा—

" मृधे निदाघधर्मांशुदर्श पश्यन्ति तं परे ।
स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः ॥ ६४९ ॥ "

अत्र द्योतकलोपः ।

यथा वा—

" पूर्णेन्दुकल्पवदना मृणालीदेश्यदोर्लता ।
चक्रदेशीयजघना सा स्वप्नेऽपि न दृश्यते ॥ ६५० ॥ "

अत्र धर्मलोपो द्योतकार्थस्तु कल्पत्वादिभिः साक्षादभिहितः । ईषदपरिसमाप्तः पूर्णेन्दुरिति पूर्णेन्दुसदृशमित्यर्थः । न तु पूर्णेन्दुरेवेति रूपकं नाशङ्कनीयम् ।

द्विलोपे यथा—

" गङ्गीयत्यसितापगा फणिगणः शेषीयति श्रीपतिः
श्रीकण्ठीयति कैरवीयति दलनीलोत्पलानां वनम् ।

---

१ ब. ०तकलो० । २ प. मृगाय० । ३ अ. च । ४ प. सा न स्व० । ५ प. दीपकं ।

कर्पूरीयति कज्जलं पिककुलं लीलामरालीयति
स्वःकुम्भीयति कुम्भिनामपि घटा यत्कीर्तिसम्पर्कतः ॥६५१॥ ”

अत्र गङ्गामिवात्मानमाचरत्यसितापगेत्यादि[1]ष्वात्मनो[2] द्योतकस्य च लोपः । इयं लुप्तोपमाऽपि यथायोगं श्रौती चार्थी च ज्ञातव्या ।

अथोपमाया एव भेदानाह—

धर्मस्य तस्यामेकत्वं सर्वानुगतया क्वचित् ॥ १० ॥

तस्यामुपमायां क्वचित् कस्मिंश्चित् कविप्रौढिनिर्मिते काव्ये सर्वानुगतया सर्वोपमानानामुपमेयस्य चानुगामित्वेन धर्मस्यैकत्वमेकरूपत्वम् । यथा—

“ प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥ ६५२ ॥ ”

अत्र पूतश्च विभूषितश्चेत्येक एव धर्मः सर्वाननुगच्छति । इयमेव मालोपमा ॥ १० ॥

तथा—

क्वचित् पृथग्विनिर्देशः प्रतिवस्तूपमानवत् ।

यथा प्रतिवस्तूपमायां तथा क्वचित् कस्यांचित्[3] उपमायामुपमाने उपमेये च धर्मस्य पृथक् पृथग् निर्देशः । यथा—

“ यान्त्या मुहुर्वलितकन्धरमाननं त—
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ ६५३ ॥ ”

अत्र वलितत्वावृत्तत्वे[4] द्वयोरप्युपमानोपमेययोरेकार्थौ पृथक् पृथग्धर्मौ निबद्धौ ।

---

१ प. ०पगामि० । २ प. ०त्यात्म० । ३ व. कस्मिंश्चि० । ४ प. ०तत्वावृ० ।

तथा—

दृष्टान्तवत् क्वचिद् बिम्ब–प्रतिबिम्बमनोज्ञता ॥११॥

यथा दृश्यन्ते तथा कस्मिंश्चिदुपमाभेदे द्वयोरप्युपमानोपमेययोर्धर्मद्वयस्य बिम्ब–प्रतिबिम्बमनोहरत्वम् । यथा—

" पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥ ६५४ ॥ "

अत्र हाराङ्गरागयोर्धर्मयोर्निर्झर–बालातपौ प्रतिबिम्बत्वेन निबद्धौ ॥११॥

पुनः कांश्चिदुपमाभेदानाह—

साऽनेकद्योतका सर्वद्योतका द्योनकोज्झिता ।
धातुद्योत्या विपर्यासवती वैधर्म्यशालिनी ॥ १२ ॥
नियमानियमोपेता विक्रयातिशयाङ्किता ।
प्रतिषेधाद्भुता श्लिष्टा श्लेषोत्प्रेषितवत्यपि ॥ १३ ॥[२]

अनेकं द्विप्रभृतिर्द्योतकं पदं यस्यां सा । यथा—

" दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान् विशेषान् ज्योत्स्नान्तराणीव कलान्तराणि ॥६५५॥ "

अत्रैकवाक्येऽपि द्योतकद्वयस्य प्रयोगः ।

तथा सर्वं सर्वोपमानगतं द्योतकं यस्यां सा । यथा—

" अलिवलयैरलकैरिव कुसुमस्तबकैः स्तनैरिव वसन्ते ।
भान्ति लता ललना इव पाणिभिरिव किसलयैरधिकम् ॥ ६५६ ॥ "

अत्र सर्वोपमानेषु द्योतकनिवेशः ।

तथा द्योतकेनोज्झिता त्यक्ता । यथा—

---

१ प. ०हार० । २ प. यामलम् । ३ प. ०ति प० । ४ व. तथा । ५ व. तथा ।

" दिवो जागर्ति रक्षायै पुलोमारिर्भुवो भवान् ।
अमुरास्तेन हन्यन्ते सावलेपा नृपास्त्वया ॥ ६५७ ॥ "

तथा धातुना द्योतकीभूतेन द्योत्यते या सा । यथा—

" पूर्णेन्दोस्तव संवादि वदनं वनजेक्षणे ! ।
पुष्णाति पुष्पचापस्य जगत्त्रयजिगीषुताम् ॥ ६५८ ॥ "

यथा वा—

" निपीयमानस्तबका शिलीमुखैरशोकयष्टिश्चलबालपल्लवा ।
विडम्बयन्ती ददृशे वधूजनैरमन्ददष्टौष्ठकरावधूननम् ॥ ६५९ ॥"

तथोपमानोपमेययोर्विपर्यासो व्यत्ययो यस्यां सा । यथा—

" यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये ! तव मुखच्छायाऽनुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ ६६० ॥ "

अत्रेन्दीवरादीनां नेत्रादीन्युपमानानीति विपर्यासः । न चात्र वक्ष्यमाण-प्रतीपालङ्कारशङ्का कार्या विपर्यासस्योपमानतिरस्कारहेतुत्वाभावात् ।

तथा साधर्म्यविपक्षभूतं वैधर्म्यं तेन शालते या सा । यथा[3]—

" प्रहितः प्रधनाय माधवानहमाकारयितुं महीभुजा ।
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥ ६६१ ॥ "

अत्रापकुर्वन्तीत्यस्य विपक्षभूतं नापकुर्वन्तीति वैधर्म्यम् ।
नियमोऽन्यसाम्यनिवृत्तिस्तेनोपेता । यथा—

---

१ प. अ. ०भिरामः । २ अ. ०नानि । ३ प. तथा ।

" मुखं ते शशिनैवेदं तुल्यं नान्येन केनचित् ।
मृगाक्षि ! समतामेति सुधयैव वचः पुनः ॥ ६६२ ॥ "

अनियमस्तद्विपर्ययस्तदुपेता । यथा—

" मुखमम्भोरुहं तावत् तवान्वेति कृशोदरि ! ।
यदीदृगन्यदप्यस्ति तदप्यायातु तुल्यताम् ॥ ६६३ ॥ "

विक्रिया वस्तुविकारस्तदङ्किता । यथा—

" इन्दुबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम् ।
वदनं तव तन्वङ्गि ! विमृशद्भिर्विभाव्यते ॥ ६६४ ॥ "

अतिशयः प्रकर्षस्तदङ्किता । यथा—

" त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः ।
इयानेवानयोर्भेदो मृगशावाक्षि ! नापरः ॥ ६६५ ॥ "

प्रतिषेध औपम्यनिषेधस्तेनाश्लिष्टा । यथा—

" कलङ्किनः प्रिये ! दोषाकरस्य च जडस्य च ।
न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ॥ ६६६ ॥ "

अद्भुतमाश्चर्यं तेनाश्लिष्टा । यथा—

" यदि किञ्चिद् भवेत् पद्मसुद्भ्रु विभ्रान्तलोचनम् ।
तत् ते मुखश्रियं धर्तुमिदमुत्सहतां प्रिये ! ॥ ६६७ ॥ "

अर्थानामेकशब्दप्रतिपाद्यत्वं श्लेषस्तद्वती । यथा—

" शिशिरांशुप्रतिद्वन्द्वि श्रीमत् सुरभिगन्धि च ।
अम्भोजमिव रम्भोरु ! विभाति वदनं तव ॥ ६६८ ॥ "

यत् किञ्चिदसद् वितर्क्यते तदुत्प्रेक्षितं तद्वती । यथा—

" मन्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनैः ।
विकस्वरे सरोजेऽपि यद्वत् सत्येव साऽन्वहम् ॥ ६६९ ॥

एवमन्याऽपि—

" चन्द्रारविन्दयोः कक्षामतिक्रम्य मुखं तव ।
आत्मनैव कुरङ्गाक्षि ! तुल्यतां कलयत्यदः ॥ ६७० ॥ "

इत्यसाधारणोपमाऽऽदयः कविभणितिभङ्गयः सम्भवन्ति । तास्त्वनन्तत्वादुदाहर्तुं न शक्यन्ते इति ॥ १२–१३ ॥

अथोपमाया एव वास्तवं स्वरूपमाह—

एषा च लौकिकी लोकप्रसिद्धेरनुरोधतः ।

एषा च सर्वाऽप्युपमा लोकप्रसिद्धेरनुरोधाल्लौकिकी कोऽर्थो लोकप्रसिद्धमुपमानं लोकप्रसिद्धमुपमेयं च यस्यां सा लौकिकी । यथा—' कमलमिव मुखम् ' इत्यादि । न पुनः ' कुमुदमिव मुखम् ' इत्यादि । यदि वा लोकाचरिता लौकिकी । यथा—

" स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६७१ ॥ "

अथ कल्पितामाह—

या कविप्रतिभोन्मेषकल्पिना कल्पिता तु सा ॥ १४ ॥

सा पुनः कल्पिता या कवेः प्रतिभोन्मेषेण नवनवोल्लेखशालिप्रज्ञाविशेषोल्लासेन कल्पिता निष्पादिता । यथा—

" हंसानां निनदेषु यैः कवलितैरासाद्यते कूजता—
मन्यः कोऽपि कषायकण्ठलुठनादाघर्घरो विभ्रमः ।

१ ब. ०बद्ध० । २ प. यैः ।

ते सम्प्रत्यकठोरवारणवधूदन्ताङ्कुरस्पर्द्धिनो
निर्याताः कमलाकरेषु बिसिनीकन्दाग्रिमग्रन्थयः ॥ ६७२ ॥"

अत्र धातुद्योत्यापि । यथा च—

"सम्बन्धी रघुभूभुजां मनसिजव्यापारदीक्षागुरु-
गौराङ्गीवदनोपमापरिचितस्तारावधूवल्लभः ।
सद्योमार्जितदाक्षिणात्यतरुणीदन्तावदातद्युति-
श्चन्द्रः सुन्दरि ! दृश्यतामयमितश्चण्डीशचूडामणिः ॥ ६७३ ॥"

यथा वा—

"उद्गर्भहूणतरुणीरमणोपमर्दभग्नोन्नतिस्तननिवेशनिभं हिमांशोः ।
बिम्बं कठोरबिसकाण्डकडारगौरैर्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥६७४॥"

यथा वा—'सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गकम्' । इति ।

एवमुक्तानुसारेणान्यापि काचिद् रसनोपमाप्रभृतिरुपमा स्वयमभ्यूह्या । अत्र सर्वत्राप्यसम्बन्धे सम्बन्ध इत्यादिरूपः कोऽप्यतिशयोक्तिपरिमलो विद्यत एवेति ॥ १४ ॥

अथौपम्यप्रस्तावादनन्वयमाह—

**एकस्यैवोपमानोपमेयत्वे स्यादनन्वयः ।**

एकस्यैव प्रकृतस्यैवोत्कर्षदानाय सदृशवस्त्वन्तरनिवृत्त्यर्थं यदुपमानत्वमु-पमेयत्वं च कल्प्यते । तस्मिन् सति द्वितीयसदृशानुगमाभावादनन्वयः स्यात् । यथा—

"त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।
त्वन्मूर्तिरिव मूर्तिस्ते त्वमिव त्वं कृशोदरि ! ॥ ६७६ ॥"

---

१ प. णोष्मधर्म० । २ प. च । ३ अ. व. ०मुंडि० ।

अत्र त्वमेवेदृशी नापरेत्यनन्वयेन प्रकाश्यते। इहाभेदे भेद इत्येवंरूपाऽतिशयोक्तिर्द्रष्टव्या[1]। एवमुत्तरत्रापि सर्वत्र यथासम्भवं क्वचित् कदाचिदतिशयोक्तिर्ज्ञातव्या।

अथोपमेयोपमामाह—

**उपमेयोपमा भिन्नवाक्यस्थे व्यत्यये तयोः॥ १५॥**

तयोरुपमानोपमेययोर्व्यत्यये विपर्यये[2] भिन्नवाक्यस्थे द्वितीयवाक्यस्थिते सत्युपमेयोपमा। इयं साधारणधर्मस्य प्रयोगा[3]दप्रयोगाच्च द्विधा। तत्राद्या यथा—

" सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः।
वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः॥ ६७७॥ "

अत्र सच्छायेति साधारणधर्मः।

द्वितीया यथा—

" खमिव जलं जलमिव खं हंसश्चन्द्र इव हंस इव चन्द्रः।
कुमुदाकारास्तारास्ताराऽऽकाराणि कुमुदानि॥ ६७८॥ "

अत्र भिन्नवाक्यत्वभणनादेकवाक्यत्वं पूर्वस्मिन्नन्वये सिद्धमेव॥ १५॥

अथ सादृश्यप्रस्तावादेव स्मरणमाह—

**स्मरणं यो[4] स्मृतिस्तुल्यदर्शनात् प्रतिवस्तुनः।**

तुल्यदर्शनात् सदृशावलोकनात् प्रतिवस्तुनोऽनुभूतवस्त्वन्तरस्य या स्मृतिस्तत् स्मरणम्। यथा—

" अदृश्यन्त पुरस्तेन खेलाः खञ्जनपङ्क्तयः।
अस्मर्यन्त विनिःश्वस्य प्रियानयनविभ्रमाः॥ ६७९॥ "

---

१ प. द्रष्टव्या। २ व. ०पर्यासे। ३ प. ०गत्वाच्च। ४ अ. या।

सदृशावलोकनं विना तु स्मृतिर्नायमलङ्कारः। यथा—

" अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम् ॥ ६८० ॥ "

ईत्यादौ प्रागुदाहृते व्यभिचारिणि अत्र च कर्तृविशेषणानां स्मर्तव्यदशाभावित्वे स्मर्तुर्दशाभावित्वमसमीचीनमिति।

अथ सादृश्यहेतुकत्वेनैव स्मरणानुयायिनं संशयमाह—

**संशयः स तु सन्दिह्यमानत्वं प्रकृतस्य यत् ॥ १६ ॥**

स पुनः संशयाख्योऽलङ्कारो यत् प्रकृतस्य वर्ण्यमानस्य सदृशप्रस्तावादप्रकृतेन केनापि सदृशवस्तुना सन्दिह्यमानत्वं सन्देहविषयत्वं स च संशयः शुद्धो निश्चयगर्भो निश्चयान्तश्च।

तत्र शुद्धो यत्र संशय एव पर्यवसानम्। यथा—

" सेयं किं कालरात्रिः किमुत पितृपतिग्रहजिह्वालतेयं
किं वा कालीकटाक्षद्युतिरियमथवा देहिनी दुर्दशेयम्।
इत्थं सङ्ग्रामरङ्गाङ्गणभुवि नटनापाटवं नाटयन्तीं
दृष्ट्वा यस्यासियष्टिं प्रतिनृपतिभटैः स्वैरमूहाम्बभूवे ॥ ६८१ ॥"

अत्र रूपकृतं सादृश्यम्।

यथा वा—

" आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं यदेतदपरं यच्चैकनिष्ठं मनः।
मौनं चेदमिदं च शून्यमखिलं यद् विश्वमाभाति ते
तद् ब्रूयाः सखि ! योगिनी किमसि भोः ! किं वा वियोगिन्यसि ? ॥६८२॥"

---

१ प. ०शालो०। २ अ. ०ना स्मृ०। ३ प. ०तैरपनी०। ४ प. अत्रादौ। ५ अ. यद्।

अत्रार्थसादृश्यम् ।

निश्चयगर्भो यथा—

" अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥ ६८३ । "

निश्चयान्तो यथा—

" मैनाकः किमयं रुणाद्धि गमने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद् भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
आः ! ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥ ६८४ ॥ "

अत्र च कविप्रतिभोन्मीलितः संशयो ग्राह्यो न पुनः स्थाणुर्वा पुरुषो वेति । सादृश्यव्यतिरिक्तविषयं तु सन्देहं वितर्काख्यमलङ्कारान्तरमन्ये मन्यन्ते-ऽस्मन्मते तु विना सादृश्याधिकारमनेनैव सङ्गृहीतत्वान्न पृथग् लक्षणारम्भः । तथाहि-यत् प्रकारान्तरेणापि प्रकृतिविषयं सन्दिह्यमानत्वं स संशय इति । यथा'अस्याः सर्गविधौ प्रजापतिरभूत्'इत्यादिः। अत्रातिशयोक्त्या संशयस्य संकरः।

यथा च—

" अयमसौ भगवानुत पाण्डवः स्थितमवाङ्मुनिना शशिमौलिना ।
समधिरूढमनेन तु जिष्णुना स्यादिति वेगवशान्मुमुहे गणैः ॥ ६८५ ॥ "

क्वचिदारोप्यमाणानां भिन्नाश्रयत्वेनापि दृश्यते । यथा—

" रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ? ।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥ ६८६ ॥ "

---

१ व. नैव । २ अ. गगने । ३ प. सन्मा० । ४ व. ०पव० । ५ अ. ०त्र क० । ६ व. वा । ७ अ. व. कु०, प. न ।

अत्रारोपविषये तिमिरे सत्यपि रागादिकं तदादिभिन्नाश्रयत्वेनारोपितम् । केचित् तु तिरस्कृततत्स्वरूपविषयनिगरणेनेमं सन्देहभेदमतिशयोक्तिप्रकारमाहुः । अन्ये तु नुशब्दस्य सम्भावनाद्योतकत्वं मत्वोत्प्रेक्षाप्रकारमिममाचक्षते ॥१६॥

अथ सादृश्याश्रयत्वादेव भ्रान्तिमन्तमाह—

**भ्रान्तिमान् वैपरीत्येनाप्रतीतिः सदृशेक्षणात् ।**

सदृशवस्त्वन्तरदर्शनात् वैपरीत्येन विपर्ययेण या प्रतीतिः स भ्रान्तिमान् भ्रान्तिर्विद्यते यत्रेति कृत्वा । सा च भ्रान्तिरतत्त्वे तत्त्वबुद्धिस्तत्त्वेऽप्यतत्त्वबुद्धिश्चेति द्विविधा । तत्रातत्त्वे तत्त्वबुद्धिर्यथा—

" कपाले मार्जारः पय इति करान् लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति ।
रतान्ते तल्पस्थान् हरति दयिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो ! विभ्रमयति ॥ ६८७ ॥ "

अत्रेन्दुमरीचिषु क्षीरप्रभृतिभ्रान्तिः ।

यथा वा—

*"हसियं सहत्थयालं सुक्कवडं आगएहिं पहिएहिं ।
पत्त-प्फलसारिच्छे उड्डीणे पूसवंदम्मि ॥ ६८८ ॥ "

अत्र दूरस्थानां न्यग्रोधस्थे शुकवृन्दे पत्र-फलभ्रान्तिः ।

तत्त्वेऽप्यतत्त्वबुद्धिर्यथा—

---

* हसितं सहस्ततालं शुष्कवटमागतैः पथिकैः ।
पत्र-फलसदृशे उड्डीने शुकवृन्दे ॥

---

१ प.-०पविरोपवि० । २ प. ०यगतत्वे० । ३ न. करान् । ४ न. पक्ष० ।

"समर्थये यत् प्रथमं प्रियां प्रति क्षणेन तन्मे परिवर्ततेऽन्यथा ।
अतो विनिद्रे सहसा विलोचने करोमि न स्पर्शविभावितप्रियः ॥६८९॥ "

अत्र प्राप्तलतारूपोर्वशीपरिष्वङ्गसुखनिमीलिताक्षस्य पुरूरवसः शापान्ताविर्भूतसत्यरूपायामपि तस्यां वस्त्वन्तरभ्रान्तिः ।

यथा वा—

+" सो मुद्धमओ मायण्हिआहिँ तह दूमिओ हयासाहिँ ।
जह सब्भावमईण वि नईण वि परंमुहो जाओ ॥ ६९० ॥ "

अत्र सत्यनदीष्वपि मृगतृष्णाभ्रान्तिः ।

मालारूपोऽप्येष यथा—

" नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः ।
लीयन्ते कबरीषु बान्धवकुलव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति भवती स्थानानि रक्षिष्यति ? ॥६९१॥ "

अत्र युवत्यवयवेषु नयनादिषु मधुपानां नीलोत्पलादिभ्रान्तिः ।
गाढमर्मप्रहारादिना तु भ्रान्तिर्नास्य विषयः । यथा—

" दामोदरकराघातचूर्णिताशेषवक्षसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥ ६९२ ॥ "

सादृश्यहेतुकाऽपि भ्रान्तिर्विच्छित्त्यर्थं कविप्रतिभोत्थापितैव गृह्यते, नापरा-शुक्तिकायां रजतभ्रान्तिवत् ।

---

+ स मुग्धमृगो मृगतृष्णिकाभिस्तथा दूनो हताशाभिः ।
यथा सद्भाववतीभ्योऽपि नदीभ्योऽपि पराङ्मुखो जातः ॥

---

१ अ.० आएहिँ । २ प. ०धुराः । ३ अ. ०ष्यते ।

अथैकस्याप्यनेकरूपताऽऽरोपाद् भ्रान्तिमत्सब्रह्मचारिणमुल्लेखमाह—

उल्लेखो विविधाद् हेतोरेकस्यानेकधा ग्रहः ॥ १७ ॥

विविधादनेकरूपाद् हेतोः कारणात् यः कश्चिदेकस्यानेकधा बहुप्रकारो ग्रहणं स एष रूपबाहुल्योल्लेखनादुल्लेखः । अत्र च रुच्यर्थित्व-व्युत्पत्तयो यथासम्भवं हेतवः । यदुक्तम्—

" यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते ।
आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधितः ॥ ६९३ ॥ "

अत्रोदाहरणं यथा श्रीहर्षचरिते श्रीकण्ठजनपदवर्णने यस्तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः, सङ्गीतशालेति लासकैरित्यादि । अत्रैक एव श्रीकण्ठस्तत्तद्गुणयोगात् तपोवनाद्यनेकरूपतया निरूपितः । नन्वेतन्मध्य एव वज्रपञ्जरमिति शरणागतैः, असुरविवरमिति वातिकैरित्यादौ रूपकयोग एवास्ति; तदिहापि स एवास्तु, किमुल्लेखभणनेनेत्यत्रोच्यते-अस्ति तावद् यस्तपोवनमित्यादौ रूपकादुल्लेखस्य विविक्तो विषयो यत्र धार्मिकजनाकीर्णत्वादिना वस्तुवृत्त्यैव जनपदस्य तपोवनादिरूपतायाः सम्भवः । यत्र पुनर्वज्रपञ्जरमित्यादावतद्रूपस्य तद्रूपताऽऽरोपाद् रूपकस्यातादृशस्य तादृशत्वप्रतीतेर्भ्रान्तिमतश्च सम्भवस्तत्राप्येषा भङ्गिः सम्भवत्येव । ततस्ताभ्यामस्तु सङ्करः । सर्वथाऽप्यस्याभावे वस्तु न शक्यते वक्तुमेवमभेदरूपाणामतिशयोक्तावप्येष नान्तर्भवत्यनेकधात्वोट्टङ्कनस्याधिकत्वात् । सङ्करस्तु तयाऽप्यस्त्येव । यथा—'नारायणु त्ति परिणयवयाहिँ ' इत्यादौ । 'गुरुर्वचसि पृथुरुरसि, अर्जुनो यशसि ' इत्यादौ तु रूपकप्रतिभोत्पत्तिहेतुः श्लेष एव बहुधोट्टङ्कनमात्रात् । पुनर्यद् यस्यापि [ क ]श्चिदंशः सम्भवति, तदनेनापि सङ्करोऽस्तु । ' युधिष्ठिरः सत्यवचसि ' इत्यादौ रूपकमेवेति ॥ १७ ॥

अथ सादृश्यप्रक्रमे भेदप्रधानानलङ्कारानभिधायाभेदप्रधानानभिधित्सुः प्रथमं रूपकमाह—

१ प. ॰र्थत्वं । २ ब. ॰वृत्ताकी॰ । ३ प. ॰भावस्तु । ४ अ. ॰वभेद॰ । ५ अ ॰धिक॰ ।

**भेदाभावेऽप्यसम्पन्नापह्नवे विषये निजम् ।**
**रूपमारोपयेद् यत्र विषयी रूपकं तु तत् ॥ १८ ॥**

रूपकं पुनस्तद् यत्र मुखेन्दुरित्यादौ मुखमिन्दुरित्यादौ च शब्दप्रयोगे विषयी चन्द्रादिरारोपणीयो निजं स्वकीयं रूपं सर्वाकारं परिस्पन्दविशेषं विषये आरोपाधारे मुखादावारोपयेन्निवेशयेत् । कीदृशे विषये भेदाभावेऽप्य-भेदप्राधान्येऽपि सत्यसम्पन्नापह्नवेऽसञ्जातापलापे । यदि हि भेदप्राधान्यं स्यात् तदा विषयिणः सौन्दर्यातिशयादयो धर्मा विषये न प्रतीयेरन् । तदर्थं च रूपकस्य प्रवृत्तत्वात्, यदि च विषयापह्नवोऽपि स्यात्, तदाऽतिशयोक्त्यपह्-नुत्याद्यलङ्कारान्तरमाविर्भवेत् । तस्मादभेदप्राधान्ये विषयापह्नवे वाऽयम-लङ्कारः ॥ १८ ॥

अथास्य भेदानाह—

**साङ्गं निरङ्गं च परम्परितं चेति तत् त्रिधा ।**

तत्र साङ्गमाह—

**समस्तवस्तुविषयं श्रौतारोप्यस्थमादिमम् ॥ १९ ॥**

श्रौता आरोपविषया इव श्रुत्या शब्देनोपात्ता ये आरोप्या आरोपयोग्याः समस्ता अप्यर्थाः तेषु यत् तिष्ठति तत् समस्तवस्तुविषयं नामादिमं साङ्गं रूपकम् । तदपि समस्तमसमस्तं समस्तासमस्तं चेति त्रिधा ।

तत्र समस्तं यथा—

" ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रि-कापालिकीयम् ।
द्वीपाद् द्वीपं भ्रमति दधती चन्द्रमुद्रां कपाले,
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ६९४ ॥ "

इह परिमलो त्रिमर्दनम् । अत्र पादत्रय आरोपविषयारोप्ययोः समासस्थितत्वात् समस्तं रूपकम् । अन्त्यपादे त्वपह्नुतिः । अन्तर्धानरसिकत्वं च कापालिक्या एव धर्मो न रात्रेरचेतनत्वेन रसिकत्वाभावादतस्तेन रूपकमेव साध्यते, नोपमेति सन्देहसङ्कराशङ्का न कार्या ।

असमस्तं यथा—

" अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः ।
बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥ ६९५ ॥ "

अत्र द्वयोरप्यसमासस्थितत्वम् ।

समस्तासमस्तं यथा—

" स्मितं मुखेन्दौ ज्योत्स्ना ते प्रभाऽम्बु कुच–कुम्भयोः ।
दोर्लता–पल्लवे पाणौ पुष्पं सखि ! नखार्चिषः ॥ ६९६ ॥ "

अत्र मुखेन्दावित्यादौ समासः, स्मितं ज्योत्स्नेत्यादौ त्वसमासः ।

यथा वा—

" नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥ ६९७ ॥ "

अथ साङ्गस्यैव भेदान्तरमाह—

## श्रौतार्थारोपणीयस्थमेकदेशविवर्ति च ।

श्रौताः केचित् शब्दोपात्ताः केचिदप्यार्था अर्थसामर्थ्यलभ्या ये आरोपणीयास्तेषु तिष्ठति यत् तदेकस्मात् कस्मादप्यारोपविषयाद् विवर्तते व्यावर्तते यदि वाऽन्यान् परित्यज्यैकस्मिन्नप्यारोपविषये विशेषेण वर्तते इति एकदेशविवर्ति च साङ्गं रूपकं भवति । तत्रास्याद्यो भेदो यथा —

" अकस्मादेव ते चण्डि ! स्फुरिताधरपल्लवम् ।
मुखं मुक्तारुचो धत्ते घर्माम्भःकण–मञ्जरी ॥ ६९८ ॥ "

---

१ अ. अत्रा० । २ अ. ०रुचं ।

अत्र मुखस्य लतादित्वेन रूपणं नास्ति ।

यथा वा—

" विद्युद्वलयकक्षाणां बलाकामालभारिणाम् ।
पयोमुचां ध्वनिर्धीरो दुनोति मम मानसम् ॥ ६९९ ॥ "

अत्र पयोमुचो दन्तित्वेन रूपिताः । अवयवरूपकमप्येतद् ।

द्वितीयो यथा—

" उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ॥७००॥ "

अत्र तिमिरस्यैवांशुकत्वेन रूपणम् । शेषं रूपणं त्वर्थसामर्थ्यगम्यम् ॥१९॥

अथ निरङ्गमाह—

**निरङ्गं केवलं मालागुम्फितं चेति तद् द्विधा ॥ २० ॥**

निरङ्गं नाम रूपकं केवलमसहायं मालागुम्फितं चेति द्विविधम् । तत्र केवलं यथा—

" कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रं यच्चान्तः स्वपिति तदहो ! वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ ७०१ ॥ "

यथा वा—

" वल्गितभ्रु गलद्घर्मजलमालोहितेक्षणम् ।
विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥ ७०२ ॥ "

इदमवयविरूपकमपि ।

मालागुम्फितम् । यथा—

---

१ अ. अवयव० । २ प. ०मित्येतद् ।

" ध्वान्तानां दण्डधारः कुमुदपरिषदां जागराकेलिकारः
शृङ्गारस्याङ्गरक्षः सरसिरुहवनीसम्पदां स्थूललक्षः ।
प्रस्थास्नोर्दिग्जयाय स्मर-धरणिपतेर्मङ्गलारम्भकुम्भः
संरम्भः सिन्धुवारामयमुदयगिरेर्मौलिमारोहतीन्दुः ॥ ७०३ ॥ "

अथ परम्परितमाह—

**द्वे परम्परिते श्लिष्टाश्लिष्टशब्दनिबन्धने ।**
**केवले मालया द्वब्धे चेति ते द्वे अपि द्विधा ॥ २१ ॥**

श्लिष्टशब्दनिबन्धनमश्लिष्टशब्दनिबन्धनं चेति द्वे परम्परिते । एकस्य रूपणादन्यस्य रूपणमिति परम्परया जातत्वात् । ते च द्वे अपि केवलत्वेन मालागुम्फितत्वेन च प्रत्येकं द्विविधे । तत्र श्लिष्टनिबन्धनं केवलं यथा–

" किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं ?
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ? ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतो
दर्प्पः स्यादमृतेन चेदिह तदप्यस्त्येव विम्बाधरे ॥ ७०४ ॥ "

अत्र वक्त्रस्येन्दुत्वेन रूपणादधरामृतस्य पीयूषपर्यायामृतत्वेन रूपणम् ।
मालारूपं यथा—

" विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते !
दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर ! ।
सत्यप्रीतिविधान-दक्षविजयप्राग्भावभीम ! प्रभो !
साम्राज्यं वरवीर ! वत्सरशतं वैरञ्चमुच्चैः क्रियाः ॥ ७०५ ॥ "

अत्र मानसमेव मानसम् । कमलायाः सङ्कोच एव कमलानामसङ्कोचः । दुर्गाणाममार्गणमेव दुर्गाया मार्गणम् । समितां स्वीकार एव समिधां स्वीकारः । सत्ये प्रीतिरेव सत्यामप्रीतिः । विजयः परपराभव एव विजयोऽर्जुनः । एवमाद्यारोपणं हंसाद्यारोपणपूर्वकमिति श्लिष्टशब्दं मालापरम्परितम् ।

---

१ अ. प. वा । २ अ. नात्र लो० ।

अश्लिष्टशब्दनिबन्धनं केवलं यथा—

" यामि मनो–वाक्–कायैः शरणं करुणात्मकं जगन्नाथम्।
जन्म–जरा–मरणार्णवतरणतरण्डं हरांह्रियुगम् ॥ ७०६ ॥ "

मालारूपं यथा—

" ज्योत्स्नावल्लिनवाङ्कुरः स्मरमहाभूपाललीलालता–
शृङ्गारकुसुममञ्जरीप्रियतमामानद्विपेन्द्राङ्कुशः।
भास्वत्कार्मुकमुक्तवारुणककुप्कान्तानखाङ्कः स्फुटः
कस्यैषः प्रतिपत्तुषारकिरणस्तोषाय नो जायते ? ॥ ७०७ ॥ "

यथा[1] वा—

" आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्–वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।
सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्! राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥ ७०८ ॥ "

अत्र त्रिष्वपि तरण्डाङ्कुरालानाद्यारोपणपूर्वकमर्णव–वल्ली–कुञ्जराद्यारो[?]पणम् ॥ २१ ॥

अथास्य कतिचिद् भेदान्तराण्याह—

**सालङ्कारान्तरोल्लेखं तथा रूपकरूपकम्।**
**वैधर्म्यव्यतिरेकाङ्कं रसनारूपकं च तत् ॥ २२ ॥**

तद् रूपकं क्वचित् सहालङ्कारान्तरस्योत्प्रेक्षा–संशयादेरुल्लेखेन परिस्फुरणेन वर्त्तते यत् तत्। यथा—

" निर्मोकमुक्तिमिव गगनोरुगस्य लीलाललाटिकामिव त्रिविष्टपविटस्य"
इत्यादि।

---

१ अ. ०रण०। २ प यथा आ०। ३ प. वैरिवीर०। ४ प. तथा। ५ प. ०रिव।

अत्र ' मुखमिन्दुः ' इत्यादिवत् तथाविधप्रसिद्धेरभावात् कविभि[1]र्न निष्कम्पतया रूपकमेवं[2] व्यवहर्तुं शक्यते, इत्युत्प्रेक्षां सहायीकृत्य निबद्धम् ।

यथा वा—

" किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी[3] ?
लीलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः ? ।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ? ॥ ७१० ॥ "

अत्राप्यनेनैव न्यायेन ससंशयमुपनिबद्धम् ।

रूपकरूपकं यथा—

" मुख–पङ्कज–रङ्गेऽस्मिन् भ्रू–लता–नर्तकी तव[4] ।
लीला–नाट्यामृतं दृष्टौ सखि ! यूनां निषिञ्चति ॥ ७११ ॥ "

अत्र मुखमेव पङ्कजं तदेव रङ्गः । भ्रूरेव लता सैव नर्त्तकी । लीलैव नाट्यं तदेवामृतमिति रूपकस्यापि रूपणेन रूपकरूपकम् ।

वैधर्म्याङ्कं यथा—

" सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण[5]–
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्च पुच्छच्छटा ।
यैरेषाऽपि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत् कौशलम् ? ॥ ७१२ ॥ "

अत्राम्बुप्रभृतीनां मरुस्थल्यादावसम्भवाद् वैधर्म्य[6]म् ।

व्यतिरेकाङ्कं यथा—

" अनाघ्रातं पुष्पं किसलयमलूनं कररुहै–
रनामुक्तं रत्नं मधु नवमनास्वादितरसम् ।

---

१ व. ०भिर्नि० । २ व. ०मेक । ३ प. मंजरी । ४ व. इव । ५ व. ०द्युतिर्निर्गु० ।
६ अ. ०र्म्यकं ।

अखण्डं पुण्यानां फलमपि च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि ? ॥ ७१३ ॥"

अत्र पुष्पादीनामनाघ्रातत्वादिभिरितराघ्रातपुष्पादिव्यतिरेकेण स्थितत्वाद् व्यतिरेकाङ्कम् ।

रशनारूपकं यथा—

"किसलयकरैर्लतानां करकमलैर्मृगदृशां जगज्जयति ।
नलिनीनां कमल-मुखैर्मुखेन्दुभिर्योषितां मदनः ॥ ७१४ ॥"

अत्र किसलय-करैः कर-कमलैरित्यादिपदेषु करादिशब्दानां शृङ्खलाक्रमेण स्थितत्वाद् रशनारूपकम् ।

एवम्—

"गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः ।
कामदत्वाच लोकानामसि त्वं कल्पपादपः ॥ ७१५ ॥"

इति हेतुरूपकादयो भूयांसो रूपकप्रकाराः परेऽपि सम्भवन्ति, ग्रन्थगौरवभयात् तु नोदाह्रियन्ते। रूपके चात्र यद्यप्यारोप्यमाणस्य मुख्यत्वादाविष्टलिङ्ग-सङ्ख्यत्वम्, तथापि क्वचित् स्वतः सङ्ख्या-योगासम्भवे प्रत्येकमारोपाद् विषयसङ्ख्यत्वम् । यथा—

'क्वचिजटावल्कलावलम्बिनः कपिला दावाग्नयः' इत्यादि ॥ २२ ॥

अथाभेदप्राधान्येऽप्यपह्नवालङ्कृतत्वेन रूपकपृथग्भूतामपह्नुतिं लक्षयति—

**विषयेऽपह्नुतिं नीते तदन्येन त्वपह्नुतिः ।**

विषये प्रस्तुतवस्तुनि तदन्येन विषयिणाऽप्रस्तुतेनारोप्यमाणेनापह्नुतिमपलापं नीते प्रापिते सत्यपह्नुत्याख्याऽलङ्कृतिः । सा च सादृश्यवती सादृश्यरहिता चेति द्विविधा। तत्रारोपपूर्वोऽपह्नवोऽपह्नवपूर्वश्चारोप इति

१ अ. ०व्य० । २ प. रसना० । ३ प. ०श्रि० ।

द्वौ भेदौ। च्छल-च्छद्मादिशब्दैर्व्यपूर्पूत्यादिशब्दैश्च विषयापह्नवे द्वौ भेदाविति चतुर्भेदा प्रथमा। तत्राद्यो भेदो यथा—

" शैलालङ्कृतमेतदाश्रमपदं तन्व्याः न वक्षःस्थली
देवः सोऽत्र जगज्जिगीषुरिषुभिस्तीव्रं तपस्तप्यते।
नाभीपल्वलधौतवल्कलशिखानिश्च्योतदम्भश्छटा-
लेखैवेयमपेक्ष्यते॒ऽस्य सुभग! श्यामा न रोमावली॥ ७१७॥"

द्वितीयो यथा—

" अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतश्रान्ता शेते रजनि-रमणी गाढमुरसि॥ ७१८॥"

तृतीयो यथा—

" वैत सखि! कियदेतत् पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके तथाहि।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम्॥ ७१९॥"

अत्र हि न सभृङ्गानि सहकाराण्यपि तु सह कालकूटाः शरा इति प्रतीतिः।

चतुर्थो यथा—

" अमुष्मिन् लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभि-कुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः॥ ७२०॥"

---

१ व. ०निश्चो०। २ व. ०स्तटा। ३ प. व. ०क्षते। ४ व. वद। ५ प. ०भृंग०। ६ वं. प्रथमपिशुने।

अत्र न रोमावलिः, किन्तु धूमशिखेयमिति प्रतीतिः। अत्रोभयप्राप्यारोपपूर्वोऽपह्नव इत्यादिका भङ्गिः सम्भवन्त्यपि वैचित्र्याभावान्नोदाहृता।

कचित् पुनर्नञ्-च्छलादीन् विनैव प्रकारान्तरेणाप्यपह्नवोरोपो दृश्यते।

यथा—

" मौलौ धारय पुण्डरीकममितं तन्वात्मनो विक्रमं
चक्राङ्कं वह पादयुग्ममवनिं दोष्णा समभ्युद्धर।
लक्ष्मीं भूनिकटे निवेशय भव ज्यायान् दिवौकःपते-
र्विश्वान्तःकरणैकचौर! तदपि ज्ञातो हरिः खल्वसि ॥ ७२१ ॥ "

अत्र न त्वं राजमात्रम्, किन्तु हरिरेवासीति नृपस्य हरित्वारोपः।
सादृश्यरहिताऽपि द्विविधा वाच्यापह्नोतव्या प्रतीयमानापह्नोतव्या च[३]।

तत्राद्या यथा—

" आनन्दाश्रुप्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम्?।
अक्षि मे पुष्परजसा वातोद्धूतेन दूषितम् ॥ ७२२ ॥ "

अत्र पूर्वार्धवाच्यमुत्तरार्द्धवाच्येनापह्नूयते।

द्वितीया यथा—

*" उरपेल्लि[४]यवरकारेल्लुयाइं उच्चेसि दइ[५]यवच्छलिए!।
कण्[६]टयविलिहिअपीणुग्गयत्थणी हम्मए ताहे ॥ ७२३ ॥ "

अत्र वाच्यार्थेन प्रतीयमानमुपपतिनखक्षतमपह्नूयते। इयं च मतान्तराभिप्रायेण, स्वमते तु व्याजोक्तिरेवेयम्।

* उरःपीडितवरकारेल्लकान्युच्चयासि दयितवत्सलिके!।
कण्टकविलिखितपीनोन्नतस्तनी हन्यसे तदा॥

१ प. ०लिपुः। २ अ. प.० पौ ०रये०। ३ प. च यथा। ४ अ. ०ल्लिअवयकारेल्ल०। ५ अ. प. ०हुमय०। ६ अ. कंटव०।

अथ परिणाममाह—

**परिणामः स विषयो यत्र धत्तेऽन्यरूपताम् ॥ २३ ॥**

यत्र यस्मिन् विषयोऽन्यरूपतां विषयिरूपतां धत्ते बिभर्ति विषयिणस्तथा-त्वेनोपयोगाद् विषयस्तद्रूपतया परिणमतीत्यर्थः स परिणामः। स[2] च सामानाधि-करण्य-वैयधिकरण्याभ्यां द्विविधः । तत्राद्यो यथा—

" तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनाऽसौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपकृतवानान्तरं नाविकाय ।
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे ॥ ७२४ ॥ "

अत्र सौमित्रिमैत्री विषयभूता सामानाधिकरण्येनान्तररूपतया परिणता ।

द्वितीया यथा—

" अथ पङ्क्तिमेतामुपेयिवद्भिः सरसैर्वक्त्रपथाश्रितैर्वचोभिः ।
क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरङ्गमाद्यैः ॥ ७२५ ॥ "

अत्र व्यधिकरणानि वचांस्युपायनरूपतया परिणतानि ॥ २३ ॥

अथोत्प्रेक्षामाह—

**अप्रस्तुतस्य रूपेण हेतुभूतैः क्रिया-गुणैः ।**
**सम्भाव्यते प्रस्तुतं यत् तामुत्प्रेक्षां प्रचक्षते ॥ २४ ॥**

अप्रस्तुतस्याप्राकरणिकस्य वस्तुनो रूपेण [6]प्रस्तुतं प्राकरणिकं वर्ण्यं वस्तु यत् सम्भाव्यते तत्त्वेनैवाध्यवसीयते । किं निर्निमित्तमेवेत्याह—हेतुभूतैर्निमित्तभूतैः क्वचित् क्रियाभिः क्वचिद् गुणैश्च । बहुवचनमत्रोत्प्रेक्षाभूयस्त्वापेक्षया यावता एकेनाप्युत्प्रेक्षा भवत्येव । तामुत्प्रेक्षानामालङ्कृतिं प्रचक्षते कथयन्ति । सम्भावनमध्यवसाय ऊहो वितर्क उत्प्रेक्षा इत्येकार्थाः ॥ २४ ॥

---

१ प. व. ०यित्वं । २ अ. स सामान्यवै० । ३ अ. प. ०मजरधुना० । ४ अ. समा० ।
५ अ. ०मतमु० । ६ अ. प्रस्थितं । ७ अ. ०त्त्वेनाध्य० । ८ व. ०क्षाम० । ९ अ. ०कोर्थः ।

तद्भेदानाह—

**सा च वाच्या प्रयुज्यन्ते शब्दा यस्यामिवादयः ।**
**सैव प्रतीयमाना स्याद् यत्र ते न प्रयोगिणः ॥ २५ ॥**

सा चोत्प्रेक्षा वाच्या यस्यामिवादय इव मन्ये शङ्के ध्रुवं नियतमित्यादयस्तद्वाचकाः शब्दाः प्रयुज्यन्ते । उपमाया इवोत्प्रेक्षाया अपीवादिशब्दवाच्यत्वात् । यथा—

" यः समुन्मीलयन् न्यायमन्यायं च निमीलयन् ।
धर्मः साक्षादिव क्षात्रो महीतलमवातरत् ॥ ७२६ ॥ "

अत्र समुन्मीलन–निमीलनक्रिये हेतुभूते इवशब्दप्रयोगाच्च वाच्योत्प्रेक्षा ।

यथा च—

" तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवरोमराजिः ।
नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥ ७२७ ॥ "

अत्र नीलगुणः प्रतीयमानो निमित्तं वाच्यत्वं तु तथैव । सैवोत्प्रेक्षा प्रतीयमाना भवेत्, यत्र यस्यां ते इवादयः शब्दा न प्रयोगिणो न प्रयुज्यन्ते । यथा—

" चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः ।
मूर्च्छयत्येष पथिकान् मधौ मलयमारुतः ॥ ७२८ ॥ "

अत्र निःश्वासानिलमूर्च्छनक्रियोत्प्रेक्षायाः पथिकमूर्च्छनक्रियानिमित्तम् ।

यथा वा—

" त्वं रक्षसा भीरु ! यतोऽपनीता तं मार्गमेताः कृपया लता मे ।
अदर्शयन् वक्तुमशक्नुवत्यः शाखाभिरावर्जितपल्लवाभिः ॥ ७२९ ॥ "

अत्र दर्शनक्रियैव निमित्तम् । उभयत्रापि निःश्वासानिलमूर्च्छित इत्यत्र कृपयेत्यत्र चेवशब्दप्रयोगाभावादुत्प्रेक्षायाः प्रतीयमानत्वम् ॥ २५ ॥

---

१ प. प्रति० । २ ब. ०स्यामिवा० । ३ प. ०नल० । ४ अ. ०था त्वं ।

अथास्याः प्रभेदानाह—

**जाति–क्रिया–गुण–द्रव्यैरुत्प्रेक्ष्यैः सा चतुर्विधा ।**
**भावाभावाभिमानेन तेषामष्टविधा पुनः ।। २६ ।।**

सोत्प्रेक्षा जाति–क्रिया–गुण–द्रव्यैरुत्प्रेक्षणीयैश्चतुर्विधा भवति । प्रस्तुतस्याप्येते भेदाः सम्भवन्ति । वैचित्र्याभावात् तु न गणिताः । तेषां जात्यादिभेदानां भावाभावयोरभिमानेनाध्यवसायेन द्वैविध्यात् पुनरष्टविधोत्प्रेक्षा ॥ २६ ॥

तत्र भावे जात्युत्प्रेक्षा यथा—

" तां भवानी[1]भ्रमाचेत्रैरेकहेलानिपातिभिः ।
भूपाः सौभाग्यभाग्याय मेजुरिन्दीवरैरिव ॥ ७३० ॥ "

यथा वा—

" स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः
स्मरारेर्यो मूर्ध्नि ज्वलनकपिशो भाति निहितः ।
स्रवन् मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा
कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ॥ ७३१ ॥ "

अत्र द्वयोरपि श्यामत्व–दैर्घ्यादेः कुटिलत्व–श्वेतत्वादेश्च गुणान् नेत्राणि चन्द्रश्चेन्दीवरत्वेनाङ्कुरत्वेन चोत्प्रेक्षितानि तयोश्च जातिशब्दत्वात् जात्युत्प्रेक्षा ।

क्रियोत्प्रेक्षा यथा—

" कश्चिदैक्षिष्ट कस्तूरीतिलकं रक्तकङ्कणे ।
भालाक्षरलिपीस्तस्या लाभायेव निभालयन् ॥ ७३२ ॥ "

अत्र तिलकेक्षणक्रिया लिपिनिभालनक्रियात्वेनोत्प्रेक्षिता ।

गुणोत्प्रेक्षा यथा—

" अभवदवनी–सारङ्गाक्षीवतंसमहोत्पलं
महितमहिमा पृथ्वीराजस्ततः पृथुविक्रमः ।

---

१ अ. ०क्षैः । २ प. तु ग० । ३ प.०भवा० । ४ प. भेजु० ।

अरिकरिशिरःसिन्दूरेण प्रभामरुणां वहन्
असिरपि रणे यस्य क्रोधाभिताम्र इवाबभौ ॥ ७३३ ॥"

अत्र सिन्दूरारुणत्वं क्रोधाभिताम्रत्वेनोत्प्रेक्षितम् ।

द्रव्योत्प्रेक्षा यथा—

" दर्पणे हरदेहस्था पश्यति प्रतिमामुमा ।
अन्यार्धाभ्यामिवोत्पन्नमर्धनारीश्वरान्तरम् ॥ ७३४ ॥"

अत्रार्धनारीश्वरत्वस्यैकत्वाद् द्रव्यत्वम् ।

अभावे जात्युत्प्रेक्षा यथा—

" समग्रसङ्कल्पफलेऽनुजीविनां कृतावतारे त्वयि मेदिनीतले ।
राजन्निदानीं सदनं दिवौकसामकल्पशाखीन्द्रमिव प्रतीयते ॥७३५॥"

अत्र कल्पद्रुमशब्दो जातिशब्दः, तस्याभावो[2]त्प्रेक्षा ।

क्रियोत्प्रेक्षा यथा—

" स धूर्जटेर्जूटतटीशयालुतां दधत् सुधांशुर्जयतात् कृशाकृतिः ।
फूत्कारघोरादुरगाधिराजतः कदापि सौस्थित्यमवाप्नुवन्निव ॥७३६॥"

अत्रापि क्रियाया अभावाभ्यूहनम् ।

गुणोत्प्रेक्षा यथा—

" देव ! त्वद्यशसि स्वैरं श्वेतयत्यखिलं जगत् ।
सर्वाः[3] शून्या इवाभूवन् नील-पीतादयो गुणाः ॥ ७३७ ॥"

यथा वा—

" तस्मिन्नभ्युदिते विश्वस्तोतव्यभुजसौरभे ।
भूपालमण्डलं सर्वमविक्रममिवाभवत् ॥ ७३८ ॥"

अनयोर्नीलादिगुणानां विक्रमगुणस्य चाभाववितर्कः ।

---

१ प. ०रस्थै० । २ ब. ०नात उ० । ३ प. सत्ताशू० । ४ प. ०यते ।

द्रव्योत्प्रेक्षा यथा—

" देव ! त्वदश्वीयखुरक्षतक्ष्मापरागपूरे परितः प्रसर्प्पति ।
अशाखिशैलेन्द्रमिवावनीतलं विभात्यनादित्यमिवाम्बरं पुनः ॥७३९॥"

अत्रानादित्यमिवेत्यत्रादित्यस्यैकत्वात् द्रव्यत्वम्, तस्याभावाभिमानः ।

" वियति विसर्पतीव कुमुदेषु बहुभवतीव योषितां
प्रतिफलतीव जरठशरकाण्डपाण्डुषु गण्डभित्तिषु ।
अम्भसि विकसतीव हसतीव सुधाधवलेषु धामसु
ध्वजपटपल्लवेषु ललतीव समीरचलेषु चन्द्रिका ॥ ७४० ॥"

अत्र विसर्पतीत्यादिक्रियाणामभावे प्रस्तुते विविधं परिस्फुरणं निमित्तमाश्रित्य नानाप्रकारं भावोत्प्रेक्षणम्[3] । यतोऽस्यामुत्प्रेक्षायां यथा जात्यादिषु प्रस्तुतेषु जात्यादीनां क्वचिद् भावोत्प्रेक्षणं क्वचिदभावोत्प्रेक्षणं च प्रोक्तम्; तथा क्वचित् तेषामभावे प्रस्तुते कुतश्चिन्निमित्तवशाद् भावोत्प्रेक्षणमित्यपि द्रष्टव्यम् । अप्रस्तुतस्य रूपेण प्रस्तुतं सम्भाव्यत इति लक्षणाव्यभिचारात् । यदि वा चन्द्रिकारूपे द्रव्य एव विविधपरिस्फुरणानिमित्ताश्रयणाद् विसर्पतीत्यादिक्रियोत्प्रेक्षा ।

" लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ ७४१ ॥"

इत्यत्रापि पूर्वार्द्धे व्यापनादिकमधःपात-श्यामत्वादिकं च निमित्तमाश्रित्य लिम्पति वर्षति क्रिययोरभावे भावः सम्भावितः । तमो-नभसोर्वा क्रियोत्प्रेक्षणमुत्तरार्द्धे पुनरुपमैव ॥ २६ ॥

**गुण-क्रियाभ्यां प्रत्येकं बीजाभ्यां षोडशात्मिका ।**
**तत्प्रयोगाप्रयोगाभ्यां सा द्वात्रिंशद्विधा स्मृता ॥ २७ ॥**

---

१ अ. ०सरसका० । २ अ. ०वले० । ३ अ. ०णं च प्रो. । ४ अ. संभा० ।

सोत्प्रेक्षाऽष्टविधाऽपि गुण-क्रियाभ्यां बीजाभ्यां गुणेन क्रियया च निमित्तभूतेन द्विधा भिन्ना सती षोडशात्मिका षोडशस्वरूपा भवति । तयोश्च गुण-क्रिययोः प्रयोगाप्रयोगाभ्यां क्वचित् प्रयोगात् क्वचिदप्रयोगाच्च साऽपि षोडशात्मिका द्विधा भिन्ना सती द्वात्रिंशद्विधा स्मृता । तत्र गुणस्य निमित्तत्वं प्रयोगाद् यथा–'नवबिसलताकोटिकुटिलः' इत्युदाहृते कुटिलत्वस्य । अप्रयोगाद् यथा 'तां भवानीं भवाद् ' इत्युदाहृते दैर्घ्य-श्यामत्वादिगुणानाम् ।

क्रियाया निमित्तत्वं प्रयोगाद् यथा—

"कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥ ७४२ ॥"

अत्र क्षामतागमनक्रियायाः ।

अप्रयोगाद् यथा—' वियति विसर्पति'इत्यादावुदाहृते विविधपरिस्फुरण-क्रियायाः । एवं शेषभेदेष्वप्यभ्यूह्यम् ॥ २७ ॥

**फलस्वरूपहेतूनामुत्प्रेक्षाकर्मनिर्मितौ ।**
**भेदाः षण्णवतिस्तस्याः**

फलस्य स्वरूपस्य हेतोश्च प्रत्येकमुत्प्रेक्षणात् पूर्वेषां द्वात्रिंशतो भेदानां त्रिगुणत्वेन तस्या उत्प्रेक्षायाः षण्णवतिर्भेदाः ।

तत्र फलोत्प्रेक्षा यथा—

"बालस्य यद् भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः ।
अद्यापि किं चानुभविष्यतीति व्यपाटयन् द्रष्टुमिवाक्षराणि ॥७४३॥"

अत्र विपाटनेस्याक्षरदर्शनं फलम् ।

स्वरूपोत्प्रेक्षा यथा—

"कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग् दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज ॥७४४॥"

१ प. ०त्मका । २ प. इत्याद्युदा० । ३ प. व्यपा० । ४ प. ०टस्या० ।

अत्र व्यलीकनिःश्वासोत्सर्जनं वातस्य स्वरूपमेव ।

हेतूत्प्रेक्षा यथा—

" सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥ ७४५ ॥ "

अत्र बद्धमौनत्वस्य विश्लेषदुःखहेतुः ।

**अशीतिर्निकषे पुनः ॥ २८ ॥**

निकषे पर्यन्ते पुनरस्या उत्प्रेक्षाया अशीतिरेव भेदाः ॥२८॥

कुत इत्याह—

**द्रव्ये हेतु–फलोत्प्रेक्षा न यत् सम्भविनी क्वचित् ।**

यद् यस्मात् कारणाद् द्रव्यविषये हेतूत्प्रेक्षा फलोत्प्रेक्षा च कुत्रापि न सम्भवति । केवलं स्वरूपोत्प्रेक्षैव तस्मिन्निति तदीयाः षोडश भेदाः पात्यन्त इति ।

**वाच्यैवेत्थं स्थिता सेयं द्वात्रिंशद्धाऽपरा पुनः ॥ २९ ॥**

सेयमुत्प्रेक्षा वाच्यैवैवमशीतिभेदत्वेन स्थिता। अपरा पुनः प्रतीयमानोत्प्रेक्षा द्वात्रिंशद्विधैव ॥ २९ ॥

कथमित्याह—

**निमित्तस्यानुपादानं न भवत्येव तत्र यत् ।**
**स्वरूपोत्प्रेक्षणं नापि तत्सङ्ख्या स्याद् यथोदिता ॥ ३० ॥**

यद् यस्मात् कारणात् तत्र तस्यां प्रतीयमानोत्प्रेक्षायां निमित्तस्य हेतोरनुपादानं न भवत्येव । इवाद्यनुपादाने निमित्तस्याकीर्तने चोत्प्रेक्षणस्य निष्प्रमाणत्वात् तथा स्वरूपोत्प्रेक्षणमप्यस्यां न दृश्यते । ततोऽस्याः सङ्ख्या यथोदिता द्वात्रिंशत्प्रमाणैव ॥ ३० ॥

---

१ अ. ०वित० । २ प. भ्रस्तं । ३ प. ०मेव० । ४ प. ०श पं० । ५ अ. ०वायु० ।
६ अ. ०णकत्वात् ।

अथास्या भेदान्तराण्याह—

**उपमोपक्रमे क्वापि स्वात्मपर्यवसानिका ।**

उत्प्रेक्षेत्यनुवर्तते । उपमा उपक्रमे आदौ यस्याः स्वात्मनि उत्प्रेक्षात्वे पर्यवसानं यस्याः सा तथा । इयं हि क्वचित् पदार्थान्वयवेलायां सादृश्याभिधानादुपमारूपतामनुभूय पर्यन्ते वाक्यार्थतात्पर्यसामर्थ्यादुत्प्रेक्षायां पर्यवस्यतीति । यथा—

" कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे
रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलिं प्रति ।
याः कर्णे विकचोत्पलन्ति कुचयोरङ्के च कालागुरु-
स्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥ ७४६ ॥ "

अत्र यद्यपि कर्तुः क्विबित्युपमानात् क्विपि प्रारम्भे उपमाप्रतीतिस्तथापि विषयौचित्येन कण्ठत्विषां तिलकादिरूपेण सम्भावनोत्थाने तस्या उत्प्रेक्षायां पर्यवसानम् ॥

**क्वापि सापह्नवा सैषा छलादीनां प्रयोगतः ॥ ३१ ॥**

सैषोत्प्रेक्षा क्वापि च्छलादीनां छल-च्छद्मप्रभृतिशब्दानां प्रयोगात् सापह्नवा । यथा—

" गतासु तीरं तिमिघट्टनेन ससम्भ्रमं पौरविलासिनीषु ।
यत्रोच्छलत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति सिप्रा ॥७४७॥ "

तथाऽपर इव पाकशासन इत्यादावपरशब्दाप्रयोगे उपमैव । इवशब्दाप्रयोगेऽतिशयोक्तिरुभयाप्रयोगे तु रूपकं सर्वप्रयोगे पुनरुत्प्रेक्षैवेत्यस्याः प्रकारवैचित्र्यम् । अस्याश्चेवशब्दवत् मन्ये शङ्के ध्रुवमित्यादयोऽपि प्रतिपादकास्तदन्यत्र पुनर्वितर्कमात्राभिधायिन एव । यथा—

---

१ प. ०हुः । २ प. दीवे । ३ व. यमघ० । ४ अ. ०भयोः प्र० ।

" मन्ये कल्पद्रुमादिभ्यः सारैर्निर्मि(र्म)मिरेऽणुभिः ।
न वहन्ते महीयांसस्तेनेदानीमदृश्यताम् ॥ ७४८ ॥ "

मालारूपाऽपि क्वचिदेषा दृश्यते । यथा—

" लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ ७४९॥ "

अत्र लग्नेति क्रिया लीनेवेत्यादिक्रियात्वेनोत्प्रेक्षिता ।

एषा चार्थालङ्कृतिरपि धर्मविषये श्लिष्टशब्दजन्याऽपि क्वाचिद् दृश्यते । यथा—

" प्रस्थे स्थितां हिमवतोऽपि न बाधते यां—
मूर्ध्नेक्षणानलभयादिव जाड्यमुद्रा ।
गोष्ठीषु वः सततसन्निहिताऽस्तु देवी
सा शारदा नवसुधास्थितकामधेनुः ॥ ७५० ॥ "

अत्र जाड्यशब्दः श्लिष्ट इति ॥ ३१ ॥

अथ गुण–क्रियाभिसम्बन्धादेवोत्प्रेक्षानन्तरं तुल्ययोगितामाह—

**प्रस्तुतानां क्वचिद् यस्यां क्वचिदप्रस्तुतात्मनाम् ।**
**गुण–क्रियाभ्यां तुल्याभ्यां योगः सा तुल्ययोगिता ॥३२॥**

क्वचित् सर्वेषामत्र प्रस्तुतानां क्वचिच्च सर्वेषामप्यप्रस्तुतानां तुल्याभ्यां गुण-क्रियाभ्यामेकेनैव गुणेन क्रियया वा योगः सम्बन्धो यस्यां सा यथार्था तुल्य-योगिता । तत्र प्रस्तुतानां तुल्यगुणयोगो यथा—

" योगपट्टो जटाजालं तारवी त्वग् मृगाजिनम् ।
उचितानि तवाङ्गस्य यद्यमूनि तदुच्यताम् ॥ ७५१ ॥ "

---

१ प. ०षार्थो० । २ प. यां पूर्वेक्ष० । ३ प. ०योग्यता० । ४ प. ०मपि ।
५ प. ०चित् स० ।

अत्रोचितत्वं गुणः ।

अप्रस्तुतानां यथा—

" त्वदङ्गमार्दवं[1] द्रष्टुः कस्य चित्ते न भासते ? ।
मालती-शशभृल्लेखा-कदलीनां कठोरता ॥ ७५२ ॥ "

अत्र कठोरत्वं गुणः ।

प्रस्तुतानां तुल्यक्रियायोगो यथा—

" सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ ७५३ । "

अत्र सन्ध्याया धेनोश्च द्वयोरपि वर्णनीयत्वेन प्रस्तुतयोः प्रचक्रमे इति तुल्यक्रियायोगः ।

यथा[2] वा—

" पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥ ७५४ ॥ "

अत्र क्षेत्रियो राजयक्ष्मा पारदारिकश्च, आवेदयतीति च तुल्यक्रियायोगः ।

अप्रस्तुतानां[3] योगो यथा—

" तस्मिन्नुदग्ररिपुवर्गजये निसर्गवैयग्र्यवानजनि विग्रहराजदेवः ।
यद्विग्रहं जगदसम्भविनं विभाव्य वैरिव्रजोऽपि मदनोऽपि मदं मुमोच । ७५५॥ "

अत्र वैरिव्रजस्य मदनस्य चाप्रस्तुतत्वम् । मुमोचेति तुल्यक्रियायोगः ॥३२॥

अथ प्रकृताप्रकृतद्योतकत्वात् पूर्वस्यो[4]ऽपि विलक्षणं दीपकमाह—

**धर्मो यद् दीपयत्येकः प्रस्तुताप्रस्तुतान् बहून् ।**
**क्रिया वा भूयसीरेकं कारकं तत् तु दीपकम् ॥ ३३ ॥**

---

१ व. ०वे दृष्टे । २ प. ०था पां० । ३ अ. प. ०नां य० । ४ प. ०स्यावि० ।

आदौ मध्येऽवसाने वा सकृत्प्रयुक्तो धर्मः क्रियादिरूपः प्रस्तुताप्रस्तुतान् परस्परमुपमानोपमेयभूतान् पदार्थान् बहूननेकरूपानेकस्थानस्थो दीप इव गृहप्रदेशान् यद् दीपयति द्योतयति। यदि वा भूयसीर्बह्वीः क्रिया एकं कारकं दीपयति तद् दीपकम्। तुशब्दः पूर्वव्यतिरेके। तत्रादिदीपकं यथा—

*" रेहइ मिहरेण नहं रसेण कव्वं सरेण जुव्वणयं[1]।
अमएण धरणीधवलो[2] तुमए नरनाह! भुअणमिणं॥ ७५६॥"

मध्यदीपकं यथा—

×" कइ-केसरी पयाणं मुत्तियरयणाण[3] आइवेअडिओ।
वाणट्ठाणं[4] जाणइ कुसुमाण य जुण्णमालारो॥ ७५७॥"

अन्तदीपकं यथा—

+" किवणाण धणं नागाण फणमणी केसराइं सीहाणं।
कुलबालियाण[5] य थणा कत्तो छिप्पन्ति अमुआणं?॥ ७५८॥"

भूयसीनां क्रियाणामेकं कारकं दीपकं यथा—

" स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यग्।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने॥ ७५९॥"

केचित् पुनः पदार्थानां चेतनचमत्कारिणमव्यक्तं कञ्चिद् धर्मं दीपयद् वस्तुमात्रमेव दीपकं मन्यन्ते। यथा—

---

* राजते मिहिरेण नभो रसेन काव्यं स्मरेण यौवनकम्।
अमृतेन धरणीधवलः(चन्द्रः) त्वया नरनाथ! भुवनमिदम्॥

× कवि-केसरी पदानां मौक्तिकरत्नानामादिवैकटिकः।
वाणस्थानं जानाति कुसुमानां च जीर्णमालाकारः॥

\+ कृपणानां धनं नागानां फणामणिः केसराः सिंहानाम्।
कुलबालिकानां च स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्?॥

---

१ अ. ०व्वणं। २ अ. प. धणीध०। ३ अ. मुत्तिअ०। ४ प. ०ट्ठाण। ५ अ. ०लिआ०।

" असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं विधिमपि विपन्नाद्भुतविधिम् ।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विघातुं व्यवसितः ? ॥७६०॥ "

अत्र 'कथमसि विघातुं व्यवसितः' इदं पदसमुदायं वस्तु संसारादीनामसारत्वादिकं धर्मं दीपयद् दीपकम् ।

यत् पुनः कैश्चित्—

" चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ।
चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥७६१॥"

इत्यादिषु दीपकमुक्तं तदयुक्तमुभयेषामप्रस्तुतत्वेन तुल्ययोगिता-समुच्चयादिविषयत्वात् ॥ ३३ ॥

अथौपम्यप्रस्तावान्निदर्शनामाह—

**वस्तुनो योग्यताऽभावात् सम्बन्धः क्वाप्यसम्भवन् ।**
**इवार्थाय प्रकल्पेत यस्यां सा स्यान्निदर्शना ॥ ३४ ॥**

वस्तुनो वाक्यार्थस्य सम्बन्धो मिथः पदार्थानामन्वयो योग्यताया अभावात् क्वाप्यसम्भवन्निवार्थायोपमोत्प्रेक्षारूपाय प्रकल्पेत जायेत यस्यां सा निदर्शनाऽऽख्याऽलङ्कृतिः स्यात् । तत्रोपमारूपा यथा--

" क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ! ॥
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ ७६२ ॥ "

अत्रोडुपेन सागरतरणयोग्यताऽभावादसम्भवन् पदसम्बन्ध उडुपेन सागरतरणसदृशं मन्मत्या सूर्यवंशवर्णनमित्यौपम्याय कल्पते ।

यथा वा—

" क्रमेण चार्द्धोदितमिन्दुबिम्बं सितत्वगर्भोदयरागशोभि ।
मदप्रभालङ्कितकामपालललाटपट्टश्रियमाचकर्ष । ७६३ ॥ "

---

१ प. ०र्मोप प्र० । २ प. ०योग्यता० । ३ अ. ०नमा० प. ०यन्नाह । ४ अ. यन्नार्थ० ।
५ प. ०पता । ६ प. कल्प्यते ।

अत्रान्यधर्मिणो धर्मस्य विप्रकृष्टेनापरधर्मिणा स्वात्मन्याकर्षणे[1]योग्यताभावादसम्भवन् पदसम्बन्धः कामपालललाट[2]पट्टश्रीसदृशीं श्रियमाचकर्षेत्यौपम्याय जायते ।

उत्प्रेक्षारूपा यथा--

" अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति ।
उदयः पतनायेति श्रीमतो बोधयन् नरान् ॥ ७६४ ॥ "

यथा वा--

" चूडामणिपदं धत्ते यो देवं रविमागतम्[3] ।
सतां[4] कार्याऽऽतिथेयीति बोधयन् गृहमेधिनः ॥ ७६५ ॥ "

अत्रोभयत्रापि भास्वतः प्राक्शैलस्य च[5] गृहमेधिनो बोधनासमर्थत्वादसम्भवन् पदसम्बन्धो बोधयन्निवेत्युत्प्रेक्षायै जायते ।

मालारूपा[6]ऽप्येषा यथा--

"दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गमादातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेष देव ! यस्ते गुणान् गदितुमुद्यममादधाति ॥७६६॥"

अत्रापि समुद्रादीनां दोस्तरणादिसदृशं त्वद्गुणोत्कीर्तनमित्यौपम्ययोगः ॥२४॥

अथ पदार्थगतान[7]भिधाय वाक्यार्थगतानलङ्कारानभिधित्सुरादौ प्रतिवस्तूपमामाह--

**यत्रैकमन्यपर्यायं सामान्यं वाक्ययोर्द्वयोः ।**
**पृथक् पृथक् प्रयुज्येत प्रतिवस्तूपमा तु सा ॥ ३५ ॥**

यत्र यस्यामेकमेकार्थमेव सामान्यं द्वयोर्वाक्ययोरन्यपर्यायं पौनरुक्त्यदोषात् पर्यायान्तरेण पृथक् पृथक् प्रयुज्येत निवेश्येत सा पुनः प्रतिवस्तूपमा ।

---

१ अ. ० कर्षयो० । २ प० लाटश्री० । ३ प. ०गमं । ४ प. सतां । ५ अ. च बो० प. चाबो० । ६ अ. ०रूपोऽप्येषं । ७ अ.०तामभि० ।

प्रतिवस्तु प्रतिवाक्यमुपमासामान्यं यस्यामिति कृत्वा सामान्यस्य सकृन्निर्देश इवादीनां च प्रयोगे उपमा । तेषामप्रयोगे पुनर्दीपक-तुल्ययोगिते । असकृत् सामान्यनिर्देशे तु बिम्ब-प्रतिबिम्बभावे दृष्टान्तः । शुद्धसामान्यद्वयादि-निवेशे पुनरियमेव । यथा--

'चकोर्य एव चतुरा निर्दिष्टं विनाऽवन्तीर्न निपुणा ।'

इति कृते वैधर्म्येणाप्यसौ भवति ।

मालारूपाऽप्येषा यथा—

"यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ? ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥ ७६८ ॥"

अत्र प्रकृतिरेवेत्यस्य किमद्भुतं, किं ततः, सदैवेति विपर्यायाः ॥ ३५ ॥

अथैतस्याः प्रकृतिभूतं दृष्टान्तमाह--

**दृष्टान्तोऽसौ विशेषाङ्के यद्वा सामान्यशालिनी ।**
**वाक्ये धारयतो यस्मिन्नन्योन्यप्रतिबिम्बताम् ॥ ३६ ॥**

असौ दृष्टान्ताख्योऽलङ्कारः । यस्मिन्नुपमेयोपमानरूपे विशेषाङ्के विशेषो व्यक्तिरूपः सोऽङ्कश्चिह्नं ययोर्विशेषवती इत्यर्थः । यदि वा सामान्यमविशेषरूपं तच्छालिनी द्वे अपि वाक्ये मिथो बिम्ब-प्रतिबिम्बभावं धारयतः । तत्र विशेषाङ्के यथा—

"को नाम केशवः के वा पाण्डवाः पुरतो मम ? ।
को नाम चन्द्रमाः के वा तारकास्तरणेः पुरः ॥ ७६९ ॥"

यथा वा—

"त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोर्विकसति कुमुदं कुमुद्वत्याः ॥ ७७० ॥"

---

१ अ. साम्यं । २ प. ०कृजि० । ३ प. ०वेऽपि, ब. ०मेतद् यथा । ४ अ. ०बिंबितां । ५ प. तरणे ।

सामान्यवती यथा—

" दधत्यार्त्तं सुखाकर्तुं सन्तः सन्तापमात्मनि[1] ।
सुदुःसहं सहन्ते हि तरवस्तपनातपम् ।। ७७१ ।। "

यथा[2] वा—

* " ते विरला सप्पुरिसा जे अभणन्ता घडंति कज्जसम्मूहे ।
थेव च्चिअ ते रुक्खा जे अमुणिअकुसुमनिग्गमा दिंति फलं ।।७७२।। "

वैधर्म्येणाप्यसौ यथा—

" कृतं च वेर्गाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च[3] नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्[4] न यावदायात्युदयाद्रिमौलिताम् ।।७७३।। "३६।

अथ दृष्टान्तप्रतिस्पर्द्धिनमर्थान्तरन्यासमाह—

**स स्मृतोऽर्थान्तरन्यासः सामान्यमितरोऽपि यत् ।**
**साधर्म्य–वैधर्म्यवता तदन्येन समर्थ्यते ।। ३७ ।।**

सोऽर्थान्तरन्यासः स्मृतः कथितः । मुख्यार्थसमर्थकस्यार्थान्तरस्य न्यसनमिति कृत्वा । सामान्यमितरोऽपि विशेषोऽपि साधर्म्यवता वैधर्म्यवता वा तदन्येन यत् समर्थ्यते सामान्यं विशेषेण विशेषश्च सामान्येनेत्यर्थः । तत्र सामान्यं विशेषेण साधर्म्यवता यथा—

" निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ।। ७७४ ।। "

वैधर्म्यवता यथा—

---

* ते विरलाः सत्पुरुषा येऽभणन्तो घटयन्ति कार्यसमूहान् ।
स्तोका एव ते वृक्षा येऽज्ञातकुसुमनिर्गमा ददति फलम् ।।

---

१ व. ०त्मनः । २ अ. गर्वाभि० । ३ अ. ०हिता० । ४ प. ०वदेव ।

“ सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं वाऽभविष्यदरुणस्तमसां वधाय
तं चेत् सहस्रकिरणो धुरि नाकरिष्यत् ॥ ७७५ ॥ ”

अत्र किं वाऽभविष्यदेपि तु नाभविष्यदिति वैधर्म्यविशेषः ।

सामान्येन साधर्म्यवता यथा—

“ सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ? ॥७७६॥”

वैधर्म्यवता यथा—

“ उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर ! विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥७७७। ”
अत्र कः क्षमेत ? [3]न कोऽपीति वैधर्म्यम् ।

क्वचित् कार्यं कारणेन, कारणं च कार्येण समर्थ्यत इत्यपि दृश्यते ।

तत्राद्यो भेदो यथा—

“ उच्छिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्णितावामयः स च ॥ ७७८ ॥ ”

अत्रानुपेक्षा कार्यभूता व्याधि-वैरिणोस्तुल्यत्वाभिधानेन कारणेन समर्थिता ।

द्वितीयो यथा—

“ सङ्ग्रामसीम्नि सुभटास्तरवारिधारामिन्दीवरस्रजमिवाजगणन् पतन्तीम् ।
उद्गर्वपर्वहरिणाङ्कराबदातमूर्त्तिः स्फुरत्यपरथा त्रिपुला न कीर्त्तिः ॥७७९॥”

---

१ अ. ०दिति वै० । २ प. समर्थः । ३ ब. किंतु न । ४ अ. न पे० । ५ अ. वत्स्यंता० ।

अत्र कीर्तिस्फुरणेन कार्येण खड्गधारानिपाताऽवज्ञारूपं कारणं समर्थितम् ।

क्वापि श्लेषाविद्धोऽप्येष दृश्यते । यथा—

" उल्लासयति लोकस्य प्रीतिं मलयमारुतः ।
ननु दाक्षिण्यसम्पन्नः सर्वस्यावहति श्रियम् ॥ ७८० ॥ " इति ॥३७॥

अथौपम्यभेदप्रस्तावाद् व्यतिरेकमाह—

**विच्छित्तये यदन्यस्मादुपमेयस्य बध्यते ।**
**आधिक्यमथ हीनत्वं व्यतिरेकः स कीर्तितः ॥ ३८ ॥**

विच्छित्तये शोभातिशयायोपमेयस्य प्रस्तुतवर्ण्यमानस्यान्यस्मादुपमानाद-प्रस्तुतादाधिक्यं हीनत्वं वा यन्निबध्यते स तद्व्यतिरेककारित्वाद् व्यतिरेकः॥३८॥

अथास्य विषयमाह—

**गोचरश्चोपमा[1] श्लेषोपमा श्लेषोऽथ रूपकम् ।**
**प्रसिद्धेश्च विपर्यासः सादृश्यं चास्य कीर्तितः ॥ ३९ ॥**

अस्य च व्यतिरेकस्योपमा श्लेषसंमिश्रोपमा केवलश्लेषो रूपकं प्रसिद्धेर्विप-र्यासो व्यत्ययः । सादृश्यं च सदृशगुणत्वं च[2] गोचरो विषयः कीर्तितः कथितः ।

तत्र वाच्योपमायां व्यतिरेको यथा—

" असिमात्रसहायस्य प्रभूतारिपराभवे[3] ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥ ७८१ ॥ "

आक्षिप्तोपमायां यथा—

" इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन जयन्ती(ती)न्दुं कलङ्कितम् ॥ ७८२ ॥ "

श्लेषोपमायां यथा—

---

१ प ०रस्य । २ अ. त्वं० गो० । ३ व. ०भवात् ।

" अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ॥ ७८३ ॥ "

कलाशब्दोऽत्र श्लिष्टः ।

यथा वा—

" हरवन्न विषमदृष्टिर्हरिवन्न विभो ! विधूतविततवृषः ।
रविवन्न चापि दुःसहकरतापितभूः कदाचिदसि ॥ ७८४ ॥ "

अत्र विषमादयः शब्दाः श्लिष्टाः ।

श्लेषे यथा—

" श्लाघ्या शेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजितै-
त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः ।
विभ्राणां मुखमिन्दुरूपमखिलं चन्द्रात्मचक्षुर्दधत्
स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥७८५॥"

वाच्यरूपके यथा—

" वक्त्रोदरे वहसि दिव्यसरस्वतीं यच्चक्रं क्रमाम्बुरुहि दोःशिखरे धरित्रीम् ।
प्रत्यङ्गमेव कमलामथ कम्बुलीलां कण्ठे विभो ! तदसि कोऽप्यपरो मुकुन्दः॥७८६॥"

प्रतीयमानरूपके यथा—

" प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते विकल्पानिति दधत इवाभाति कम्पः पयोधेः ॥७८७॥ "

अत्र वाक्यार्थान्यथाऽनुपपत्तेर्वर्ण्यमानस्य विष्णुत्वेन रूपणं प्रतीयमानम्, इह चाप्राप्तश्रीकत्वात् पूर्वावस्थायाः प्राप्तश्रीकत्वादिना वर्ण्यमाननृपारोपितो विष्णुर्व्यतिरिच्यत इति व्यतिरेकः ।

प्रसिद्धिविपर्यासो यथा—

---

१ प. व. ०लश्री० । २ अ. वापि । ३ प. श्लेष० । ४ प. ०तात्रै० । ५ अ. ०रपा-स्पद० । ६ अ. ०नसुम० ।

"चापं पुष्पितचूतपादपलता मौर्वी द्विरेफावलिः
पूर्णेन्दोरुदयोऽभियोगसमयः पुष्पाकरोऽग्रेसरः ।
अस्त्राण्युत्पलकेतकीसुमनसो [1]वेध्यं मनः कामिनां
त्रैलोक्ये जयति स्मरस्य ललितोल्लेखो जिगीषाग्रहः ॥ ७८८ ॥"

कठोरशस्त्राद्युपकरणत्वेनापरजिगीषूणां प्रसिद्धिस्तस्याश्चात्र विपर्यासः ।

सादृश्ये यथा—

"त्वं समुद्रश्च दुर्वारौ महासत्त्वौ दुरासदौ ।
इयता युवयोर्भेदः स जलात्मा पटुर्भवान् ॥ ७८९ ॥"

आक्षिप्तोपमायां हीनत्वव्यतिरेको यथा—

"क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम् ।
विरम प्रसीद सुन्दरि ! यौवनमनिवर्ति यातं तु ॥ ७९० ॥"

अत्र चन्द्रापेक्षया यौवनस्य न्यूनत्वं गतस्य पुनर्व्यावर्तनाभावात् ॥ २९ ॥

अथ विनोक्तिमाह—

**विना किञ्चिद् यदन्यस्य सत्त्वासत्त्वविपर्ययः ।**

**विनोक्तिः सा**

किञ्चिद् वस्त्वन्तरं विना यदन्यस्यापरस्य वस्त्वन्तरस्य सत्त्वासत्त्वविपर्ययो यः सत्त्वविपर्ययः शोभनत्वाभावः, असत्त्वविपर्ययोऽशोभनत्वाभावश्चेति द्विधा सा विनोक्तिरलङ्कृतिः ।

तत्राद्या यथा—

"विनयेन विना का श्रीः ? का निशा शशिना विना ? ।
रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता ? ॥ ७९१ ॥"

अत्र विनयाद्यभावप्रयुक्तः श्रीप्रभृतीनां शोभनत्वाभावः । इयं च विनाशब्दप्रयोगमन्तरेणापि क्वचित् तदर्थप्रतीतौ भवत्येव ।

यथा—

१ प. विद्धं । २ अ. ०सो जि० । ३ प. ०वर्तिता० ।

" निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन ॥७९२. "

अत्र नलिनी-मृगाङ्कयोर्मिथो दर्शनं विना जन्मनो निरर्थकत्वमिति शोभनत्वाभावप्रतीतिः॥ एवमन्योन्यविनाभणितिभङ्ग्या चेयं काव्यं [का]मं चमत्करोति ।

द्वितीया यथा—

" मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥ ७९३ ॥"

अत्र तथाविधस्त्रीमित्राभावप्रयुक्तो नरेन्द्रसूनोरशोभनत्वाभावः ।

अथ विशेषणविच्छित्त्याऽलङ्कारद्वयम् । तत्रादौ परिकरमाह—

**परिकरः साभिप्रायविशेषणः ॥ ४० ॥**

साभिप्रायाणि प्रतीयमानार्थगर्भाणि विशेषणानि यत्र स परिकरः प्रसन्नगम्भीरपदत्वादयं न ध्वनेर्विषयः प्रतीयमानांशस्य वाच्यपरिकरत्वात् । यथा—

" राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च ।
पीतं तस्य मयाऽद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग् वक्षसः ॥ ७९४ ॥ "

अत्र राज्ञ इत्यादिपदेषु सोत्प्रासत्वप्रतीतेः प्रसन्नगम्भीरपदत्वम् ॥ ४० ॥

अथ समासोक्तिमाह—

**क्वचिद् भेदकसाम्येन कार्यसाम्येन वा क्वचित् ।**
**क्वचिच्चोभयसाम्येन यदप्रस्तुतगम्यता ॥ ४१ ॥**
**सम्मता सा समासोक्तिस्तत्र भेदकतुल्यता ।**
**श्लिष्टतौपम्यगर्भत्व-साधारण्यैस्त्रिधा भवेत् ॥ ४२ ॥**

क्वचित् कस्मिंश्चित् काव्ये भेदकानां विशेषणानां साम्येन साधारण्येन, न तु विशेष्यस्यापि श्लेषत्वप्रसङ्गात् । क्वचित् कार्याणां साध्यानां वा साम्येन क्वचिच्चो-

१ अ विनिद्रसू० । २ अ ०न्त्यल० । ३ प. ०भृतो ।

भयेषां विशेषणानां कार्याणां च साम्येन यदप्रस्तुतगम्यता यदप्रस्तुतं गम्यते। प्रस्तुतगम्यत्वे च प्रस्तुतप्रशंसा वक्ष्यते सा समासोक्तिरित्यलङ्कृतिः सम्मता। तच्च प्रतीयमानमप्रस्तुतमत्र प्रस्तुतोपस्कारकत्वेन प्रतीयते, न तिरस्कारकत्वेन। उपस्कारकत्वाच्च तद्व्यवहारसमारोपः। तिरस्कारकत्वे तु ध्वनेस्तद्रूपताप्रतीतौ प्रतीयमानरूपकस्य वा विषयः स्यान्न समासोक्तेः। तत्र तेषु त्रिषु साम्येषु मध्ये भेदकतुल्यता विशेषणसाम्यं श्लिष्टतया औपम्यगर्भत्वेन साधारण्येन च भवेत् त्रिधा त्रिविधं भवति।

तत्र श्लिष्टतया यथा—

" आगत्य सम्प्रति वियोगविसंस्थुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि! पादपतनेन सहस्ररश्मिः॥ ७९५॥ "

अत्र श्लिष्टविशेषणमाहात्म्यादपरित्यक्तस्वस्वरूपयोरम्भोजिनी-सूर्ययोर्नायकव्यवहारप्रतीतिः। ' सविशेषणमाख्यातं वाक्यम् ' इति शब्दशास्त्रोक्तन्यायेन पादपतनादीनामपि विशेषणत्वम्।

औपम्यगर्भत्वेन यथा—

" दन्तप्रभा-पुष्पचिता पाणि-पल्लवशालिनी।
केशपाशालिवृन्देन सुवेषा हरिणेक्षणा॥ ७९६॥ "

अत्र दन्तप्रभा पुष्पाणीवेत्युपमागर्भत्वेन कृते समासे पश्चाद् दन्तप्रभासदृशैः पुष्पैश्चितेति शाकपार्थिवादित्वान्मध्यमपदलोपिसमासान्तराश्रयणेन विशेषणसाम्यमहिम्ना लताव्यवहारप्रतीतिः। रूपकगर्भत्वेन विशेषणसाम्यमेकदेशविवर्त्तिरूपकस्यैव विषयो नास्याः।

साधारण्येन यथा—

" तन्वी मनोरमा बाला लोलाक्षी पुष्पहासिनी।
विकाश(स)मेति सुभग! भवद्दर्शनमात्रतः॥ ७९७॥ "

---

१ प. प्रियविप्रयो०। २ प. स तां। ३ अ. ०ष्पशा०। ४ अ. ०शोभिनी। ५ अ. ०म्यदे०।

अत्र तनुत्वादिविशेषणसाधारण्यात् लोलाक्ष्या लताव्यवहारप्रतीतिर्लैकगामित्वाच्च विकासोऽत्र कारणं विकासश्च प्रकृते उपचरितो ज्ञेयः।

कार्यसाम्येन यथा—

"विलिखति कुचावुच्चैर्गाढं करोति कचग्रहं
लिखति ललिते वक्त्रे पत्रावलीमसमञ्जसम्।
क्षितिप! खदिरैः श्रोणीबिम्बाद् विकर्षति चांशुकं
मरुभुवि हठान्नश्यन्तीनां तवारिमृगीदृशाम् ॥ ७९८ ॥"

अत्र कुचविलेखनादिकार्यसाम्येन हठकामुकव्यवहारप्रतीतिः।

उभयसाम्येन यथा—

"निर्लूनान्यलकानि पाटितमुरः कृत्स्नोऽधरः खण्डितः
कर्णे रुग्जनिता कृतं च नयने नीलाब्जकान्ते क्षतम्।
यान्तीनामतिसम्भ्रमाकुलपदन्यासं मरौ नीरसैः
किं किं कण्टकिभिः कृतं न तरुभिस्त्वद्वैरिवामभ्रुवाम्? ॥ ७९९ ॥"

अत्र नीरसैः कण्टकिभिरिति विशेषणसाम्यम्। निर्लूनान्यलकानीत्यादि च कार्यसाम्यम्। व्यवहारसमारोपश्चात्र सर्वत्र जीवितम्। स च लौकिके वस्तुनि लौकिकस्य वस्तुनः, शास्त्रीये शास्त्रीयस्य, लौकिके शास्त्रीयस्य, शास्त्रीये वा लौकिकस्येति चतुर्धा।

तत्राद्यो यथा—

"यामालिलिङ्ग मुखमाशु दिशां चुचुम्ब रुद्धाम्बरं शशिकलामलिखत् कराग्रैः।
अन्तर्निमग्नचरपुष्पशरोऽतितापात् किं किं चकार तरुणो न यदीक्षणाग्निः ॥ ८०० ॥"

अत्रेक्षणाग्नौ कामुकव्यवहारसमारोपः।

द्वितीयो यथा—

---

१ व. कुच०। २ व. विलि०। ३ प. ०रश्रो०। ४ अ. ० म्ये ह०। ५ प. लीला०। ६ व. सर्वजी०। ७ अ. यामा०। ८ प. ०रः शि०, व. ०नरपु०।

“ यैरेकरूपमखिलास्वपि वृत्तिषु त्वां पश्यद्भिरव्ययमसङ्ख्यतया प्रवृत्तम् ।
लोपः कृतः किल परत्वजुषो विभक्तेस्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये ॥८०१॥”

अत्रागमप्रसिद्धे वस्तुनि व्याकरणव्यवहारसमारोपः ।

तृतीयो यथा—

“ सीमानं न जगाम यन्नयनयोर्नान्येन यत् सङ्गतं
न स्पृष्टं वचसा कदाचिदपि यद् दृष्टोपमानं न यत् ।
अर्थादापतितं न यन्न च यन्न तद् किञ्चिदेणीदृशो
लावण्यं जयति प्रमाणरहितं चेतश्चमत्कारकृत् ॥ ८०२ ॥ ”

अत्र लावण्ये लौकिके तर्कशास्त्रप्रसिद्धवस्तुसमारोपः ।

चतुर्थो यथा—

“ पश्यन्ती त्रपयेव यत्र तिरयत्यात्मानमाभ्यन्तरी
यत्र त्रुट्यति मध्यमाऽपि मधुरध्वन्युञ्जिगासारसाद् ।
चाटूच्चारणचापलं वितनुतां वाक् तत्र बाह्या कथं
देव्या ते परया प्रभो ! सह रहःक्रीडा–दृढालिङ्गने ॥ ८०३ ॥ ”

अत्रागमप्रसिद्धे वस्तुनि लौकिकवस्तुव्यवहारसमारोपः ।

“ ऐन्द्रं धनुः पाण्डुपयोधरेण शरद् दधानाऽऽर्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरप्यधिकं चकार ॥ ८०४ ॥ ”

इत्यादौ विशेषणसाम्याभावादेकदेशविवर्त्तिन्युपमा । यदि वा प्रसादयन्ती-त्यादिकार्यसाम्यादुपमोपस्कृता समासोक्तिरेव ।

“ नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥ ८०५ ॥ ”

इत्यादौ पुनरेकदेशविवर्त्तिन्युपमैव गत्यन्तराभावादनुक्ताऽपि मन्तव्या ।

“ बालेन्दुवक्त्राण्यविकासभावाद् बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥ ८०६ ॥ ”

---

१ प. ०जगा० । २ प. ०कव्य०, व. ०कस्तुल्यव्य० । ३ भ. व. ०रभ्य० ।

इत्यादावुत्प्रेक्षाऽलंङ्कारालङ्कृता समासोक्तिः ।

क्वचिदर्थान्तरन्यासान्तर्गताऽपि दृश्यते । यथा–

" अथोपगूढे शरदा शशाङ्के प्रावृद् ययौ शान्ततडित्–कटाक्षा ।
कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ?॥८०७॥"

एवमानन्त्यमस्या इति ॥४१–४२॥[2]

अथ प्रस्तुतगम्यत्वेन समासोक्तिविपरीतामप्रस्तुतप्रशंसामाह—

**अप्रस्तुतप्रशंसा सा यत्र कार्ये प्रकारणे ।**
**सामान्ये च विशेषे च[3] प्रस्तुतेऽन्यस्य शंसनम् ॥४३॥**

**तुल्ये तुल्यस्य साधर्म्य–वैधर्म्याभ्यां तु तद् द्विधा ।**

सा अप्रस्तुतप्रशंसेत्यलङ्कृतिर्यत्र यस्यां कार्ये प्रस्तुतेऽन्यस्य कारणस्य, कारणे वा कार्यस्य, सामान्ये च[4] प्रस्तुते विशेषस्य, विशेषे वा सामान्यस्य शंसनं प्रशंसनम् । यत् पुनस्तुल्ये सदृशे प्रस्तुते तुल्यस्य सदृशस्य शंसनं तत् साधर्म्य-वैधर्म्याभ्यां द्विधा । तत्र कार्ये प्रस्तुते कारणस्य यथा–

" याताः किं न मिलन्ति सुन्दरि ! पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशाऽसि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ ८०८॥"

अत्र प्रस्थानात् किं निवृत्तोऽसीति कार्यप्रश्ने प्रस्तुते कारणमुक्तम् ।

कारणे कार्यस्य यथा—

" इन्दुर्लिप्त इवाञ्जनेन त(ज)डिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा ।
कार्कश्यं कलयाऽपि कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त ! शिखिनां बर्हाः सगर्हा इव ॥ ८०९ ॥"

---

१ प. न. ०लंकृ० । २ प. युग्ली । ३ ब. वा । ४ प. च वि० । ५ ब. ०पीना० । ६ बं. ०रमणो० ।

अत्रोत्प्रेक्षितैरिन्द्रादिगतैरञ्जनलिप्तत्वादिकार्यैरप्रस्तुतैर्लोकोत्तरं सीतावदनादिगतं सौन्दर्यं कारणभूतं प्रस्तुतं प्रतीयते ।

सामान्ये विशेषस्य यथा—

" एतत् तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन् यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै-
स्तत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा ॥ ८१० ॥ "

अत्र जडानामस्थाने महत्त्वसम्भावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ।

विशेषे सामान्यस्य यथा—

" सुहृद्वधूबाष्पजलप्रमार्जनं करोति वैर–प्रतियातनेन यः ।
स एव पूज्यः स पुमान् स नीतिमान् सुजीवितं तस्य स भाजनं श्रियः॥८११॥"

अत्र कृष्णं निहत्य, नरकासुरवधूनां यदि दुःखं शमयसि तत् त्वमेव श्लाघ्य इति विशेषे प्रस्तुते सामान्यमुक्तम् ।

तुल्ये प्रस्तुते तुल्याभिधानं साधर्म्येण यथा—

" पिबन् मधु यथाकामं भ्रमरः फुल्लपङ्कजे ।
अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम् ॥ ८१२ ॥ "

अत्र भ्रमरः कामितुल्यः, पङ्कजं प्रौढाङ्गनातुल्यं, कुड्मलं च मुग्धाङ्गनातुल्यम् ।

वैधर्म्येण यथा—

" धन्याः खलु वने वाताः कल्हारस्पर्शशीतलाः ।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः ॥ ८१३ ॥ "

अत्र वाता धन्या इत्यप्रस्तुतादहमधन्य इति प्रस्तुतं वैधर्म्येण प्रतीयते । एतच्च तुल्ये तुल्याभिधानं क्वचित् स्तुतिरूपं क्वापि निन्दारूपं क्वचिच्चोभयरूपं[2] क्वचिदनुभयरूपं च दृश्यते । तत्र स्तुतिरूपं यथा—

---

१ प. ०सुमा० । २ अ. ०पं च दृ० ।

" उत्तुङ्गे कृतसंश्रयस्य शिखरिण्युच्चावचग्रावणि
न्यग्रोधस्य किमङ्ग! तस्य वचसा श्लाघासु पर्याप्यते ।
बन्धुर्वा स पुराकृतः किमथवा सत्कर्मणां सञ्चयो
मार्गे रूक्षविपत्रशाखिनि जनो यं प्राप्य विश्राम्यति ॥ ८१४ ॥ "

निन्दारूपं यथा—

" आदाय वारि परितः सरितां शतेभ्यः किं तावदर्जितमनेन दुरर्णवेन ? ।
क्षारीकृतं च वडवादहने हुतं च पातालकुक्षिकुहरेषु निवेशितं च ॥८१५॥"

उभयरूपं यथा—

" निष्क्रन्दामरविन्दिनीं स्थपुटितोद्देशां कमेरुस्थलीं
जम्बालाविलमम्बु कर्तुमितरा सूते वराही सुतान् ।
दंष्ट्राग्रे चतुरर्णवोर्मिपटलैरुल्लाविताग्रामियं
यस्या एव शिशोः स्थिता विपदि भूः सा पोत्रिणी पुत्रिणी ॥८१६॥"

अत्र पूर्वार्द्धे निन्दा, उत्तरार्द्धे स्तुतिः ।

यथा वा—

" उपास्यं तत् पान्थाः! पुनरपि सरो मार्गतिलकं
यदासाद्य स्वेच्छं विलसथ विलीनक्लमभराः ।
इतस्तु क्षाराब्धेर्जरठमकरक्षुण्णपयसो
निवृत्तिः कल्याणी न पुनरवतारः कथमपि ॥ ८१७ ॥ "

अत्र पूर्वार्द्धे स्तुतिरुत्तरार्द्धे निन्दा ।

अनुभयरूपं यथा—

" इतो वसति केशवः पुरमितस्तदीयद्विषा-
मितोऽपि शरणागताः शिखरि पक्षिणः शेरते ।
इतोऽपि वडवानलः सहै समस्तसंवर्त्तकै-
रहो! विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ८१८ ॥ "

---

१ व. मुखेभ्यः । २ प. कुशेरु० । ३ ब. ०राप्ला० । ४ प. पत्रिणः । ५ ब. सहसस० ।

अत्र स्तुतिर्निन्दा वा विस्मयोक्तावेवास्तमयते ।

श्लेषेऽप्येषा भङ्गिः सम्भवति । यथा—

" नालस्य प्रसरो जडेष्वपि कृतावासस्य कोशे रुचि-
र्दण्डे कर्कशता मुखे च मृदुता मित्रे महान् प्रश्रयः ।
आमूलं गुणसङ्ग्रहव्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ ८१९ ॥ "

अत्र पद्ये प्रस्तुते सत्पुरुषस्तुतिर्गम्या ।

अथास्यामेव वाच्यार्थस्वरूपमाह—

**वाच्योऽप्यर्थस्त्रिधैवास्यां सम्भवासम्भवोभयैः ॥ ४४ ॥**[1]

अस्यामप्रस्तुतप्रशंसायां सम्भवेनासम्भवेन सम्भवासम्भवेन च त्रिधैव वाच्योऽर्थस्तत्र सम्भवेनोदाहृतमेव ।

असम्भवेन यथा—

" कस्त्वं भोः ! कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ? ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायाऽपि परोपकारकृतये मार्गस्थितस्यास्ति मे ॥८२०॥ "

अत्राचेतनेन सह प्रश्नोत्तरिकाऽनुपपन्नेति वाच्यस्यासम्भवः । प्रमुख एव प्रस्तुताध्यारोपप्रतीतेस्तु सा युक्तैव ।

सम्भवासम्भवेन यथा—

" सोऽपूर्वो रसनाविपर्ययविधिस्तत् कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा ? ।
सर्वं विस्मृतवानसि भ्रमर हे ! यद् वारणोऽद्याप्यसा-
वन्तः शून्यकरो निषेव्यत इति भ्रातः ! क एष ग्रहः ? ॥८२१॥"

---

१ प. युगलं । २ अ. ०दकं । ३ प. ०र्वो वि० ।

अत्र भ्रमरस्यानासेवायां कर्णचापलस्य हेतुत्वं सम्भवि, रसनाविपर्ययादीनां त्वसम्भवीत्युभयरूपत्वम् ।

ननु कार्यात् कारणस्य गम्यतायामप्रस्तुतप्रशंसा चेदिष्यते तदा—

" येन लम्बालकः सास्रः कराघातारुणस्तनः ।
अकारि भग्नवलयो गजासुरवधूजनः ॥ ८२२ ॥"

इत्यादौ लम्बालकत्वादेः कार्यात् कारणभूतस्य गजासुरवधस्य प्रतीतौ यत् पर्यायोक्तमुच्यते, तस्य निर्विपर्यतयैव प्राप्नोति; नैवमप्रस्तुतप्रशंसायां हि कार्यादप्रस्तुतात् कारणं प्रस्तुतं गम्यते । पर्यायोक्ते तु द्वयोरपि प्रस्तुतत्वम् । गजासुरवधवत् तद्वधूवृत्तान्तस्यापि वर्णनीयत्वादित्यस्त्येव द्वयोरपि विषयविभाग इति ।

केचित् पुनः—

" लावण्यसिन्धुरपरैव हि केयमत्र यत्रोत्पलानि शशिना सह सम्प्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटीव यत्र यत्रापरे कदलिकाण्डमृणालदण्डाः ॥८२३॥"

इत्यादावप्यप्रस्तुतप्रशंसां मन्यन्ते, तदसत्; यत्रोत्पलानीत्यादौ भेदेऽभेद—रूपयाऽतिशयोक्त्यालङ्कृत्यात्मनो लावण्यसिन्धुरपरैव हीत्यत्राभेदे भेदरूपाया अतिशयोक्तेर्व्यतिरेकस्य वा विषयत्वात् ॥ ४४ ॥[3]

अथ प्रस्तुतोभयार्थत्वेन पूर्ववैधर्म्यात् पर्यायोक्तमाह—

**प्रस्तुतत्वे द्वयोः कार्यात् कारणं यत्र गम्यते ।
पर्यायेणोच्यमानत्वात् पर्यायोक्तं तदुच्यते ॥ ४५ ॥**

द्वयोरुभयोरपि कार्य—कारणयोर्वर्णनीयत्वेन प्रस्तुतत्वे सति यत्रालङ्कारविशेषे कार्यात् कारणं गम्यते तत् पर्यायोक्तं पर्यायेण भङ्ग्यन्तरेण गम्यस्याप्यर्थस्योच्यमानत्वात् । अत्र हि कार्याभिधानरूपेण विच्छित्त्यन्तरेण गम्योऽप्यर्थोऽभिधीयमान इव प्रतीयते । यथा—

" चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥ ८२४ ॥"

१ ब. ०यितैव । २ अ. ०क्त्यालंकृतात्मनो, ब. ०क्त्यालंकृता । ३ प. युग्मम् ।

अत्र राहुवधूनां तथाविधरतोत्सवरूपेण कार्येण राहुशिरश्छेदस्तत्कारणभूतो गम्यते । विष्णुप्रभावगम्यत्वाच्च द्वयोरपि वर्णनीयत्वेन प्रस्तुतत्वम् ।

यथा वा—

" महेन्द्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः ॥ ८२५ ॥ "

अत्र सुराङ्गनागण्डस्थलीनां प्रोषितपत्रलेखात्वरूपेण कार्येण तद्वल्लभवधः[2] कारणरूपः प्रतीयते[3] । ककुत्स्थविक्रमसूत्रितत्वाच्चोभयोरपि वर्ण्यत्वेन[4] प्रस्तुतत्वमिति ॥ ४५ ॥

अथ प्रतीयमानतालङ्कृतत्वसाधर्म्यात् पर्यायोक्तानन्तरमाक्षेपमाह—

**उक्तस्य वक्ष्यमाणस्य वक्तुमिष्टस्य बध्यते ।**
**विशेषाय यो निषेध इवाक्षेपः स लक्षितः ॥ ४६ ॥**

उक्तस्य प्रतिपादितस्य, वक्ष्यमाणस्य प्रतिपिपादयिषितस्य, वक्तुमिष्टस्य विवक्षितस्य कस्याप्यर्थस्य यो निषेध इव निषेधाभासो न तु निषेध एव वक्तुमिष्टस्यैव[5] हानिप्रसङ्गात् । कथं सोऽपि बध्यते इत्याह—विशेषाय कश्चिद् विशेषमाविष्कर्तुम्[6]अन्यथा गजस्नानतुल्यत्वं स्यात् । तस्य च विशेषस्य शब्दानुपात्तत्वात् गम्यत्वम् । स आक्षेप इत्यलङ्कारो लक्षितो विज्ञातः । अत्र चोक्तविषये आक्षेपे क्वचिद् वस्तु निषिध्यते, क्वचिद् वस्तुकथनमिति द्वौ भेदौ । तत्र वस्तुनिषेधो यथा—

*" बा[7](बा)लय ! नाहं दूई तीइ पिओ सि त्ति नम्ह[8] वावारो ।
सा मरइ तुज्झ अयसो एअं[9] धम्मक्खरं भणिमो ॥ ८२६ ॥ "

अत्रोक्तस्य दूतीत्वस्य वस्तुनो निषेधेन दूत्यः सर्वा अपि मिथ्यावादिन्योऽहं सत्यवादिनीति विशेषः प्रतीयते ।

---

* बालक ! (बालायाः) नाहं दूती तस्याः प्रियोऽसीति नास्माकं व्यापारः ।
सा म्रियते तवायशः एतद् धर्माक्षरं भणामः ॥

---

१ अ. ०जन्य० । २ अ. ०वधूः । ३ प. प्रतीते । ४ अ. ०मानत्वे० । ५ अ. ब. ०ष्टत्वस्यैवं । ६ प. ०माघातुमा० । ७ प. बालय । ८ अ. नह्म । ९ अ. एयं, ब. एवं ।

वस्तुकथननिषेधो यथा—

" ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली-मृणालवलयान्यम्भोजिनीपल्लवाः।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त! किमनेनोक्तेन न ब्रूमहे ॥ ८२७ ॥ "

अत्र त्वद्वियोगे सर्वं तस्याः स्फुलिङ्गायते इति वस्तुनः कथनम्। तस्य निषेधेन तवोपसङ्ग्रहीतुमुचितैवेयम्, नान्यथा जीवतीति विशेषो द्योत्यते। वक्ष्यमाणविषये तु कथनमेव निषिध्यते। तच्च क्वापि सामान्योक्तौ विशेषनिष्ठत्वेन क्वचित् पुनरंशोक्तावंशान्तरगतत्वेनेत्यत्रापि द्वौ भेदौ। तत्राद्यो यथा—

*" ए! एहि किं पि कीइ वि कएण निक्किव! भणामि अलमहवा।
अवियारियकज्जारंभयारिणी मरउ न भणिस्सं ॥ ८२८ ॥ "

अत्र किं पि भणामीति सामान्योक्तावुत्तरस्य विशेषभणनीयस्य निषेधेन तस्यामीदृशीं मृत्युदशां प्राप्तायामपि न त्वमहङ्कारं त्यजसीति दूतीप्रकोपरूपो विशेषो गम्यते।

द्वितीयो यथा—

" ज्योत्स्ना तमः पिकवचस्तुषारः
क्षारो मृणालवलयानि कृतान्तदन्ताः।
सर्वं दुरन्तमिदमद्य शिरीषमृद्वी
सा नूनमाः! किमथवा हतजल्पितेन ? ॥ ८२९ ॥ "

अत्राद्य शिरीषमृद्वी सा नूनमित्यंशोक्तावंशान्तरस्य म्रियत इति वक्ष्यमाणस्य निषेधेन तस्यैव वक्तुमशक्यत्वादिति विशेषः ख्याप्यते। एवं चात्र निषेधस्य विधिर्न च विहितस्य निषेधः, किन्तु विशेषाय निषेधेन विधिराक्षेप इति पर्यव-

* ए! एहि किमपि कस्या अपि कृते निष्कृप! भणाम्यलमथवा।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥

१ अ. ०आरिअ०। २ ब. ण। ३ प. ०षेधे।

सितम् । तेन हर्षचरिते 'अनुरूपो देव्या इत्यात्मसम्भावना'इत्यादावुक्तविषय आक्षेपः । 'बाल इति सुतरामपरित्याज्योऽस्मि रक्षणीय इति भवद्भुजपञ्जरं रक्षास्थानम्'इत्यादौ त्वाक्षेपबुद्धिर्न कार्या । यतो बालत्वादेरुक्तस्य न निषेध्यत्वेन प्रतीतिः, प्रत्युत परित्यागनिषेधकत्वेन ततो व्याघातभेद एवायं नाक्षेपः ॥४६॥

तदिष्टस्य निषेध्यत्वमाक्षेपोक्तेर्निबन्धनम् ।
सौकर्येणान्यकृतये न निषेधकता पुनः ॥ ४७ ॥

इत्याक्षेपपिण्डार्थ इति ॥ ४७ ॥

अथ प्रकारान्तरेणाक्षेपमेवाह—

यः स्याद् विधिरिवानिष्टवस्तुनः सोऽपि नापरः ।

विशेषायेति वर्त्तते । अनिष्टस्यानभिमतस्य वस्तुनोऽर्थस्य विशेषप्रकाशनाय यो विधिरिव निषेधपर्यवसायित्वाद् विध्याभासो न विधिरेव । वस्तुनोऽनिष्टत्वव्याघातात् । सोऽपि नापरः किन्तु स एवाक्षेपः । यथा—

" गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥ ८३० ॥"

अत्र प्रियप्रस्थानस्यानिष्टस्याप्यनिराकरणरूपेण निषेधपर्यवसायिना विधिना त्वद्विरहे सद्यः प्राणान् त्यक्ष्यामीति विशेषः प्रकाश्यते ।

" अनङ्गः पञ्चभिः पौष्पैर्विश्वं व्यजयतेषुभिः ।
इत्यसम्भाव्यमथवा विचित्रा वस्तुशक्तयः ॥ ८३१ ॥"

तथा—

" कुतः कुवलयं कर्णे करोषि कलभाषिणि ! [1] ।
किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे ? [2] ॥ ८३२ ॥"

इत्यादावप्याक्षेपमिच्छन्त्येके [3] ।

अथ प्रतीयमानांशेन पूर्वानुयायिनीं व्याजस्तुतिमाह—

---

१ प. ०तव० । २ प. किमपर्याप्तमपांगम० । ३ प. ०च्छंत्येते ।

**व्याजस्तुतिः सा या स्तुत्या निन्दया वाऽन्यगम्यता ॥ ४८ ॥**

सा व्याजरूपा स्तुतिर्व्याजेन वा स्तुतिर्व्याजस्तुतिः । या स्तुत्याऽर्थवादेन निन्दया वा गर्हया अन्यस्या निन्दायाः स्तुतेर्वा गम्यता प्रतीयमानत्वम् । तत्र स्तुत्या निन्दाया गम्यता । यथा—

" नामाप्यन्यतरोर्निमीलितमभूत् तत् तावदुन्मीलितं
प्रस्थाने स्खलतः स्ववर्त्मनि विधेरन्यैर्गृहीतः करः ।
लोकश्चायमदृष्टदर्शनकृताद् दृग्वैशसादुद्धृतो
युक्तं काष्ठिक ! लूनवान् यदसि तामाम्रालिमाकालिकीम् ॥८३३॥ "

अत्र स्तुतौ वाच्यायां निन्दा गम्यते ।

निन्दया स्तुतेर्गम्यत्वं यथा—

" इन्दोर्लक्ष्म स्मरविजयिनः कण्ठपीठं मुरारि-
र्दिङ्नागानां मदमलमषीमाञ्जि गण्डस्थलानि ।
अद्याप्युर्वीवलयतिलक ! श्यामलिम्नाऽवलिप्ता-
न्युद्भासन्ते वद धवलितं किं यशोभिस्त्वदीयैः? ॥ ८३४ ॥ "

अत्र किंशब्दवाच्यादधिक्षेपान्निन्दायां वाच्यायां कतिपयपदार्थवर्जं सर्वं जगद् भवद्यशोभिर्धवलितमिति स्तुतिः प्रतीयते ॥ ४८ ॥

अथार्थद्वयालङ्कृतत्वसाधर्म्याद् व्याजस्तुत्यनन्तरं श्लेषमाह—

**वाक्यमेकमनेकार्थं यत्र श्लेषः स भण्यते ।**

यत्र यस्मिन्नेकं वाक्यं पदसमुदायरूपमनेकार्थं द्वित्राद्यर्थविभूषितं भवति[3] ।

" उदयमयते दिग्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः ।
रचयतितरां स्वैराचारप्रवर्तनकर्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥ ८३५ ॥ "

---

१ अ. प. ०न्ययु० । २ प. ०म्नानु० । ३ अ. प. नयति । ४ प. तव ब० ।

अत्राभिधाया अनियन्त्रणाद् द्वावप्यर्क-भूपौ वाच्यौ। नियन्त्रणे तु ध्वनेरेव विषयः स्यात्।

अथ विरोधमूलानलङ्कारानभिधित्सुः प्रथमं विरोधमाह—

**विरुद्धत्वमिवार्थानां विरोधो विषयैक्यतः ॥ ४९ ॥**

अर्थानां जाति-गुण-क्रिया-द्रव्यरूपाणां यद् विरुद्धत्वमिव विरोधस्य प्रमुख एव प्रतिभासमानत्वात्। प्ररूढस्य तु तस्य नालङ्कारता। प्रत्युत दोषत्वप्रसङ्गात्। कस्माद् विरुद्धत्वमित्याह-विषयैक्यत एकाश्रयत्वात् भिन्नाश्रयत्वविरोधि पुनरसङ्गत्यादयो वक्ष्यन्ते स विरोधो नामालङ्कारः ॥ ४९ ॥

अथास्य भेदसङ्ख्यामाह—

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद् गुणस्त्रिभिः ।**
**क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ॥ ५० ॥**

जातिर्जात्याद्यैर्जाति-गुण-क्रिया-द्रव्यैश्चतुर्भिर्विरुद्धा स्यादिति चत्वारो भेदाः। गुणश्च गुण-क्रिया-द्रव्यैस्त्रिभिर्विरुद्ध इति त्रयो भेदाः। क्रिया च क्रिया-द्रव्याभ्यां द्वाभ्यां विरुद्धेति द्वौ भेदौ। द्रव्यं द्रव्येणैव विरुद्धमेत्येको भेदः। इति विरोधस्य ते भेदा दश भवन्ति। तत्र दिग्मात्रमुदाह्रियते। जातेर्जात्या विरोधो यथा—

“ अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः ।
सुभग ! कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥ ८३६ ॥ ”

एवं गुणादिभिर्ज्ञेयः।

गुणस्य गुणेन यथा—

“ सततं मुसलासक्ता बहुतरगृहकर्मघटनया नृपते ।[१]
द्विजपत्नीनां कठिना[ः] सति भवति कराः सरोजसुकुमाराः ॥८३७॥ ”

एवं क्रिया-द्रव्याभ्यां ज्ञेयः।

क्रियायाः क्रियया यथा—‘ परिच्छेदातीतः सकलवचनानामविषयः ’ इत्यादिः। अत्र जड इति ताप-क्रिययोर्विरोधः। एवं द्रव्येण ज्ञेयः।

---

१ पा. ०स्तव।

द्रव्यस्य द्रव्येण यथा—

" समदमतङ्गजमदजलनिःसङ्गतरङ्गिणीपरिष्वङ्गात्।
क्षितितिलक! त्वयि तटजुषि शङ्करजूटापगाऽपि कालिन्दी ॥८३८॥"

एतेषु नलिनीकिसलयादि-दवदहनयोर्जात्योर्विरहेण काठिन्य-सौकुमार्य-योर्गुणयोर्भूपप्रभावेण जडीकरण-तापकरणक्रिययोर्वस्तुस्वरूपेण गङ्गा-कालिन्द्योर्द्रव्ययोर्नृपमहिम्ना च विरोधः समाधीयते।

श्लेषजन्माऽप्येष दृश्यते यथा—' सन्निहितबालान्धकारा भास्वन्मूर्तिश्च ' इत्यादौ । यथा वा-' कुपतिमपि कलत्रवल्लभम् ' इत्यादि ।

भिन्नविषयत्वेऽपि क्वचिद् विरोधमिच्छन्ति। यथा—

" कूजितं राजहंसानां वर्धते मदमञ्जुलम्।
क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम् ॥ ८४० ॥" ॥ ५० ॥

अथासङ्गतिमाह—

**कार्य-कारणयोर्भिन्नदेशतायां त्वसङ्गतिः ।**

इह यद्देशं कारणं तद्देशमेव कार्यमुत्पद्यमानं दृष्टम्। न हि महानसस्थो वह्निः पर्वतनितम्बस्थं धूमं जनयति। यदा पुनरेतां व्यवस्थामपास्य कार्य-कारणयोः कथञ्चिद् भिन्नदेशता निबध्यते। तदा तस्यां सत्यामसङ्गतिर्नामालङ्कृतिर्भवति। तुशब्दः पूर्वस्मिन् विषयैक्यमस्यां पुनर्विषयभेद इति व्यतिरेकार्थः।

उदाहरणं यथा—

" शम्भुर्यद् गुणवल्लरीमुपनयत्याकृष्य कर्णान्तिकं
अश्यन्ति त्रिपुरावरोधसुदृशां कर्णोत्पलग्रन्थयः।
स्वं चास्फालयति प्रकोष्ठकमिमामुन्मुच्य तासामहो!
भिद्यन्ते वलयानि दाशरथिना तद् भग्नमीदृग् धनुः॥ ८४१ ॥"

अत्र गुणवल्ल्याः कर्णान्तिकोपनयनं प्रकोष्ठास्फालनं च कारणं शम्भुस्थं कर्णोत्पलग्रन्थिभ्रंशो वलयभङ्गश्च कार्यं त्रिपुरवधूस्थमित्यनयोर्भिन्नदेशत्वम्

यथा वा—

" सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत् पयोधरयुगं धत्ते सखेदा वयम् ।
साऽऽक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥ ८४२ ॥ "

अत्रापि बाल्याप्रगल्भवचस्त्वादीनां कारण-कार्याणां स्त्री-पुरुषस्थत्वेन भिन्नदेशत्वं तथा बाल्यकृत-स्मरकृतयोरप्रगल्भवचस्त्वयोरभेदाध्यवसायः ।

अथ विशेषोक्तिमाह—

**विशेषोक्तिः फलाभावः साकल्ये हेतुसम्पदः ॥ ५१ ॥**

कारणसामग्र्ये कार्येण भाव्यमिति व्यवस्थायां यः क्वचिद् हेतुसम्पदः कारणविभूतेः साकल्ये परिपूर्णत्वे सत्यपि कथञ्चित् फलाभावः कार्याभावः सा विशेषोक्तिरलङ्कृतिः ॥ ५१ ॥

तस्या भेदानाह—

**सा च त्रिधा दधत्युक्तानुक्ताचिन्त्यनिमित्तताम् ।**

सा च विशेषोक्तिरुक्तनिमित्ततामनुक्तनिमित्ततामचिन्त्यनिमित्ततां च दधतीति त्रिधा त्रिप्रकारा भवति । तत्राद्या यथा—

" कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥ ८४३ ॥ "

अत्र सत्यप्यविकले दाहरूपे कारणेऽशक्तत्वाख्यस्य कार्यस्यानुत्पत्तिः । अवार्यवीर्यत्वं च निमित्तमुक्तम् ।

द्वितीया यथा—

" निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते ।
श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥ ८४४ ॥ "

---

१ अ. ॰मनसः । २ प. ॰पदं प॰ । ३ प. ॰शेष॰ ।

अत्र निद्रानिवृत्त्यादिके कारणौघे सत्यप्यालिङ्गनाचलनं कार्यं न सञ्जातम्, निमित्तं च सुखस्वादादिकं किञ्चिन्नोक्तम्।

तृतीया यथा—

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरताऽपि तनुं त(य)स्य शम्भुना न हृतं बलम्॥ ८४५॥

अत्र तनुहरणे कारणे सत्यपि बलहरणं कार्यं नाभवदचिन्त्यं चात्र निमित्तं प्रतीत्यगोचरत्वात्।

अथ कार्याभावस्वरूपमाह—

**फलाभावः क्वचित् कार्ये विरुद्धोत्पत्तिसम्भवः॥ ५२।**

क्वचित् कार्ये फलाभावः कार्याभावस्तस्य कार्यस्य यद् विरुद्धं कार्यं तस्य या उत्पत्तिस्तत्सम्भवो निबध्यते। यथा—'कर्पूर इव दग्धोऽपि' इत्यत्राशक्तत्वाख्यस्य कार्यस्याभावस्तद्विरुद्धशक्तिमत्त्वकार्यमुखेनोपनिबद्धः॥ ५२॥

अथास्या एव प्रकारान्तरमाह—

**हानिकल्पनया कस्याप्येकस्यैव गुणस्य यत्।**
**दृढतां नीयते साम्यं विशेषोक्तिस्तु साऽपरा॥ ५३॥**

सादृश्यहेतूनां गुणानां मध्ये कस्यचिदेकस्यैव गुणस्य हानिकल्पनया यदुपमानोपमेययोः साम्यमौपम्यं दृढत्वं प्राप्यते सा पुनरपरा विशेषोक्तिः। इयं च प्रायो रूपकसौरम्यगर्भैव भवति। यथा—

"अव्योमव्यतिषङ्गमाननमिदं बिम्बं सुधादीधिते-
रक्रीडासरसीपयःपरिचये नीलोत्पले ते दृशौ।
एतावप्यकलादपाणितुलितौ कल्याणकुम्भौ कुचौ
सुभ्रु! त्वं पुनरत्रिविष्टपपरीरम्भाऽसि रम्भैव नः॥ ८४६॥"

यथा वा—

"विधिप्रबोधजा लक्ष्मीः शची दुश्च्यवनच्युता।
अंग्रर्वाङ्का च शर्वाणी सेयमुर्वीतलोर्वशी॥ ८४७॥"

---

१ अ. शर्वाङ्का।

एवं 'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्।' 'हस्ती हि जङ्गमं दुर्गम्।' 'वेश्या हि नाम मूर्तिमत्येव विकृतिः।' इत्याद्यपि द्रष्टव्यमिति ॥ ५३ ॥

अथ विभावनामाह—

जात्यादीनामभावेऽपि कारणानां फलोदयात्।
विभाव्यते चमत्कारकारणं कारणान्तरम् ॥ ५४ ॥
यद्वा नैसर्गिकं यत्र सौन्दर्यं सा विभावना।

यत्र यस्यां जात्यादीनां जाति-गुण-क्रिया-द्रव्याणां प्रसिद्धानां कारणानामभावेऽप्यसत्तायामपि फलोदयात् कार्योत्पादाच्चमत्कारकारणं जगद्विस्मयहेतुस्तस्य कार्यस्याप्रसिद्धं कारणान्तरम् ॥ ५४ ॥

यदि वा तस्यैव नैसर्गिकं स्वाभाविकं किञ्चित् सौन्दर्यं रामणीयकं विभाव्यते प्रतीयते सा विभावना नामालङ्कृतिः। तत्र जात्यभावे यथा—

"न देवकन्यका नापि गन्धर्वकुलसम्भवा।
तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥ ८४८ ॥"

अत्र देवकन्यकात्वादिजातेः कारणभूताया अभावेऽपि तपोभङ्गविधानात् कार्यान्नायिकाया रूपातिशयः कारणान्तरं भाव्यते।

गुणाभावे यथा—

"न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः।
तथापि जितमेवाभूदमुना भुवनत्रयम् ॥ ८४९ ॥"

अत्र कठोरत्व-तैक्ष्ण्ययोर्गुणयोः कारणयोरभावेऽपि जगत्त्रयजयरूपात् कार्यात् पुष्पधन्वनः प्रभावातिशयः प्रतीयते।

क्रियाऽभावे यथा—

"न बद्धा भ्रुकुटिर्नापि स्फुरितो दशनच्छदः।
न च रक्ताऽभवद् दृष्टिर्जितं च द्विषतां कुलम् ॥ ८५० ॥"

---

१ अ. निकृतिः। २ अ. कापि।

अत्र भ्रुकुटीबन्धादीनां क्रियाणां कारणभूतानामभावेऽपि द्विषज्जयात् कार्याद् राज्ञः प्रतापातिशयो गम्यते ।

द्रव्याभावे यथा—

" एकचक्रो रथो यन्ता विकलो विषमा हयाः ।
आक्रामत्येव तेजस्वी तथाप्यर्को जगत्त्रयम् ॥ ८५१ ॥ "

अत्र विशिष्टरथादीनां कारणानामभावेऽपि जगत्त्रयाक्रमणात् कार्यादर्कस्य महिमोत्कर्षो व्यज्यते ।

नैसर्गिकसौन्दर्यविभावनं यथा—

" अनञ्जिताऽसिता दृष्टिस्तुरमावर्जिता मता ।
अरञ्जितारुणश्चायमधरस्तव सुन्दरि ! ॥ ८५२ ॥ "

अत्राञ्जितत्वादीनां कारणानामभावेऽप्यसितत्वादेः कार्याद् दृष्ट्यादीनामसितत्वादिसौन्दर्यं स्वाभाविकमभिव्यज्यते[2] ।

यथा वा—

" असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे ॥ ८५३॥ "

अत्र सम्भृतत्वादीनां कारणानामभावेऽपि मण्डनत्वादेः कार्याद् यौवनस्य स्वाभाविकं कामनीयं विद्यते ।

इयं च मालारूपाऽपि दृश्यते । यथा—

" अनिद्रो दुःस्वप्नः प्रपतनमनद्रि द्रुमतटं
जराहीनः कम्पस्तिमिररहितस्त्राससमयः ।
अनाघातं दुःखं विगतनिगडा बन्धनधृतिः
सजीवं जन्तूनां मरणमवनीशाश्रयरसः ॥ ८५४ ॥ "

अथास्याः स्वरूपान्तरमाह—

**अत्रापि कारणेऽभावस्तद्विरुद्धभवः क्वचित् ॥ ५५ ॥**

---

१ अ. ॰यष्टाङ्गः । २ प. ॰ते अ॰ ।

अत्राप्यस्यामपि विभावनायां कारणाभावस्तेषां कारणानां यानि विरुद्धानि प्रतिपक्षभूतानि कारणानि तत्प्रयोगसम्भवः क्वचिद् भवति ! यथा—

" यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा—
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ ८५५ ॥ "

अत्र च विभावना–विशेषोक्त्योरस्फुटत्वं सन्देहसङ्करश्चेत्याचक्षते । तथाहि– 'यः कौमारहरः' इत्याद्यनुत्कण्ठाकारणभणनद्वारेणोत्कण्ठाकारणानां वल्लभसङ्गमाभावादीनामभावो निबद्ध इति विभावना । तथा 'यः कौमारहरः' इत्यादीनां कारणानामनुत्कण्ठारूपस्य कार्यस्योत्कण्ठाख्यविरुद्धकार्यभणनद्वारेणाभावनिबन्ध इति विशेषोक्तिरिह च द्वयोक्तिरपि विरुद्धकार्यकारणोपनिबन्धेन कार्यकारणाभावनिबन्धादस्फुटत्वम् । साधक–बाधकप्रमाणाभावाच्च सन्देहसङ्कर इति ॥५५॥

अथ विषममाह—

**कार्यस्याननुरूपत्वमनर्थश्चार्थमिच्छतः ।**
**यत्र[3] तद् विषमं या च घटनाऽननुरूपयोः ॥ ५६ ॥**

कारणानुरूपं कार्यमुत्पद्यते इति प्रसिद्धौ यत्र कारणापेक्षया कार्यस्य गुणैः क्रियया वाऽननुरूपत्वमसादृश्यं तदेकं विषमम् । तथा कस्यचिदर्थमिच्छतोऽर्थाय प्रवृत्तस्य न केवलं तस्यार्थस्याप्रतिलम्भः, प्रत्युत कस्याप्यनर्थस्यावाप्तिरिति द्वितीयम् । या च परस्परमननुरूपयोरत्यन्तानुचितयोर्घटनासंयोगस्तत् तृतीयम् ।

तत्राद्ये गुणैरननुरूपत्वं यथा—

" सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥ ८५६ ॥ "

अत्र श्यामवर्णात् शुक्लवर्णोत्पत्तिरननुरूपा ।

क्रियया यथा—

---

१ अ. ०स्कंठनो० । २ व. विशेष० । ३ व. अत्र । ४ अ. ०स्यान० । ५ व. ०पांडुरं ।

" आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ ८५७ ॥ "

अत्रानन्ददानस्य तापक्रिया विरुद्ध्यते ।

द्वितीयं यथा—

" तीर्थान्तरेषु मलपङ्कवतीर्विहाय दिव्यास्तनूस्तनुभृतः सहसा लभन्ते ।
वाराणसि ! त्वयि तु मुक्तकलेवराणां लाभोऽस्तु मूलमपि यात्यपुनर्भवाय॥८५८॥"

अत्र कलेवरात्यन्तापहारलक्षणस्यानर्थस्योत्पत्तिर्व्याजस्तुत्या च सङ्करः ।

तृतीयं यथा—

" शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना ! ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ? ॥ ८५९ ॥ "

एवम्—

" विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमा सकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥८६०॥ "

इत्यादावपि विषमत्वं यथायोगमनुमन्तव्यम् ॥ ५६ ॥

अथ विषमविपरीतं सममाह—

**तत् समं सङ्गमो यत्र द्वयोरप्यनुरूपयोः ।**

तत् समं नामालङ्कारो यत्राभिरूपयोरनभिरूपयोर्वा द्वयोरप्यनुरूपयोः परस्परमुचितयोः सङ्गमो विश्रृङ्खलो योगो भवति । यथा—

" धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमे दत्तपत्रः स्मरस्य ।
जातं दैवात् सदृशमनयोः सङ्गतं यत् तदेतत्
शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥ ८६१ ॥ "

अत्राभिरूपयोगः ।

यथा वा—

---

१ प. ०मिदं । २ अ. ०णां ता० । ३ प. अ. संक० । ४ अ. विशृ० ।

" चित्रं चित्रं बत बत महच्चित्रमेतद् विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतिफलस्फातिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदैः काकलोकः ॥ ८६२ ॥ "

अत्रानभिरूपयोगः ।

अथाधिकमाह—

**अधिकं नानुरूपत्वमाश्रयाश्रयिणोस्तु यत् ॥ ५७ ॥**

आश्रयाश्रयिणोराधाराधेययोः पुनर्यन्नानुरूपत्वं क्वचिदाधेयापेक्षया आधारस्याधिक्यम्, क्वचिच्चाधारापेक्षयाऽऽधेयस्येत्यनुचितत्वं दृश्यते तदधिकं नामालङ्कारः । तत्राधाराधिक्यं यथा—

" द्यौरत्र क्वचिदाश्रिता प्रवितत्तं पातालमत्र क्वचित्
क्वाप्यत्रैव धरा धराधरजलाधारावधिर्वर्तते ।
स्फीतस्फीतमहो ! नभः कियदिदं यस्येत्थमेवंविधै—
र्दूरे पूरणमस्तु शून्यमिति यन्नामापि नास्तं गतम् ॥ ८६३ ॥ "

अत्र द्युप्रभृतीनां महतामप्याधेयानामपेक्षया गगनरूपस्याधारस्याधिक्यमुक्तम् ।

आधेयाधिक्यं यथा—

" युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तस्य न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥८६४॥"

अत्र महत्या अपि कैटभारितनोराधाररूपायाः सकाशादाधेयानां मुदां महत्त्वमुपनिबद्धम् ॥ ५७ ॥

अथ विचित्रमाह—

**यस्मिन्निष्टस्य कार्यस्य सम्यग्निष्पत्तिहेतवे ।**
**तद्विरुद्धक्रियारम्भस्तद् विचित्रमितीरितम् ॥ ५८ ॥**

---

१ प. ०णतफ० । २ प. ०दका० । ३ प. ०रूपं । ४ अ. ०मप्या० । ५ व. तु सुहृदां० ।

इष्टस्य वाञ्छितस्य कार्यस्य सम्यग्निष्पत्तिहेतवे सातिशयनिष्पत्ति-निमित्तं तस्य कार्यस्य या विरुद्धा क्रिया तस्या आरम्भो यस्मिन् भवति तद् विचित्रनामालङ्कारान्तरमीरितं कथितम् । यथा—

*" घित्तुं मुच्चइ अहरो अन्नत्तो पिक्खिउं व(च)लइ दिट्ठी ।
घडिउं विहडंति भुआ रया अ सुरयम्मि वीसामो ॥ ८६५ ॥ "

अत्र ग्रहणादिकार्यस्य सातिशयनिष्पत्तये मोचनादिक्रियाऽऽरम्भः ।

यथा वा—

" उन्नत्यै नमति प्रभुं प्रभुगृहान् द्रष्टुं बहिस्तिष्ठति
स्वद्रव्यव्ययमातनोति जडधीरागामिवित्ताशया ।
प्राणान् प्राणितुमेव मुञ्चति रणे क्लिश्नाति भोगेच्छया
सर्वं तद् विपरीतमेव कुरुते तृष्णान्धदृक् सेवकः ॥ ८६६ ॥ "

अत्रोन्नत्यादिकार्याणां निष्पत्तये नमत्यादिक्रियाऽऽरम्भः ॥ ५८ ॥

अथ पर्यायमाह—

**पर्यायोऽनेकमेकस्मिन् क्रमात् तद्व्यत्ययोऽपि यत् ।**

यदनेकमाधेयं द्वित्र्यादिकं क्रमादेकस्मिन्नाधारे भवति स एकः पर्यायः । तद्व्यत्ययोऽप्यनेकस्मिन् आधारे क्रमादेकमाधेयमिति द्वितीयः पर्यायः । क्रमवत्त्वाच्चास्यान्वर्थता । अनेकश्चायोऽस्मिन्नसंहतः संहतश्चेति द्विविधः ।

तत्रासंहत एकस्मिन्नाधारे यथा—

" तद् गेहं नतभित्तिमन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती न दन्तिकरिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं सङ्गीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं परां प्रापितः ॥ ८६७ ॥ "

* गृहीतुं मुच्यतेऽधरोऽन्यत्रचलति प्रेक्षितुं दृष्टिः ।
घटितुं विघटन्ते भुजौ रदाश्च सुरते विश्रामः ॥

१ प. व. भेत्तुं । २ प. द्वित्रादि० । ३ अ. किरणा० । ४ प. योगिता० ।

अत्र गेह–मन्दिरादयोऽर्था असंहताः ।

संहतो यथा—

" मधुरिमरुचिरं वचः खलानाममृतमहो ! प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुरन्तर्गतमिव हालहलं विषं तदेव ॥ ८६८ ॥ "

अत्रामृत–वि[1]षयोर्वचसि संहतत्वम्, क्रमात् तु निबन्धः ॥

अनेक आधारोऽसंहतो यथा—

" न त्वाश्रयस्थितिरियं तव कालकूट ! केनोत्तरोत्तरविशिष्टपदोपदिष्टा ? ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः खलानाम् ।८६९।"

अ[2]त्रार्णव–हृदयादयोऽसंहता आधाराः ।

संहता यथा—

" श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरल[3]गतयः संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ८७० ॥ "

अत्र श्रोणीबन्धादयस्तनुताद्याधाराः संहताः ।

अथ विकल्पमाह—

**वि[4]कल्पः स्याद् विरुद्धत्वे समानबलशालिनोः ॥ ५९ ॥**

एकसम्बन्धित्वेन तुल्यब[5]लशालिनोर्यद् विरुद्धत्वं परस्परव्यापारासहनत्वं क्वाश्चित् क्रियां प्रत्येकस्य प्रवृत्तावन्यस्याप्रवृत्तिरित्यर्थस्तस्मिन् सति विकल्पो नामालङ्कारः स्यादौपम्यगर्भत्वाच्चास्य चारुत्वम् । यथा—

" नमन्तु शिरांसि धनूंषि वा कर्णपूरीक्रियन्तामाज्ञा मौ[6]र्व्यो वा । "

अत्र वैरिसम्बन्धिनां शिरसां धनुषां च नमनक्रियां प्रत्येकप्रवृत्तौ तदन्याप्रवृत्तिरिति न्याय्यं[7]प्राप्तो विकल्पो वाशब्दश्चास्य वाचको नमनक्रियाकृतं चात्र सादृश्यम् । एवं कर्णपूरीक्रियन्तामित्यादौ योजनीयम् ।

---

१ प. ०षययो० । २ प. अर्ण० । ३ प. ०रणग० । ४ प. विरुद्धत्वे विकल्पः स्यात् । ५ प. व. ०लशोभिनो० । ६ अ. मूर्व्यो । ७ प. व. ०प्राप्तौ ।

" भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ ८७२ ॥ "

अत्रापि विकल्पं कश्चिन्मन्यते तदयुक्तम् । यतो नेत्रयोस्तनोश्च न कश्चिद् विरोधः । कथञ्चिद् विरोधो वा यस्यापि क्रियां प्रत्यप्रवृत्तिस्तस्यापि प्रभावेक्षाति-प्रसङ्गः । वाशब्दस्य तु समुच्चयार्थस्यापि दर्शनात् ॥ ५९ ॥

अथ व्याघातमाह—

साधितं यद् यथैकेन तथैवान्यस्तदन्यथा ।
यत् साधयति स ज्ञेयो व्याघातः

यत् कार्यमेकेन केनचिद् यथा येनोपायेन साधितं भवति, तथैव तेनोपायेन कश्चिदन्यस्तत् कार्यमन्यथा साधयति पूर्वरूपविरुद्धेन रूपेण जनयति स पूर्वरूप-व्याहतिरूपत्वाद् व्याघातो ज्ञेयः । यथा—

" दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ ८७३ ॥ "

अत्र हरेण दृग्रूपोपायेन स्मरो दग्धः, स्त्रियस्तु तेनैव जीवयन्तीत्यनेनैव दाहरूपकार्यव्याहतेर्व्याघातोऽयम् । सोऽपि विरूपाक्षस्येत्यादिशब्दोन्मीलित-व्यतिरेकनिमित्तत्वेनात्रोक्तः ।

अथास्यैव लक्षणान्तरमाह—

सोऽपरः पुनः ॥ ६० ॥

मुख्यकार्यविरुद्धस्य या सौकर्येण निर्मितिः ।

स पुनरपरो व्याघातः केनापि कारणेन समुपक्रान्तं यत् कार्यं तद्विरुद्धस्य

---

१ प. ०क्षिति० । २ प. तेनैवोपा० ३ अ. जय० । ४ प. वामलो० । ५ प. ०यंत्यनेन ।
६ प. सोपरः परः ।

कार्यान्तरस्य तेनैव कारणेन या सौकर्येण निर्मितिः सुकरं निष्पादनं तस्य कारणस्यात्यन्तं तदानुगुण्यादिति मुख्यकार्यव्याहतिहेतुत्वाद् व्याघातः । यथा हर्षचरिते राज्यवर्द्धनं प्रति हर्षोक्तिषु—

" यदि बाल इति सुतरामपरित्याज्योऽस्मि, रक्षणीय इति भवद्भुजपञ्जरं रक्षास्थानम् । " इत्यादि । अत्र बाल्य-रक्षणीयत्वादिकमवस्थानकारणत्वेन यत् सम्भावितं तत् प्रत्युत सुकरतया प्रस्थानकारणत्वेन समर्थितम् ।

अथान्योन्यमाह—

**अन्योन्यमुपकारित्वं वस्तुनोः क्रियया मिथः ॥ ६१ ॥**[२]

वस्तुनोः पदार्थयोः क्रियया क्रियाद्वारेण मिथः परस्परं यदुपकारित्वमुपकारभावस्तदन्योन्यं नामालङ्कारः । यथा—

" कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तुलस्य ।
अन्योन्यशोभाजननाद् बभूव साधारणो भूषणभूष्यभावः ॥ ८७४ ॥"

प्रतीयमानोपकारमप्येतद् दृश्यते । यथा—

*" उद्धच्छो पिअइ जलं जह जह विरलंगुली चिरं पहिओ ।
पावालिआ वि तह तह धारं तणुअं पि तणुएइ ॥ ८७५ ॥"

अत्र मिथोऽनुरागेऽङ्गुलीविरलीकरणेन धारातनूकरणेन च परस्परोपकारः प्रतीयमानः ॥ ६१ ॥

अथ विशेषमाह—

**अनाधारं यदाधेयमेकं वाऽनेकगोचरम् ।**
**विशेषोऽयमशक्यस्य कृतिश्चान्यस्य वस्तुनः ॥ ६२ ॥**

प्रसिद्धमाधारं विना न खल्वाधेयं स्थातुमर्हति । न चैकं वस्तु तेनैव स्वरूपेण युगपदनेकेषु विषयेष्ववतिष्ठते । नापि किञ्चित् कार्यं कुर्वता केनचिद्-

---

* ऊर्ध्वाक्षः पिबति जलं यथा यथा विरलाङ्गुलिश्चिरं पथिकः ।
प्रपापालिकाऽपि तथा तथा धारां तनुकामपि तनयति ॥

---

१ प. ०तित्वाद् । २ प. ब. श्रीह० । ३ प. युगलं । ४ प. ०पस्कारः ।

शक्यस्याप्यन्यस्य वस्त्वन्तरस्य तेनैव संरम्भेण कृतिश्च सम्भवति विरोधप्रसङ्गात्। तानि च किञ्चिदुं विशेषमाविष्कर्तुं यत् क्वचिद् वर्ण्यन्ते स विशेषो नामालङ्कारः।

तत्राद्यो भेदो यथा—

" दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ? ॥ ८७६ ॥"

अत्र कवीनामाधाराणामभावेऽपि गिरामवस्थानम् ।

द्वितीयो यथा—

" प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा दिशि दिशि च सा तद्वियोगाकुलस्य ।
हंहो चेतः ! प्रकृतिरपरा नास्ति ते काऽपि सा सा
सा सा सा सा जगति सकले कोऽयमद्वैतवादः ?॥ ८७७॥ "

अत्रैकस्या अपि नायिकाया अनेकेषु प्रासादादिष्ववस्थानम् ।

तृतीयो यथा—

" स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजताऽनवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥ ८७८ ॥ "

अत्र त्वत्सर्गसंरम्भेणैव स्मरादिसर्गः ॥ ६२ ॥

अथ विरोधप्रधानानलङ्कारानभिधाय शृङ्खलाक्रमालङ्कारानभिधित्सुः प्रथमं कारणमालामाह—

## सा तु कारणमाला स्यादुत्तरोत्तरहेतुता।
## पूर्वपूर्वस्य यत्

सा पुनः कारणमाला नामालङ्कृतिर्यत् पूर्वस्य पूर्वस्योत्तरमुत्तरं प्रति हेतुता निमित्तत्वम् । यथा—

१ अ. ०क्यस्य व० । २ प. कृत० । ३ प. ०संभवात् । ४ व. ०दर्शं० । ५ प. विध्यंते । ६ अ. अपि तेषु स्थानेषु अ० । ७ प. ०घहर्षं । ८ व. अं. प. ०लंकृतान०। ९ प. ०णनामा मालालं० ।

" जितेन्द्रियत्वं विनयस्य [1]साधनं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥ ८७९ ॥ "

अत्र जितेन्द्रियत्वादीनां विनयादीन् प्रति हेतुत्वादेव चारुत्वप्रतीतिः।

अति(थ) सारमाह—

**सारः प्रकर्षस्तूत्तरोत्तरम् ॥ ६३ ॥**

पूर्वपूर्वापेक्षया [2]उत्तरोत्तरस्य यः पुनः प्रकर्षः स सारनामाऽलङ्कारः । यथा—

" राज्ये सारं वसुधा वसुन्धरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥ ८८० ॥ " ॥ ६३ ॥

अथैकावलीमाह—

**[3]परं परं यथापूर्वं स्थाप्यतेऽपोह्यतेऽथवा ।**
**विशेषणतया यस्यामाहुरेकावलीति ताम् ॥ ६४ ॥**

यस्यां यत्र पूर्वं पूर्वं प्रति क्रमेण परं परं विशेषणतया व्यवच्छेदकत्वेन स्थाप्यतेऽपोह्यते निषिध्यते वा तामेकावलीति नाम्नाऽलङ्कृतिमाहुः कथयन्ति ।

तत्र स्थापनं यथा—

" पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गयः ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥ ८८१ ॥ "

अत्र पुराणां वराङ्गनास्तत्प्रभृतीनां च रूपादीनि विशेषणानि स्थापितानि।

अपोहनं यथा—

" न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः॥८८२॥"

अत्र [4]जलस्यासुचारुपङ्कजत्वं व्यपोहितम्, पङ्कजादीनां चालीनषट्पदत्वादीनि ॥ ६४ ॥

१ प. कारणं । २ प. ब. ०रस्योत्त० । ३ प. परंपरा । ४ प. ०स्य सु० ।

अथ मालादीपकमाह—

तन्मालादीपकं ज्ञेयमुत्तरोत्तरसम्पदे ।
पूर्वं पूर्वं भवेद् यत्र यत्र तद्व्यत्ययोऽपि वा ॥ ६५ ॥

यत्र यस्मिन् पूर्वं पूर्वं वाच्यमुत्तरोत्तरस्य वाच्यस्य सम्पदे विभूतये भवति, तदेकं मालादीपकम् । यत्र वा तद्व्यत्ययोऽप्युत्तरोत्तरं पूर्वस्य पूर्वस्य सम्पदे जायते, तदपि तदेव । तत्राद्यं यथा—

" सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद् यत् समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरमला कीर्त्या च सम्प्राप्त्यः ॥ ८८३ ॥ "

अत्र कोदण्डादिभिः क्रमेण शरादीनामुत्कर्षः कृतः । समासादनक्रियारूपं च दीपकम् ।

यथा वा—

" राका वर्द्धयते विधुं स कुमुदारामेषु लक्ष्मीमियं
भृङ्गालीषु मदोदयं स मधुरोद्गारं तदीयध्वनिम्[3] ।
सोऽपि त्रीणि जगन्ति जेतुमनसो देवस्य चेतोभुवः
संरम्भं स च मानिनीपरिषदः प्रेमप्रकर्षं प्रिये ॥ ८८४ ॥ "

अत्र राकाऽऽदिभिः क्रमेण विधुप्रभृतयो वृद्धिं नीयन्ते । वर्द्धयन्तीति क्रियारूपं च दीपकम् ।

द्वितीयं यथा—

" स्त्रीवर्गे रूपसर्गस्तमपि तरुणिमा तं च लावण्यलक्ष्मी-
रेतां च प्रौढिमुद्रापरिचरणमदः सङ्गमश्च प्रियस्य ।
तं च प्रेमोत्तरङ्गं तदिदमपि मिथो दन्तगण्डूषगुण्डा ....... .
तां च ज्योत्स्ना यदीन्दोस्तिलकयति ततो मन्मथैकातपत्रम् ॥८८५॥"

---

१ प व. ०रमुत्त० । २ अ. ०पं दी० । ३ प ०ध्वनिः । ४ प. दंतग० ।

अत्र रूपसर्गादीनां पूर्वं पूर्वं संस्कारकत्वं तिलकयतीति पदं च दीपकं शृङ्खला-क्रमरूपम्। चारुत्वविशेषाय दीपकप्रस्तावमुल्लङ्घ्य लक्षणमत्रैवास्य कृतम् ॥६५॥

अथ तर्कपरिमलालङ्कृतमलङ्कारद्वयं विमणिपुरादौ काव्यलिङ्गमाह—

पदार्थस्याविशेषेण विशेषणगतिस्पृशः।
यत्र स्फुरति हेतुत्वं वाक्यार्थस्तु निबध्यते ॥ ६६ ॥
हेतुभावं स्पृशन्नेव काव्यलिङ्गं तदुच्यते।

यत्र यस्मिन् पदार्थस्यैकानेकपदवाच्यस्याविशेषेण सामान्येन यस्य कस्यचित् कर्तृ-कर्मादेर्विशेषणगतिस्पृशो विशेषणभावभृतो हेतुत्वं कश्चिद् भणितिविशेषं प्रति कारणत्वं स्फुरति। वाक्यार्थस्तु परस्परान्वितपदसन्दोहार्थः पुनरेकानेकरूपो हेतुभावं हेतुतां स्पृशन्नेव स्वीकुर्वन्नेव निबध्यते। वक्ष्यमाणहेतुत्वमर्थान्तरन्यासादस्य भेदाभावप्रसङ्गात्। तदिदं द्विप्रकारं काव्यलिङ्गमुच्यते। तत्रैकपदार्थो हेतुर्यथा—

"भस्मोद्धूलन ! भद्रमस्तु भवते रुद्राक्षमाले ! शुभं
हा ! सोपानपरम्परां गिरिसुता-कान्ताऽऽलयालङ्कृतिम्।
अत्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥८८६॥"

अत्र महामोहे सुखालोकोच्छेदिनीति विशेषणपदार्थो हेतुः।

यथा वा—

"नीरागा मृगलाञ्छने मुखमपि स्वं नेक्षते दर्पणे
त्रस्ता कोकिलकूजितादपि गिरं नोन्मुद्रयत्यात्मनः।
चित्रं दुस्सहदाहदायिनि धृतद्वेषाऽपि पुष्पायुधे
तन्वङ्गी सुभग ! त्वयि प्रतिदिनं प्रेमाधिकं पुष्यति ॥८८७॥"

---

१ म ०पूर्वकं। २ प. च पदं। ३ प. ०षग०। ४ प. ०षगग०। ५ प. व. न ब०। ६ अ. शुभे। ७ अ. प. ०रोषि०। ८ अ. प. ०क्ष्यते। ९ प. नो मु०।

अत्र नीरामेति मस्तेति च विशेषणं मुखानीक्षणस्य शिरोऽवकाशनस्य च हेतुत्वेनोपात्तमिति काव्यलिङ्गम् । मुखानीक्षणादिरूपात् कार्यात् कारणभूतस्य मुखचन्द्रादिसादृश्यस्य प्रतीतिरिति पर्यायोक्तमप्यस्ति । उत्तरार्धे तु विशेषोक्तिः पर्यायोक्तयुक्तैव ।

अनेकपदार्थो यथा—

" मृग्य(गा)श्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन् माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥८८८॥ "

अत्र सम्बोधनक्रियां प्रति दर्भाङ्कुरनिर्व्यपेक्षा व्यापारयन्त्य इत्याद्यनेकपदार्थो विशेषणभावं प्राप्तो हेतुरुक्तः ।

एको वाक्यार्थो हेतुर्यथा—

" मनीषिताः सति गृहेऽपि देवतास्तपः क्व वत्से ! क्व च तावकं वपुः ? ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥८८९॥ "

अत्र वरप्राप्तिहेतुतपोनिषेधे ' मनीषिताः सन्ति ' इति वाक्यार्थो हेतुः ।

अनेको यथा—

" यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये ! तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता–
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ ८९० ॥ "

अत्र पूर्वपादत्रयवाक्यार्थश्चतुर्थपादार्थस्य हेतुत्वेनोपनिबद्धः । पूर्वपादत्रये चास्मिन् विपर्यासोपमया एकवाचकानुप्रवेशरूपः सङ्करः । इह च पक्षधर्मतादिसर्वसामग्रीरहितत्वेऽपि हेतु–हेतुमद्भावसद्भावमात्रेण तर्काश्रितत्वमत एव काव्यलिङ्गमित्यत्र काव्येति विशेषणं कृतम् ॥

अथानुमानमाह—

## अनुमानं तु साध्याय साधनोक्तिर्मनोहरा ॥ ६७ ।"

१ प. ०णस्य । २ प. कार्यादका० । ३ प. ०यंतो । ४ प. ०र्थवि० । ५ अ. पुनः । ६ प. पेषलं । ७ अ. प. ०रं इत्यादि अत्र । ८ प. अ. शं० । ९ अ. ०त्वे हे० । १० प. ०नोत्कर्ष० । ११ प. यमकं ।

साध्याय साधनप्रत्येयवस्तुनिमित्तं साधनस्य तत्प्रतीतिहेतुवस्तुनः पक्षधर्मताऽन्वय-व्यतिरेकशालिनो मनोहरा तर्कानुमानविलक्षणेन विच्छित्तिविशेषेण तद्विदाह्लादिनी या उक्तिर्भणितिः सा पुनरनुमानं नामालङ्कारः । तत्र क्वचित् कारणात् कार्यस्य प्रतीतिः, क्वचित् कार्यात् कारणस्य, क्वचित् पुनरविनाभावेन वस्त्वन्तराद् वस्त्वन्तरस्य ।

तत्राद्यो भेदो यथा—

" अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः ।
अयमायातः कालो हन्त ! हताः पथिकगेहिन्यः ॥८९१॥ "

अत्र मेघसमयात् कारणभूतात् कार्यभूतं विरहिणीमरणमनुमीयते ।

द्वितीयो यथा—

" यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।
यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ—
स्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः ॥ ८९२ ॥ "

अत्र धूम-स्फुलिङ्ग-ज्वालोल्लसनानि कार्यकारणानि दवशब्दाभिधेयं वह्निं गमयन्ति । काव्यद्वयेऽप्यत्र पूर्वत्र कार्य-कारणभूतयोः कालागम-पान्थस्त्रीघातयोः समकालोपनिबन्धादतिशयोक्तिगर्भत्वेनोत्तरत्र तु रूपकगर्भत्वेन विच्छित्तिविशेषप्रतीतिः ।

क्वचित् तु शुद्धत्वेनापि यथा—

" यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत् तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदाऽऽसां स्मरः ॥ ८९३ ॥ "

१ अ. साध्यमानप्रं० । २ व. न-नीपसु० । ३ प. विरहिणां । ४ प. ०ज्वालो० । ५ अ. प भूतानि । ६ अ. प. कारणकार्य० ।

अत्र योषितां भ्रूव्यापारदेशे मार्गणपतनं कार्यं स्मरपुरोगामित्वं कारणं साधयति । कविप्रौढोक्तिविच्छित्त्या वा(चा)त्र चारुत्वम् ।

अविनाभावेन यथा—

" आविर्भवन्ती प्रथमं प्रियायाः सोच्छ्वासमन्तःकरणं करोति ।
सन्तापदग्धस्य शिखण्डियूनो वृष्टेः पुरस्तादचिरप्रभेव ॥ ८९४ ॥ "

अत्र विद्युदिव वृष्टिं कामन्दकी प्रथममुपलभ्यमानाऽविनाभावबलेन मालत्यागमनं गमयति । अत्रोपमागर्भत्वेन चारुता ॥ ६७ ॥

अथ विशिष्टवाक्यसन्निवेशोपेतानलङ्कारान् व्याचिख्यासुरादौ यथासङ्ख्यमाह—

**सम्बन्धः प्राग् निबद्धानामर्थानामुत्तरैः क्रमात् ।**
**शाब्दश्चार्थश्च यः सम्यक् तद् यथासङ्ख्यमिष्यते ॥ ६८ ॥**

प्राग् निबद्धानां प्रथमं निवेशितानामर्थानामभिधेयानामुत्तरैः पुरः स्थापितैरर्थैः सह क्रमाद् यथाक्रमं यः सम्यक् समीचीनः शाब्दः शब्दावसेयः, आर्थश्चार्थावसेयः सम्बन्धो योगविशेषस्तद् यथासङ्ख्यं नामालङ्करणमिष्यते मन्यते । तत्र शाब्दः सम्बन्धः पदगतो वाक्यगतश्चेति द्विधा । तत्र पदगतो यथा—

" एकस्त्रिधा वससि चेतसि चित्रमत्र देव ! द्विषां च विदुषां च मृगीदृशां च ।
तापं च संमदरसं च रतिं च पुष्णन् शौर्योष्मणा च विनयेन च लीलया च ॥८९५"

अत्र द्विषदादीनां तापादीनां शौर्योष्मादीनां च पदानां क्रमात् सम्बन्धः ।

वाक्यगतो यथा—

" इन्दुर्मूर्ध्नि शिवस्य शैलदुहितुर्वक्त्रो नखाङ्कः स्तने
देयाद् वोऽभ्युदयं द्वयं तदुपमामालम्बमानं मिथः ।
संवादः प्रणवेन यस्य दलता कार्यैकतायां तयो-
रूर्ध्वद्वारविचिन्तितेन च हृदि ध्यातस्वरूपेण च ॥ ८९६ ॥ "

अत्रेन्दुर्मूर्ध्नीत्यादि वाक्यं शैलदुहितुरित्यादि वाक्यं च ऊर्ध्वद्वारेत्यादिना हृदीत्यादिना च वाक्यद्वयेन क्रमेणैव सम्बध्यते ।

---

१ अ० भ्रूविकार० । २ अ. द्वेधा । ३ प. ०सति । ४ प. ०दिना ।

आर्थो यथा—

" तस्याः प्रवृद्धलीलाभिरालापस्मितदृष्टिभिः ।
जीयन्ते वल्लकी–कुन्द–स्रगिन्दीवरसम्पदः ॥ ८९७ ॥ "

अत्रालापादिपदस्य वल्लक्यादिपदस्य च समुदायापेक्षया शाब्दोऽवयवापेक्षया तु समासन्यग्भूतत्वेन तेषामर्थानुक्रमपर्यालोचनादार्थः सम्बन्धः । केऽप्येनमलङ्कारं क्रमसंक्रमाद्युक्तलक्षणेऽप्येवैव भङ्गिः ।

केचित् तु भङ्ग्यन्तरमप्युदाहरन्ति । यथा—

" पायाद् वो रचितत्रिविक्रमतनुर्देवः स दैत्यान्तको
यस्याकस्मिकवर्धमानवपुषस्तिग्मद्युतेर्मण्डलम् ।
मौलौ रत्नरुचिं श्रुतौ परिलसत्ताडङ्ककान्ति क्रमा-
ज्ञातं वक्षसि कौस्तुभाभमुदरे नाभीसरोजोपमम् ॥ ८९८ ॥ "

अत्र मौलिप्रभृतिषु तिग्मद्युतेः स्थानक्रमेण रत्नादिभिरौपम्यं निबद्धम् ॥६८॥

अथ परिवृत्तिमाह—

**सम–न्यूनाधिकानां तु यस्यां विनिमयो भवेत् ।**
**अर्थैः समाधिक–न्यूनैः परिवृत्तिं गृणन्ति ताम् ॥ ६९ ॥**

यस्यां पुनरलङ्कृतौ समस्य तुल्यगुणस्य वस्तुनः समेन तुल्यगुणेनैव न्यूनस्य तुच्छगुणस्याधिकेनोत्कृष्टगुणेनाधिकस्य च न्यूनेन वस्तुना यो विनिमय एकस्य परित्यागादन्यस्योपादानं तां परिवृत्तिं नामालङ्कृतिं गृणन्ति वदन्ति ।

तत्र समस्य समेन यथा—

" प्रश्च्योतन्मदसुरभीणि निम्नगानां क्रीडन्तो गजपतयः पयांसि कृत्वा ।
किञ्जल्कव्यवहिततामदानलेखैरुत्तेरुः सरसिजगन्धिभिः कपोलैः॥८९९॥ "

अत्र मदामोदस्याम्भोजरजःसौरभेण तुल्येन विनिमयः ।

न्यूनस्याधिकेन यथा—

"तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव(ह) शोच्यतेऽधुना ? ।
येन जर्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥ ९०० ॥ "

---

१ प. ०लंकालं । २ अ. ०मंडनं । ३ अ. मूलौ । ४ प. नाम्ना गृ०, ब. नाम गृ० ।

अत्र कलेवरस्य न्न गुणस्य यशसोत्कृष्टगुणेन।

अधिकस्य न्यूनेन यथा—

" किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम्?।
वद प्रदोषे स्फुटचन्द्र-तारके विभावरी यद्यरुणाय कल्पते॥ ९०१॥"

अत्राभरणानामधिकगुणानां वल्कलेन न्यूनगुणेन।

अन्यदीयवस्तुनोऽपरत्र सञ्चरणरूपे व्यत्ययेऽपीयं दृश्यते। यथा—

" कुमुदवनमपाश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिललितानां ही! विचित्रो विपाकः॥ ९०२॥"

अत्र कुमुदवनादीनां श्रीप्रभृतिवस्त्वम्भोजखण्डादिषु गतम्।

क्वाप्युभयवत्यप्येषा। यथा—

" लोचनाधरकृतां गतरागा वासिताननविशेषितगन्धा।
वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयं तु वितेने॥ ९०३॥"

अत्र प्रथमे पादे व्यत्ययो द्वितीये तु विनिमय इतीयमुभयवती॥ ६९॥

अथ परिसङ्ख्यामाह—

**एकस्यानेकसम्बन्धसम्भवे यन्नियन्त्रणम्[3]।**
**एकस्मिन्नितरत्यागात् परिसङ्ख्यां तु तां विदुः॥ ७०॥**

एकस्य वस्तुनोऽनेकेन द्व्यादिवस्तुना सम्बन्धे सम्भवति इतरत् सर्वमपि परित्यज्य यदेकस्मिन् कस्मिंश्चिद् विवक्षिते वस्तुनि नियन्त्रणं नियमनं तां पुनः परिसङ्ख्यां विदुः स्मरन्ति कवीन्द्राः॥ ७०॥

अथास्या भेदानाह—

**अप्रश्नपूर्विका प्रश्नपूर्विका चेति सा द्विधा।**
**परित्याज्यस्य शाब्दत्वादार्थत्वाच्च चतुर्विधा॥ ७१॥**

---

१ प. वास्तं हिमांशुर्दे०। २ प. ०दिग०। ३ प. ०मंत्र०। ४ प. ०न् कथयति।

प्रश्नाभावपुरःसरा प्रश्नपुरःसरा चेति सा द्विधा । तस्यां च द्विरूपायामपि परित्याज्यं वस्तु क्वचित् शाब्दं शब्दप्रतिपादितं क्वचिच्चार्थमर्थगम्यमिति चतुर्विधा चतुष्प्रकारा । तत्राप्रश्नपूर्विका शाब्दव्यवच्छेद्या यथा—

" धेहि धर्मे धनधियं मा धनेषु कदाचन ।
सेवस्व सद्गुरूपज्ञां शिक्षां मा तु नितम्बिनीम् ॥ ९०४ ॥ "

अत्र प्रश्नो नास्ति । ' मा धनेषु ' इत्यादिषु च शाब्दं व्यवच्छेद्यम् ।

अर्थे परित्याज्या यथा—

" कौटिल्यं कचनिचये कर–चरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ ९०५ ॥ "

अत्र प्रश्नो नास्ति । कौटिल्यादयो नान्यत्र हृदयादौ सन्तीति व्यवच्छेद्यं गम्यम् ।

प्रश्नपूर्विका शाब्दव्यवच्छेद्या यथा—

" कोऽलङ्कारः सतां शीलं न तु काञ्चननिर्मितः ।
किमादेयं प्रयत्नेन धर्मो न तु धनादिकम् ॥ ९०६ ॥ "

अत्र क इत्यादिप्रश्नः । न तु काञ्चनेत्यादि शाब्दं व्यवच्छेद्यम् ।

आर्थव्यवच्छेद्या यथा—

" किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति ॥ ९०७ ॥ "

अत्र किमित्यादिः प्रश्नोऽस्ति नान्यनारीनितम्बादिकमित्याद्यार्थं व्यवच्छेद्यम् ।

" विलङ्घयन्ति श्रुतवर्त्म यस्यां लीलावतीनां नयनोत्पलानि ।
बिभर्ति यस्यामपि वक्रिमाणमेको महाकालजटार्धचन्द्रः ॥ ९०८ ॥ "

---

१ अ. ०दि च । २ ब. ०तध्ये० ।

इत्यादावस्या श्लेषसम्पृक्तत्वमत्यन्तसौन्दर्यनिबन्धनम् ॥ ७१ ॥

अथार्थापत्तिमाह—

**प्रस्तुतादितरस्माच्च दण्डापूपिकया बलात् ।**
**योऽर्थादर्थान्तरापातः साऽर्थापत्तिर्द्विधा मता ॥ ७२ ॥**

इह दण्डापूपयोस्तुल्या 'तस्य तुल्ये कः संज्ञा-प्रतिकृत्योः' [ सिद्धहेम० ७ । १ । १०८ ] इति के प्रत्यये दण्डापूपिका नाम न्यायो यत्र मूषककर्तृकेण दण्डभक्षणेन तत्सहचरितमपूपभक्षणमर्थात् सिध्यति तेन न्यायेन प्रस्तुतात् प्रकृतात्, इतरस्मादप्रस्तुताच्चार्थाद् यः कश्चिद् बलात् कस्यचिदर्थान्तरस्या-प्रस्तुतस्य प्रस्तुतस्य च यथासङ्ख्यमापात आगमनं साऽर्थापत्तिर्नामाल-ङ्कृतिर्द्विप्रकारा मता स्मृता । तत्राद्यः प्रकारो यथा —

" पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्विभुमपि यदमी स्पृशन्ति भावाः ॥ ९०९ ॥"

अत्रेश्वरवृत्तान्तः प्रकृत इतरजनवृत्तान्तमप्रकृतमर्थादाक्षिपति ॥ १ ॥

द्वितीयो यथा—

" धृतधनुषि बाहुशालिनि शैला न नमन्ति यत् तदाश्चर्यम् ।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ! ॥ ९१० ॥ "

अत्र शैलवृत्तान्तोऽप्रस्तुतो रिपुवृत्तान्तं प्रस्तुतमर्थादाकर्षति ।

क्वचिन्न्यायसाम्ये श्लेषनिर्दिष्टेऽप्येषा दृश्यते । यथा—

" अलङ्कारः शङ्काकरनरकपालं परिकरो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको गतवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो—
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ! ॥ ९११ ॥ "

अत्र विधौ वक्र इति श्लिष्टम् । अप्रस्तुतश्च स्थाणुवृत्तान्तः । दण्डापूपिका च वाक्यविदां न्याय इत्यस्या वाक्यप्रस्तावे भणितिः ॥ ७२ ॥

---

१ प. ०र्थापत्ति० । २ प. ०चंड० । ३ प. ०स्माच्चा० । ४ व. ०प्रस्तुत० । ५ प. ०प्रका० । ६ अ. ०जनो । ७ प. व, प्रशी० । ८ अ. यन्नाम० ।

अथ समुच्चयमाह—

**कुर्वाणे कार्यमेकस्मिन् यत्रान्यदपि तत्करम् ।**
**असत्–सदुभयावेशात् त्रिविधः स समुच्चयः ॥ ७३ ॥**

एकस्मिन् कस्मिंश्चित् कार्यं कुर्वाणे साध्यं साधयति स्पर्धया यत्र किमप्यन्यदपि हेत्वन्तरं तत्करं भवति । तदेव कार्यं प्रति साधकतया व्याप्रियते स समुच्चयः स चासतामशोभनानां सतां शोभनानामुभयेषां शोभनाशोभनानां च समावेशात् त्रिविधः । तत्राद्यो यथा—

" दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमी
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं मया ? ॥९१२॥ "

अत्र विरहपीडां स्मरमार्गणेषु कुर्वत्सु तदुपरि प्रियतमदूरस्थित्याद्युपायं पीडाकारित्वाच्च सर्वेषामशोभनानां योगः ।

द्वितीयो यथा—

" कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥ ९१३ ॥ "

अत्रामलकुलादीनां शोभनानां योगः ।

तृतीयो यथा—

" शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ९१४ ॥ "

---

१ अ. कश्चित् । २ प. व. शठः ।

अत्र शशिनः स्वतः शोभनस्यापि धूसरत्वादशोभनत्वमेवमुत्तरेषामपि । अत्र सहचरभिन्नत्वदोषव्युदासाय नृपश्च खलसङ्गत इति पाठः कार्यः । एकस्मिंश्च शशिनि शल्ये शल्यान्तरापातनम् ॥ ॥ ७३ ॥

अस्यैव प्रकारान्तरमाह—

**गुण–क्रियासमावेशो युगपद् यत्र सोऽपरः ।**

यत्र गुणानां क्रियाणां च व्यस्तानां समस्तानां वा गुण–क्रियाणां युगपदेककालं समावेशः सङ्गमो भवतीति त्रिभेदः । सोऽपरो द्वितीयः समुच्चयः । तत्राद्यो भेदो यथा—

" विदलितसकलारिकुलं तव बलमिदमाशु देव ! विमलं च ।
प्रखलमुखानि नराधिप !, मलिनान्येतानि जातानि ॥ ९१५ ॥ "

अत्र वैमल्य–मालिन्यगुणयोः समुच्चयः ।

द्वितीयो यथा—

" प्रतिगृहीतुं प्रणयिप्रियत्वात् त्रिलोचनस्तामुपचक्रमे च ।
सम्मोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥ ९१६ ॥ "

अत्रोपक्रम–सन्धानक्रिययोः ।

तृतीयो यथा—

" न्यञ्चत् कुञ्चितमुन्मुखं हसितवत् साकूतमाकेकरं
व्यावृत्तं प्रसरत् प्रसादि मुकुलं सप्रेम कम्प्रं स्थिरम् ।
उद्भ्रु भ्रान्तमपाङ्गवृत्ति विकचं मज्जत्तरङ्गोत्तरं
चक्षुः साश्रु च वर्तते रसवशादेकैकमन्यक्रियम् ॥ ९१७ ॥ "

अत्राकेकरादयो गुणशब्दा न्यञ्चदित्यादयश्च क्रियाशब्दाः ।

एकाधिकरणत्वेऽप्ययं दृश्यते । यथा—

" विभ्राणा हृदये त्वया विनिहितं प्रेमाभिधानं नवं
शल्यं यद् विदधाति सा विधुरिता साधो ! तदाकर्ण्यताम् ।

---

१ ब. ०मरनं । २ प. न्युंचित् कुं० । ३ ब. ०मालोकितं ।

शेते शुष्यति ताम्यति प्रलपति प्रम्लायति प्रेङ्खति
आम्यत्युल्लसति प्रणश्यति दलत्युन्मूर्च्छति बुध्यति ॥ ९१८ ॥ "

अत्र क्रियासमुच्चयः । एवं गुणसमुच्चयोऽप्युदाहार्यः । केचित् पुनः सर्वपदस्थितेनोत्तरपदस्थितेन वा चकारेण द्योतितं समुच्चयमेव समुच्चयालङ्कारमाहुः । तत्र सर्वपदस्थितेन यथा—

" अप्राकृतः स कथमस्तु न विस्मयाय ?
यस्मिन्नुवास करुणा च कृतज्ञता च ।
लक्ष्मीश्च सात्त्विकगुणज्वलितं च तेजो
धर्मश्च मान-विनयौ च पराक्रमश्च ॥ ९१९ ॥ "

उत्तरपदस्थेन यथा—

" रूपमप्रतिविधानमनोज्ञं प्रेम कार्यमनपेक्ष्य विकाशि ।
चाटु चाकृतकसम्भ्रममासां कार्मणत्वमगमद् रमणेषु ॥ ९२० ॥ "

अथ समाधिमाह—

**समाधिः कार्यसौकर्यं हेत्वन्तरसमागमात् ॥ ७४ ॥**

केनचित् कर्तुमारब्धस्य कार्यस्य कारणान्तरसंम्पर्कात् यत् सौकर्यं सुकरत्वं समाधिर्नामालङ्कारः । यथा—

" मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥ ९२१ ॥ "

अत्र माननिराकरणे कार्ये पादपतनं हेतुस्तत्सौकर्यार्थं घनगर्जितस्य हेत्वन्तरस्य निबन्धः । अयं च समुच्चये नान्तर्भवति । तत्र हि कारणान्तरसमासो न तथाविधोपकारकृदेकस्यापि कार्यकारणसामर्थ्यादत्र तु कार्यसौकर्यादत्यन्तोपकारी ॥ ७४ ॥

अथ वाक्यविशेषाश्रितानलङ्कारान् लक्षयित्वा लोकन्यायाश्रितान् लिलक्षयिषुः प्रथमं प्रत्यनीकमाह—

---

१ प. अपा० । २ अ. ०सौकर्यात् । ३ व. तद् । ४ अ. ०रनि० । ५ व च-न स० त० । ६ अ. ०षान० ।

**प्रतिपक्षं प्रतिक्षेप्तुमशक्तौ तत्प्रशस्तये ।**
**यस्तदीयस्तिरस्कारः प्रत्यनीकं तदीरितम् ॥ ७५ ॥**

विपक्षं बलाधिकतया निराकर्तुमसामर्थ्ये सति केनाचित् तस्यैव विपक्षस्य श्लाघाहेतोस्तदाश्रितस्य यस्तिरस्कारस्तदनीकप्रतिनिधिभूताभियोगतुल्यत्वात् प्रत्यनीकमीरितं कथितम् । यथा—

" त्वं विनिर्जितमनोभवरूपः सा च सुन्दर ! भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादथ कामः ॥ ९२२ ॥ "

अत्र तदनुरक्तायाः कस्याश्चिन्मदनशरताडनात् कामिनः सौभाग्यातिशयद्योतनम् ॥ ७५ ॥

अथ प्रतीपमाह—

**तत्[1] प्रतीपं यदाक्षेपः कैमर्थ्यादुपमानगः[2] ।**
**तिरस्काराय तस्यैव यच्च क्वाप्युपमेयता ॥ ७६ ॥**

उपमेयस्यैवोपमानकार्य-कारणसामर्थ्येन किमर्थमिदमित्याद्युक्तियोगादुपमानग उपमानाश्रितो यत्कश्चिदाक्षेपस्तिरस्कारविशेषस्तदेकं प्रतीपमुपमानं प्रत्युपमेयस्य प्रतिकूलत्वात् । यच्च क्वचिदुपमेयस्योत्कर्षमाधातुं तस्यैवोपमानत्वेन प्रतीतस्य तिरस्काराय निकारार्थमुपमेयता कल्पते । तद् द्वितीयं प्रतीपम् । तत्राद्यं यथा—

" लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव ! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो ! मुधैव किममी सृष्टाः[3] कुलक्ष्माभृतः[4] ॥ ९२३ ॥ "

अत्र यथासङ्ख्यमप्यस्ति लावण्यौकसीत्यादिक्रमेणैव चेन्दुः किमित्यादीनां निवेशात् ।

१ अ. व. ०नता० । २ प. प्रत्य० । ३ प. ०मागः । ४ अ. क्षिप्ताः ।

द्वितीयं यथा—

*" ए ! एहि दात्र सुन्दरि ! कन्नं दाऊण सुणसु वयणिज्जं ।
तुज्झ मुहेण किसोअरि ! चंदो उवमिज्जइ जणेण ॥ ९२४ ॥ "

अत्र वदनस्योत्कर्षाय चन्द्रस्य निकर्षाय चोपमानोपमेयत्वव्यत्ययः ।
क्वचित् पुनर्निष्पन्नमेवौपम्यमनादरकारणम् । यथा—

" गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे ! ।
सन्तीदृशानि दिशि दिशि सरस्सु ननु नीलनलिनानि ॥ ९२५ ॥ "

अत्रोत्कर्षभाज उपमानप्रादुर्भावे एव न्यत्कारकारणम् ।

अनेन न्यायेनात्युत्कृष्टगुणत्वादुपमानभावमपि न सहते । तस्योपमानत्वकल्पनेऽपि प्रतीपमेव । यथा—

" अहमेव गुरुः सुदारुणानामिति हालाहल ! तात ! मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ।९२६॥"

अत्र हालाहलं प्रकृतं प्रकृष्टदोषत्वादसम्भाव्योपमानभावमप्युपमानत्वेन निबद्धम् ॥ ७६ ॥

अथ मीलितमाह—

**समानेनैव धर्मेण स्थितेनौत्पत्तिकेन वा ।**
**वस्त्वन्तरेण यद् वस्तु गोप्यते मीलितं तु तत् ॥ ७७ ॥**

स्थितेन सहजेनौत्पत्तिकेन वा पश्चादुत्पन्नेन समानेनैव सदृशेनैव केनचिद् धर्मेण वस्त्वन्तरेण किञ्चिद् वस्तु निगूह्यते। तत् पुनर्द्विविधं मीलितं नामालङ्कारः। तत्राद्यं यथा—

---

* अयि ! एहि तावत् सुन्दरि ! कर्णं दत्त्वा शृणु वचनीयम् ।
तव मुखेन कृशोदरि ! चन्द्र उपमीयते जनेन ॥

---

१ प. काऊ० । २ व. ०यरि । ३ अ. ०यव्य० । ४ प. भद्रे । ५ अ. ०र्भावन्य० । ६ अ. ०नोत्कृ० । ७ प. ०तीतमे० । ८ प. ०रुणाभि० । ९ अ. ०ल मा० । १० प. ०नो भा० । ११ प. ०नैव । १२ प. ०नेन । १३ प. ०ण ता० ।

" अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ ९२७ ॥ "

अत्र सहजेन दृक्तरलताऽऽदिना धर्मेण लीलया तादृग्धर्मो मदोदयस्तिरोधीयते ।

द्वितीयो यथा—

" ये कन्दरासु निवसन्ति सदा हिमाद्रेस्त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं तेषामहो! बत भियां न बुधोऽप्यभिज्ञः ९२८"

अत्र सततोत्पन्नाभ्यां कम्प-पुलकाभ्यां धर्माभ्यां हिमाद्रिकन्दरानिवासावसेयेन शीतेन तादृग्धर्मान्वितं भयं तिरस्क्रियते ॥ ७७ ॥

अथ सामान्यमाह—

**प्रस्तुतस्य तदन्येन साधारणगुणाश्रयात् ।**
**यत्रैकात्म्यं निबध्नन्ति तत् सामान्यं निगद्यते ॥ ७८ ॥**

साधारणान् तुल्यान् गुणानाश्रित्य प्रस्तुतस्य प्रकृतस्य तदन्येनाप्रस्तुतेन यत्र यस्मिन्नैकात्म्यमेकरूपतां निबध्नन्ति कवयस्तत् सामान्यमित्यलङ्करणं कथ्यते ।

यथा—

" मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
स्मिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रति यान्ति सुखमेव निरस्तभियोऽभिसारिकाः॥९२९॥"

अत्र ज्योत्स्नया सहाभिसारिकाणामन्यूनातिरिक्तधवलत्वेनैकात्मतानिबन्धः।

यथा वा—

---

१ अ. ०वक्रि, व. ०वक० । २ प. ०ण ता० । ३ प. व. ०धर्मा । ४ अ. विधु० । ५ अ. ०रावा० । ६ प. ०रवि० । ७ प. ०त्मकता० ।

" वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि वाऽ(ना)पतिष्यन् कोऽवेदयिष्यन्नवचम्पकानि? ॥९२०॥"

अत्र निमित्तान्तरजनितायामपि भेदप्रतीतौ प्रथमप्रतिपन्नभेदापेक्षयाऽयमलङ्कारः ॥ ७८ ॥

अथ तद्गुणमाह—

**तद्गुणः स्वगुणत्यागाद् योगेऽधिकगुणस्य यत् ।**
**धत्ते तद्गुणतां वस्तु**

आत्मनः सकाशादधिकगुणस्य वस्तुनः सम्बन्धे सति स्वगुणं परित्यज्य यत् किञ्चिद् वस्तु पदार्थस्तद्गुणतां तस्याधिकगुणस्य गुणं कान्त्यादिकं धत्ते गृह्णाति स तद्गुणालङ्कारः । यथा—

" विभिन्नवर्णा गरुडाग्रजेन[1] सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचं रुचा स्वामानिन्यिरे वंशकरीरनीलैः[2] ॥ ९२१ ॥ "

अत्र रविरथाश्वानामरुणवर्णस्वीकारस्तस्यापि गारुत्मतरत्नप्रभाऽङ्गीकार इति तद्गुणत्वम् । इह चानपह्नुतस्वरूपमेव प्रकृतं वस्तु वस्त्वन्तरगुणेनोपरक्ततया प्रतीयते । मीलिते तु प्रच्छादितत्वेनेति तस्मादस्य भेदः ।

अथातद्गुणमाह—

**नैव चेत् तदतद्गुणः ॥ ७९ ॥**

सम्भवन्त्यामपि योग्यतायां यद्यधिकगुणस्य वस्तुनो गुणं किञ्चिदपकृष्टगुणं वस्तु न कथञ्चित् स्वीकुरुते तदतद्गुणो नाम । यथा—

*" धवलो सि जइ वि सुंदर! तह वि तए मज्झ रंजिअं हिअयं ।
रायभरिए वि हिअए[4] सुहय! निहित्तो न रत्तो सि ॥ ९२२ ॥ "

* धवलोऽसि यद्यपि सुन्दर ! तथापि त्वया मम रञ्जितं हृदयम् ।
रागभृतेऽपि हृदये सुभग ! निहितो न रक्तोऽसि ॥

१ अ. गुरुडात्मजेन । २ अ. ०रैरनी० । ३ व. कंचि० । ४ व. प. हिय० ।

अत्रोत्तरार्द्धेऽतिरक्तेनापि मनसा संयुक्तो न रक्तत्वं गत इत्यतद्गुणः। पूर्वार्द्धे तु विभावना । कार्य-कारणभावविवक्षणाभावाच्च विषमादस्य भेदः ॥ ७९ ॥

अथोत्तरमाह—

तदुत्तरं भवेद् यत्र प्रश्नोन्नयनमुत्तरात् ।
असकृद् वा सति प्रश्ने यत्रासम्भाव्यमुत्तरम् ॥ ८० ॥

यत्रानुपनिषद्धस्यापि प्रश्नस्य निबद्धादुत्तरादुन्नयनमभ्यूहनं तदेकमुत्तरं पक्षधर्मताऽऽदेरनिर्देशादनुमानादस्य भेदः । यदि वा प्रश्ने सति यत्र किमप्यसम्भाव्यमुत्तरं भवति तद् द्वितीयमुत्तरम् । अनयोश्च सकृत्प्रयोगान्न तथाविधं चारुत्वमित्यसकृदित्युक्तम् । व्यवच्छेद्य-व्यवच्छेदकपरत्वाभा÷न्नायं परिसङ्ख्या ।

तत्राद्यं यथा—

*" वाणिअय ! हत्थिदंता कत्तो अम्हाण वग्घकत्ती अ(य) ।
जा विलुलिआलयमुही घरंमि परिसक्कए सुण्हा ॥ ९३३ ॥ "

अत्र हस्तिदन्त-व्याघ्रकृत्तीर्मम मूल्येन प्रयच्छेति क्रेतृवचनमुत्तरवाक्यादुन्नीयते ।

द्वितीयं यथा—

×" का विसमा ? दिव्वगई, किं लद्धं ? जं जणो गुणग्गाही ।
किं सोक्खं ? सुकलत्तं, किं दुग्गिज्झं ? खलो लोओ ॥ ९३४ ॥" ॥८०॥

अथ सूक्ष्ममाह—

ज्ञात्वाऽऽकारेङ्गितादिभ्यः सूक्ष्मोऽप्यर्थः प्रकाश्यते ।
यद् वैदग्ध्येन केनापि तत् सूक्ष्ममिति लक्ष्यते ॥ ८१ ॥

* वणिक् ! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तिश्च ? ।
यावद् विलुलितालकमुखी गृहे परिष्वष्कते स्नुषा ॥

× का विषमा ? दैवगतिः, किं लब्धं ? यज्जनो गुणग्राही ।
किं सौख्यं ? सुकलत्रं, किं दुर्ग्राह्यं ? खलो लोकः ॥

÷ प. पुस्तिका इतः परं पत्राणामभावादपूर्णा ।

आकारादप्र[य]त्नकृताङ्गविकृतेरिङ्गितात् प्रयत्नकृतचेष्टाविशेषादादिश-ब्दादन्यस्मात् तथाविधनिमित्ताद् विज्ञाय सूक्ष्मोऽपि स्थूलमतिदुर्लक्ष्योऽप्यर्थः केनापि कुशाग्रीयबुद्धिना केनचिद् वैदग्ध्येन यत् प्रकाश्यते तत् सूक्ष्ममित्य-लङ्कारो लक्ष्यते ।

तत्राकाराद् यथा—

"वक्त्रस्प(स्य)न्दिस्वेदबिन्दुप्रबन्धे दृष्टा(ष्ट्वा) भिन्नं कुङ्कुमं काऽपि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्तीव तस्याः स्मित्वा पाणौ खड्गलेखां लिलेख ॥९३५॥"

अत्र स्वेदभिन्नकुङ्कुमरूपेणाकारेण विज्ञाय पुरुषायितं पाणौ पुरुषोचितख-ड्गलेखालेखनवैदग्ध्येन प्रकाशितम् ।

इङ्गिताद् यथा—

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ ९३६ ॥"

अत्र विटस्य सङ्केतकालाभिप्रायस्तत्सम्बन्धिना भ्रूत्क्षेपादिनेङ्गितेन ज्ञात्वा रजनिभाविना लीलापद्मनिमीलनेन प्रकाशितः ॥ ८१ ॥

अथ व्याजोक्तिमाह—

**व्याजोक्तिर्गोपनं यत्र व्याजादुद्भिन्नवस्तुनः ।**

निगूढस्यापि कुतश्चिन्निमित्तान्तरादुद्भिन्नस्य व्यक्तिमायातस्य वस्तुनो व्याजात् कुतश्चिदपदेशाद् यत्र निगूहनं सा व्याजोक्तिर्नामालङ्कृतिः । यथा—

"शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्-
रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा ! शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद् वः शिवः ॥ ९३७ ॥"

अत्र रोमाञ्चादिभिरुद्भिन्नो रतिभावः शैत्यापदेशाभिगूहितः । न चेयमपह्नुतिः प्रकृताप्रकृतनिष्ठस्य साम्यस्यासम्भवात् ।

अथ स्वभावोक्तिमाह—

स्वभावोक्तिः पुनः सूक्ष्मवस्तुसद्भाववर्णनम् ॥ ८२ ॥

न खलु वस्तुस्वरूपमात्रवर्णनमलङ्कारस्तत्त्वे सर्वत्राप्यलङ्कारप्रसङ्गात् । न हि वस्तुस्वरूपमात्रवर्णनेन शून्यं किमपि काव्यमस्तीति सूक्ष्मग्रहणम् । सूक्ष्मः कविमात्रागोचरो यो वस्तुनः सन् विद्यमानो भावः परिस्पन्दविशेषस्तस्य वर्णनं सुधासोदरया गिरा प्रकाशनं सा पुनः स्वभावोक्तिः । इयं च संस्थानावस्थान-वेष-व्यापारादिभिः स्वरूपैर्मुग्धाङ्गना-डिम्भ-तिर्यग्-नीचादिभिराश्रयैर्देश-काल-शक्ति-साधनादिभिश्च हेतुभिरनेकधा भिद्यते । दिग्मात्रं तूदाह्रियते ।

तत्र संस्थानाश्रया स्वभावोक्तिर्यथा—

" स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ९३८ ॥ "

अत्र धनुर्धरसंस्थानमीदृगेव स्यादिति ।

मुग्धाङ्गनाश्रया यथा—

*" सहिआहिं भन्नमाणी थणए लग्गं कुसुंभपुप्फं ति ।
मुद्धवहूआ हसिज्जइ पप्फोडंती नहवयाइं ॥ ९३९ ॥ "

तिर्यगाश्रया यथा—

" लीढ-व्यस्त-विपाण्डुराग्रनखयोराकर्णदीर्णं मुखं
विन्यस्याग्रिमयोर्युगे चरणयोः सद्यो विभिन्नद्विपः ।
एतस्मिन् मदगन्धवासितसटः सावज्ञतिर्यग्वलत्-
सृक्कान्ताहतिधूतलोलमधुपः कुञ्जेषु शेते हरिः ॥ ९४० ॥ "

देशाश्रया यथा—

" इमास्ता विन्ध्याद्रेः शुक-हरितवंशीवनघना
भुवः क्रीडालोलद्विरदरदनारुग्णतरवः ।

---

* सखीभिर्भण्यमाना स्तनके लग्नं कुसुम्भपुष्पमिति ।
मुग्धवधूर्हस्यते प्रस्फोटयन्ती नखपदानि ॥

लताकुञ्जे यासामुपनदि रतक्लान्तशबरी-
कपोलस्वेदाम्भःपरिचयनुदो वान्ति मरुतः ॥ ९४१ ॥"

एवमन्याऽपि वेदितव्या ॥ ८२ ॥

अथ भाविकमाह—

**अत्यद्भुतत्वादव्यस्तसम्बन्धाद् भूत-भाविनाम् ।**
**यत् प्रत्यक्षायमाणत्वं भाविकं तद् विभाव्यते ॥ ८३ ॥**

अत्यद्भुतत्वादलौकिकत्वादव्यस्तो मिथः साकाङ्क्षपदसन्निधिजनितो यः सम्बन्धः परस्परान्वयस्तस्माच्च यद् भूत-भाविनामर्थानां प्रत्यक्षायमाणत्वं साक्षादनुभूय(त)कल्पत्वं तत् कवेर्भावोऽभिप्रायः स्फुटोऽत्रास्तीति भाविकं नामालङ्कारो विभाव्यते निरूप्यते । तच्च भूत-भाव्युभयार्थविषयत्वेन त्रिधा भवति ।

तत्र भूतार्थविषयं यथा—

" संवृत्ते सुभगेष्टसङ्गमकथाऽऽरम्भे सखीभिः समं
प्राचीं काञ्चन तां त्वया सह रहःक्रीडाऽनुभूतां दशाम् ।
प्रेमावेशवशेन विस्मितमुखी साक्षान्मुहुः [ कुर्वती ]
किं किं सा न करोति कस्य न दृशोर्धत्ते च कौतूहलम् ? ॥९४२॥"

अत्रोक्तिवैचित्र्यादतीतार्थस्य प्रत्यक्षायमाणत्वम् ।

भाव्यर्थविषयं यथा—

" अद्यापि [श्रवसी] न कुण्डलचले केलिक्कणत्कङ्कणौ
बाहू नापि न हारिहारवलयालुण्ठा च कण्ठावनिः ।
अस्याः पश्य तथापि पङ्कजदृशो विभ्रम्भिप्रयम्भावुकं
पश्यामः स्फुटताविभूषणकराभोगं वपुर्वैभवम् ॥ ९४३ ॥"

अत्र कविप्रौढोक्तिवशाद् भाविनोऽप्यर्थस्य प्रत्यक्षायमाणत्वम् ।

उभयार्थविषयं यथा—

" मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः ।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्य-कच्छपौ ॥ ९४४ ॥"

अत्र [हि] पूर्वमगस्त्यस्य पानाय समुद्रचुलुकीकरणकाले पुराणाभिप्रायेण मत्स्यावतारस्य संवृत्तत्वादतीतत्वेऽपि, कूर्मस्य चोत्पत्स्यमानत्वाद् भविष्यत्वेऽपि कविवर्णितमुनिज्ञात(न)माहात्म्यादुभयोः प्रत्यक्षत्वम् ।

यथा वा—

" आसीदञ्जनमत्रेति तवोत्पश्यामि चक्षुषी ।
भाविभूषणसम्भारां साक्षात् कुर्वे तवाकृतिम् ॥ ९४५ ॥ "

अत्राद्येऽर्द्धे भूतस्य, द्वितीये भाविनोऽर्थस्य दर्शनम् ।

अन्ये तु यत्र गूढस्यापि वक्तृभावस्य [पद]सन्निवेशवशादुद्भेदो भवति;तत्र भाविकमाहुः । यथा—

" निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि—" इत्यादि ।

अत्र दूतीदुश्चेष्टितज्ञानस्य गुप्तस्यापि पदसंनिवेशादुद्भेदः ॥ ८३ ॥

अथोदात्तमाह—

## उदात्तं तत् तु यत् काममृद्धिम(म)द्वस्तुवर्णनम् ।

यथास्थितवस्तुवर्णनावतः पूर्वस्यालङ्कारद्वयस्यारोपितैश्वर्यवस्तुवर्णनस्वरूपत्वेन विपक्षभूतं तत् पुनरुदात्तं नामालङ्कारो यत् काममतिशयेन ऋद्धिमतः कविप्रतिभोत्थापितसम्पदुत्कर्षयुक्तस्य वस्तुनः कस्याप्यर्थस्य वर्णनम् । यथा—

" उच्चीयन्ते स्म वेश्मन्यस(श)नविरहिते यत्नतः श्रोत्रियाणां
यत्र श्यामाकबीजान्यपि चटकवधूचञ्चुकोटिच्युतानि ।
यस्मिन् दातर्यकस्माच्चटुलवटुकराकृष्टमुक्तावचूल-
भ्रष्टास्तत्रैव दृष्टा युवतिभिरलसं घूर्णिता मुक्तिकौघाः ॥ ९४७ ॥

अस्यैव भेदान्तरमाह—

## चरितं च महापुंसः कुत्राप्यङ्गत्वमागतम् ॥ ८४ ॥

महापुंसः कस्याप्युदाराशयस्य पुरुषस्य चरितं च वृत्तं कुत्राप्यङ्गिभूते वस्तुन्यङ्गत्वमङ्गतामागतमुदात्तालङ्कारः। यथा—

" तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥ ९४८ ॥ "

अत्रारण्यवर्णनस्य प्रकर्षाधायकत्वेन रामचरितमङ्गभूतम् ॥ ८४ ॥

अपराङ्गरूपतासाधर्म्यादुदात्तानन्तरं रसवदादीन् लक्षयति—

**रसा भावास्तदाभासा भावशान्त्यादयोऽपि वा।**
**यत्रात्मानं गुणीकृत्य धारयन्त्यपराङ्गताम् ॥ ८५ ॥**

**अलङ्काराः क्रमात् तस्मिन् अमी कैश्चिदुरीकृताः।**
**रसवत्–प्रेय–ऊर्जस्वि–समाहितपुरःसराः ॥ ८६ ॥**

रसादयः पूर्वप्रतिपादितरूपाः सर्वेऽप्येते यत्र क्वचिदात्मानं गुणीकृत्यापरस्य रसादेरेवाङ्गतामवयवतां धारयन्ति तस्मिन् विषये इमे रसवत्–प्रेय–ऊर्जस्वि–समाहितादिनामानोऽलङ्काराः कैश्चिदलङ्कारकारैरुरीकृता अङ्गीकृताः। इह यद्यपि भावोदयादयोऽलङ्कारत्वेन नोक्तास्तथापि केनाप्युच्येरन् इत्यादिशब्द–पुरःसरशब्दयोर्ग्रहणम्। रसो विद्यते यत्र तद् रसवन्निबन्धनम्। एवं प्रेयःप्रभृतीन्यपि निबन्धनविशेषणानि। तत्र रसवद् यथा—

" किं हास्येन न मे प्रयास्यसि पुरः प्राप्तश्चिराद् दर्शनं
केयं निष्करुण ! प्रवासरुचिता केनासि दूरीकृतः ?।
स्वप्नान्तेष्वपि वो वदन् प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः ॥ ९४९ ॥ "

अत्र शृङ्गारः करुणस्य, सोऽपि राजविषयरत्याख्यभावस्य।

प्रेयो यथा—

" तद्वक्त्रामृतपानदुर्ललितया दृष्ट्या क्व विश्रम्यतां ?
तद्वाक्यश्रवणाभियोगपरयोः श्रव्यं कुतः श्रोत्रयोः ?।

---

१ व. ॰ध्विति।

एभिस्तत्परिरम्भनिर्भरतरैरङ्गैः कथं स्थीयतां ?
कष्टं तद्विरहेण सम्प्रति वयं कृच्छ्रामवस्थां गताः ? ॥९५०॥"

अत्र चिन्ताविप्रलम्भस्य ।

ऊर्जस्वि यथा—

"बन्दीकृत्य नृप ! द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणयन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपातितोऽस्यौचित्यवारांनिधे !
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥९५१॥"

अत्र रसाभाव(वा)भासौ प्रथम-द्वितीयार्धयोस्त्यौ रत्याख्यभावस्य ।

समाहितं यथा—

"अविरलकरवालकम्पनैर्भ्रुकुटीतर्जन-गर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणेक्षणात् ॥९५२॥"

अत्र मदप्रशमो रत्याख्यभावस्य ॥ ८६ ॥

इत्यलङ्कारानभिधाय तेषामन्योन्यसम्पर्कजनितमलङ्कारद्वयमिदानीं विवक्षुरादौ संसृष्टिमाह—

**त एते यत्र सम्पृक्तास्तिल-तन्दुलवन्मिथः ।**
**स्वातन्त्र्येणावतिष्ठन्ते संसृष्टिः साऽभिधीयते ॥ ८७ ॥**

सम्पर्को हि तिल-तन्दुलन्यायेन संयोगरूपः क्षीर-नीरन्यायेन च समवायरूपस्तत्र यत्र क्वचित् त एते प्रसिद्धिं काष्ठां प्राप्ता अलङ्कारास्तिल-तन्दुलवन्मिथः परस्परं सम्पृक्ताः सम्मिलिताः स्वातन्त्र्येण पृथक् पृथक् प्रतीयमाना अवतिष्ठन्ते सा संसृष्टिनामाऽलङ्कृतिः । यथा मणि-मुक्ता-सुवर्णादीनां पृथक् शोभाहेतुत्वेऽपि तत्सम्पर्कविशेषकृतं शोभान्तरमुन्मीलति तद्वदेतेषामपीत्यलङ्कारान्तरमेतत् । सा च शब्दालङ्कारसंसृष्टिरर्थालङ्कारसंसृष्टिरुभयसंसृष्टिश्चेति त्रिधा । तत्राद्या यथा—

" वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया ।
वलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥९५३॥ "

अत्रानुप्रास–यमकयोर्विजातीययोर्लकलोलकलोल इति कलोल कलोल इति सजातीययोः संसृष्टिः ।

द्वितीया यथा—

" पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गना[ः] ॥९५४॥ "

अत्र सजातीययोरुत्प्रेक्षयोर्यथा वा ' लिम्पतीव तमोऽङ्गानि ' इत्यादि । अत्रोत्प्रेक्षोपमयोर्विजातीययोः ।

तृतीया यथा—

" आनन्दमन्थरपुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु वो विजयाय मञ्जु मञ्जीरसिञ्जितमनोहरमम्बिकायाः॥९५५॥"

अत्रानुप्रासोपमयोः पादाम्बुजमित्यत्र ह्युपमाया मञ्जीरसिञ्जितं साधकं प्रमाणं रूपकस्य तु प्रतिकूलमम्बुजे तस्याभावात् ॥ ८७ ॥

अथ संङ्करमाह—

**स्वीकृत्य समवायाख्यं सम्बन्धं क्षीर–नीरवत् ।**
**संसृज्यन्ते पुनर्यस्मिन् केऽप्यमी सैष सङ्करः ॥ ८८ ॥**

क्षीर–नीरन्यायेन समवायाख्यमयुतसिद्धानामाधार्याधारभूतानां य इहेति प्रत्ययहेतुः सम्बन्धः स समवाय इति लक्षणलक्षितं तादात्म्यरूपं सम्बन्धमङ्गीकृत्य यस्मिन् यत्र पुनः केऽप्यमी पूर्वोक्ता अलङ्काराः संसृज्यन्ते संसर्गमनुभवन्ति स एष सङ्करो नामालङ्कारः ॥ ८८ ॥

अथास्य प्रकारानाह—

**तेषामङ्गाङ्गिभावेन संशयानुगमेन वा ।**
**एकस्मिन् वाचके वाऽनुप्रवेशेन स च त्रिधा ॥ ८९ ॥**

---

१ अ. शंक० ।

स च सङ्करस्त्रिप्रकारस्तद्यथा–तेषामलङ्काराणामात्मन्येव विश्रान्तिमनाप्नुवतामङ्गाङ्गिभावेन परस्परमन्वयवावयविस्त्ररूपेणेत्येकः । यथा—

" आत्ते सीमन्तचिह्ने मरकत(ति)नि ह(हृ)ते हेमताडङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन् ! गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥९५६॥ "

अत्र तद्गुणमाश्रित्य भ्रान्तिमानाविर्बभूव । भ्रान्तिमदुपष्टम्भेनैव च तद्गुणोऽपि चेतनचमत्कारीत्यनयोः परस्परमङ्गाङ्गिभावः ।

यथा वा—

" रजोभिस्तुरगोत्कीर्णैर्गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥ ९५७ ॥ "

अत्र परिवृत्तिरुपमाङ्गभूता ।

शब्दालङ्कारविषयेऽप्येष कैश्चिदुदाह्रियते यथा–

" राजति तटीयमभिहत–दानव–रासातिपातिसारावनदा ।
गजता च यूथमविरत–दान–वरा सातिपाति सारा वनदा ॥९५८॥ "

अत्राभिहतदानवरासेति शम्भुसम्बोधनम् । अत्र यमकानुलोम–प्रतिलोमयोः सङ्करः स चाङ्गाङ्गिभावरूपोऽत्र न युक्तः । शब्दालङ्कारयोर्मिथःसापेक्ष्य(क्ष)त्वाभावाद् वक्ष्यमाणस्त्वेकवाचकानुप्रवेशसङ्करो न विरुध्यते । तथा द्वयोः प्राप्तौ यत्रैकतरपरिग्रहे साधक–बाधकप्रमाणाभावः स संशयस्तस्यानुगमेन द्वितीयो यथा–

*" जह गंभीरो जह रयणनिब्भरो जह य निम्मलच्छाओ ।
ता किं विहिणा सो सरसवाणिओ जलनिही न कओ ? ॥९५९॥ "

अत्र समुद्रे प्रस्तुते विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः किमसौ समासोक्तिः ? किमब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतिपत्तेरियम-

---

* यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः ।
तत् किं विधिना स सरसपानीयो जलनिधिर्न कृतः ? ॥

---

१ अ. ०षसा० । २ अ. प्रप० ।

प्रस्तुत–प्रशंसेति सन्देहः । यत्र तु साधकं बाधकं वा प्रमाणमस्ति, तत्रैकतर-परिग्रहस्तत्र साधकं यथा—

" रोहन्मूलातिगौरैरुरगपतिफणैरत्र पातालकुक्षौ
प्रोद्यद्बालाङ्कुरश्रीर्दिशि दिशि दशनैरेभिराशागजानाम् ।
अस्मिन्नाकाग्रदेशे विकसितकुसुमा राशिभिस्तारकाणां
नाथ ! त्वत्कीर्तिवल्ली फलति फलमिदं बिम्बमिन्दोः सुधाऽऽर्द्रम् ॥ ९६० ॥"

अत्र रोहन्मूलत्वादीनि विशेषणानि कीर्तिरेव वल्लीति रूपकसाधकानि कीर्तिर्वल्लिरिवेत्युपमां प्रति तु न साधकानि न च बाधकानि प्रतीयमानोत्प्रेक्षां प्रति रूपकस्याङ्गभावः ।

बाधकं यथा—

" शरदीव प्रसर्पन्त्यां तस्य कोदण्डटात्कृतौ ।
विनिद्रजृम्भितहरिर्वि(वे)ष्योदधिरजायत ॥ ९६१ ॥ "

अत्र विनिद्रजृम्भितहरिरिति साम्योक्तिरुपमाया बाधकं प्रमाणम् । "उपमेयं व्याघ्राद्यैः साम्यानुक्तौ " [ सिद्धहेम० ३ । १ । १०२ ] इति वचनादुपमास-मासाभावात् । तथा एकस्मिन्नभिन्ने वाचके वा पदे द्वित्राद्यलङ्काराणामनुप्रवेशे÷नावस्थानेनेति ।

तृतीयो यथा—

" मुरारिर्निर्गता नूनं नरकप्रतिपन्थिनी ।
तवापि मूर्ध्नि गङ्गेव चक्रधारा पतिष्यति ॥ ९६२ ॥ "

अत्र मुरारिर्निर्गतेत्यर्थश्लेषोद्भवाया उपमाया नरकप्रतिपन्थिनीति शब्द-श्लेषोद्भवायाश्चैकस्मिन्निवशब्दे सङ्कीर्यमाणत्वादर्थालङ्कारसङ्करः ।

शब्दार्थालङ्कारसङ्करो यथा—

" स्पष्टोच्छ्रमत्किरणकेसरसूर्यबिम्बं विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुखावतारबद्धान्धकारमधुपावलि सञ्चुकोच ॥९६३॥"

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ ॥ ८९ ॥

अथालङ्कारोपसंहारपूर्वं तद्दोषाभिधानं प्रतिजानीते—

÷ इतः परं पत्रस्याभावाद् ब. पुस्तिकाऽपि विकला ।

" लक्षिता इत्यलङ्काराः काव्यसौन्दर्यहेतवः ।
दोषास्तेषामिदानीं तु कांश्चिदप्यभिदध्महे ।। ९० ।। "

इति पूर्वोक्तप्रकारेणालङ्कारा अनुप्रासोपमादयः कविताचारुत्वकारणभूता लक्षिता लक्षणोपेतत्वेन कथिताः । इदानीं सम्प्रति तेषां कांश्चिदपि दोषानुत्कर्षव्याहतिहेतूनभिदध्महे ब्रूम इति ॥ ९० ॥

अथानुप्रासदोषानाह—

प्रसिद्ध्यभावो वैफल्यं तथा वृत्तिविरुद्धता ।
एतेऽनुप्रासमाश्रित्य दोषाः सङ्कीर्तितास्त्रयः ॥ ९१ ॥

प्रसिद्धेः शास्त्रीयाया लौकिक्या वाऽभावोऽविद्यमानता । वैफल्यं निष्फलता तथा वृत्तीनामुपनागरिकाऽऽदीनां विरुद्धत्वमित्येते त्रयो दोषा अनुप्रासमाश्रित्य अनुप्रासविषये सङ्कीर्तिताः कथिताः । तत्राद्यो यथा—

" चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजान्ता-
नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।
रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात् स्यन्दनो वः ॥ ९६४ ॥ "

अत्र कर्तृ-कर्मनैयत्येन स्तुतिरनुप्रासानुरोधेनैव कृता, न तु पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ।

वैफल्यं यथा—

" स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः ।
भिद्यादुद्यदुदारदु(द)र्दुरदरी दीर्घादरिद्रद्रुम-
द्रा(द्रो)होद्रेकमयो ममेन्दु(-होर्मिमेदु-)रमदा मन्दाकिनी मन्दताम् ॥९६५॥ "

अत्र वाच्यस्य न किञ्चिच्चारुत्वमस्तीति निष्फलत्वमेवानुप्रासस्य ।

वृत्तिविरुद्धत्वं यथा—

" अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि ! माम् ।
कम्बुकण्ठ्याः क्षणे कण्ठे कुरु कण्ठार्तिमुद्धर ॥ ९६६ ॥ "

अत्र शृङ्गारोचितायामुपनागरिकायां परुषवर्णत्वं विरुद्धम् ॥ ९१ ॥

अथ यमकदोषमाह—

**पादत्रयगतत्वेन यमकं न प्रयुज्यते ।**

पादत्रयाश्रितमेव यमकं न प्रयोक्तव्यम् । यथा—

" भुजङ्गमस्येव मणिः सदम्भा [ ग्राहावकीर्णेव नदी सदम्भाः । ]
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतःप्रमुखैः सदम्भा [ः]॥९६७॥ "

अत्र तृतीयपादे यमकं नास्ति ।

अथोपमादोषानुपक्रमते—

**अथेदमुपमादोषजातं किमपि कथ्यते ॥ ९२ ॥**

अथेत्यनुप्रासदोषानन्तरं उपमाया दोषजातं दूषणवृन्दं किमपि स्तोकं कथ्यतेऽभिधीयते ॥ ९२ ॥

अथ दोषजातमेवाह—

**जाति-प्रमाणयोर्न्यूनाधिकत्वमुपमानगम् ।**
**धर्माश्रितोऽधिकन्यूनभावोऽप्यस्यां न सम्मतः ॥ ९३ ॥**

उपमानगमुपमानास्थितं जातेः प्रमाणस्य च न्यूनत्वमधिकत्वं च । तथा धर्माश्रितो धर्मसङ्ख्याविषयोऽधिकभावो न्यूनभावश्चास्यामुपमायां न सम्मतो नाभीष्टः ।

तत्र जातिन्यूनत्वं यथा—' चण्डालैरिव युष्माभिः साहसं परमं कृतम् । '
प्रमाणन्यूनत्वं यथा—' वह्निस्फुलिङ्ग इव भानुरयं चकास्ति । '

जात्यधिकत्वं यथा—

" अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः ॥ ९६८ ॥ "

प्रमाणाधिकत्वं यथा—

" पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः॥९६९॥"

पशु–चण्डालादिभिरुपमानैर्न्यूनाधिकैरत्यन्तमनुचितैः प्रस्तुतोऽर्थः कामं कदर्थितः।

धर्माधिकत्वं यथा—

+" अहिणवमणहरविरइयवलयविहूसा विहाइ नववहूआ।
कुन्दलय व्व समुप्फुल्लगुच्छपरिलीणभमरगणा॥९७०॥"

अत्र भ्रमरगणस्याधिकत्वम्।

धर्मन्यूनत्वं यथा—

*" संहयचक्कायजुआ विअसिअकमला मुणालसंच्छन्ना।
वावी वहु व्व रोयणविलित्तथणया सुहावेइ॥९७१॥"

अत्र नेत्रबाहूपमानपदानि वधूविशेषणत्वेनाभिहितानि॥९३॥

अथास्या दूषणान्तरमाह—

**दूषयत्युपमां भेदो लिङ्गस्य वचनस्य च।**
**यदि साधारणं धर्ममन्यरूपं करोत्ययम्॥९४॥**

उपमोपमेययोर्लिङ्गभेदो वचनभेदश्चोपमां दूषयति। यदि साधारणं समानं धर्ममन्यरूपमन्यादृशमयं भेदः करोति। तत्राद्यो यथा—

" वापीव विमलं व्योम हंसीव धवलः शशी।
शशिलेखेव हंसोऽयं हंसालिरिव ते यशः॥९७२॥"

अत्र विमलत्वादिधर्मा लि–ङ्गभेदान्नोभयानुगमक्षमाः।

---

+ अभिनवमनोहरविरचितवलयविभूषा विभाति नववधूका।
कुन्दलतेव समुत्फुल्लगुच्छपरिलीनभ्रमरगणा॥

* संहतचक्रवाकयुगा विकसितकमला मृणालसंछन्ना।
वापी वधूरिव रोचनविलिप्तस्तना सुखयति॥

द्वितीयो यथा—

" सरांसीवामलं व्योम काशा इव सितः शशी ।
शशीव धवला हंसा हंसीव विशदा दिशः ॥ ९७३ ॥ "

अत्र वचनभेदादमलत्वादिधर्मा अप्येवमेव । यदि तु लिङ्गभेदेऽपि धर्माणामेकरूपत्वं तदा न दोषस्तस्योभयत्राप्यनुगमक्षमत्वात् ।

यथा—

" तद्वेषः सदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ ९७४ ॥ "

अत्र सदृश इति मधुरताभृत इति चेति धर्मा उभयानुगामिनः ॥ ९४ ॥

अस्या एव दोषान्तरमाह—

**भजतोऽस्यामसादृश्यासम्भवावपि नेष्टताम् ।**

तत्रासादृश्यं यथा—

" ग्रथ्नामि काव्य-शशिनं विततार्थरश्मिम् । "
अत्र काव्यस्य शशिनाऽर्थानां च रश्मिभिः सादृश्यं क्वापि न प्रतीतम् ।

असम्भवो यथा—

" निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात् ॥९७५॥ "
अत्र ज्वलन्त्यो वारिधाराः सूर्यमण्डलान्निपतन्त्यो न सम्भवन्ति ।

अथास्या दूषणान्तरानङ्गीकारार्थमाह—

**शक्यः कालादिभेदस्तु परिहर्तुं न कैश्चन ॥ ९५ ॥**

" अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमाद् यामिनीयामात् प्रसादमिव चेतना ॥ ९७६ ॥ "
इत्यादौ चेतना प्रसादमाप्नोति, न त्वापेत्यादि कालभेदः ।

" प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटपप्रभवा लतेव ॥९७७॥ "

इत्यादौ लता विभ्राजते न तु विभ्राजसे इत्यादि पुरुषभेदः ।

' गङ्गेव प्रवहतु ते सदैव कीर्तिः । ' इत्यादौ गङ्गा प्रवहति, न तु प्रवहत्वित्यादि ॥

विध्यादिभेदश्च यः केनाप्यस्यां ह(प)रिहार्यत्वेनोक्तः, स न कैश्चन कोविदैरपि शक्यः परिहर्तुमुपमानोपमेययोः प्रयाणैककालमनुत्पत्त्या सम्बोधनाशीर्वादाविषयत्वेन च कवितायां निर्विषयताप्रसङ्गादिनाऽनुचितं परिहार्यत्वादभिधानम् ॥ ९५ ॥

अथोत्प्रेक्षादोषमाह—

**नोत्प्रेक्षां क्षमते वक्तुं यथाशब्द इवादिवत् ।**
**तां समर्थयितुं नार्थान्तरन्यासोऽपि युज्यते ॥ ९६ ॥**

इवादिवत् ध्रुवं–शङ्के–मन्ये–प्रभृतयः शब्दा यथोत्प्रेक्षां वक्तुं क्षमन्ते, न तथा यथाशब्दस्तस्य सादृश्यमेव वक्तुं क्षमत्वात् । यथा—

" उदयौ दीर्धिकागर्भान्मुकुलं मेचकोपमम् ।
नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा ॥ ९७९ ॥ "

तथा तामुत्प्रेक्षां समर्थयितुमर्थान्तरन्यासाश्रयणमपि न युज्यते । सम्भावितत्वादताच्चिकरूपवत्त्वेनाकाशकुसुमप्रायायां तस्यामर्थान्तरन्यासस्य भ्रमरसंनिवेशतुल्यत्वात् । यथा—

" दिवाकराद् रक्षति यो गुहासु लीनं दिवा भीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्न(न्ने) ममत्वमुच्चैःशिरसामतीव ॥ ९८० ॥ "

अत्राचेतनस्य तमसः सूर्यात् त्रास इ(ए)व न सम्भवति । कुतस्तद्धेतुकमद्रिणा परित्राणम् ? । सम्भावितेन तु रूपेण द्वयमपि किमप्यु[प]पादयितुं शक्यते । तत्समर्थनाय यत्नस्तु व्यर्थ इ(ए)व ॥ ९६ ॥

अथ समासोक्तिमाह—

**तुल्यैर्विशेषणैरेव प्रतीतपथचुम्बिनः ।**
**प्रयोगश्चोपमानस्य समासो[क्तौ] न साम्प्रतम् ॥९७॥**

चकारः पूर्वसमुच्चये । विशेषणसाम्यादेवोपमानस्य प्रतीतौ तत्प्रयोगः समासोक्तौ न युक्ततां चुम्बति, अधिकप्रसङ्गाद् । यथा—

" स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयायिदिनश्रिया ॥ ९८१ ॥

अत्र यथा तिग्मरुचः ककुभां च विशेषणसाम्यादेव नायकत्वप्रतीतिस्तथा निदाघदिनश्रियोऽपि प्रतिनायकप्रतीतिरस्त्येवेति दयिताशब्दप्रयोगो न युक्तः । एवमप्रस्तुतप्रशंसायामुपमेयप्रयोगोऽपि नौचित्यं चुम्बति । यथा—

" आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्यते
मध्ये वायुरिवाविशंस्तृणमपी(पि) धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ ९८२ ॥

अप्रभुमिवेत्युपमेयं विशेषणसाम्यादेव गम्यते । प्रयोगस्त्वस्य नोचितः॥९७॥

अर्थालङ्कारसमर्थनार्थमाह—

**इत्यलङ्कारवैचित्र्यमुक्तमर्थाश्रये कियत् ।**
**अनन्ता हि कवीन्द्राणां भङ्गीभणितयोऽद्भुताः ॥ ९८ ॥**

इत्यमुना पूर्वोक्तप्रकारेणार्थाश्रयणं वाच्यनिष्ठं कियदल्पमलङ्कारवैचित्र्यमुक्तमभिहितम्; सामस्त्येन वक्तुमशक्यत्वात् । हिर्यस्मात् कारणात् कवीन्द्राणामद्भुता लोकोत्तरा भङ्गीभणितयो विच्छित्तिविशेषोक्तयोऽनन्ताः सङ्ख्यातीता वर्तन्ते । ता एव चालङ्कारास्ततश्चानन्त्यादेवैताः सर्वा अपि वक्तुं न शक्यन्त एवेत्यर्थ इति ॥ ९८ ॥

इत्थं दोषपराङ्मुखी गुणपरीरम्भैकसंरम्भिणी
नानाऽलङ्कृतिशालिनी रसपरिस्यन्दामृतस्यन्दिनी ।
वक्त्रे वल्गति वाक् प्रसन्नमधुरा धाम्नीव सीमन्तिनी
तस्यैव स्वगुरोः प्रसीदति परं यत्रांह्रिपङ्केरुहम् ॥ ९९ ॥

इत्यलङ्कारमहोदधौ अर्थालङ्कारवर्णनो नामाष्टमस्तरङ्गः ॥ ८ ॥

—•—

[ ग्रन्थकार-प्रशस्तिः ]

गच्छे हर्षपुरीये गुणसेवधिरभयदेवसूरिरभूत् ।
मलधारीत्यभिधाऽन्तरमधत्त यः कर्णभूपकृतम् ॥ १ ॥

शिष्यस्तदीयोऽजनि हेमसूरिरपारविद्याऽर्णव-कर्णधारः ।
श्रीसिद्धराजः किल यस्य वाचं बभार शेषामिव मूर्ध्नि शश्वत् ॥ २ ॥

तस्य भुवनप्रशस्यः शिष्यः श्रीविजयसिंहसूरिरभूत् ।
आन्तरविरोधिकरिकुलविजये सिंहायितं येन ॥ ३ ॥

श्रीचन्द्रसूरिस्तदनु प्रदत्तमनःप्रमोदोऽजनि कोविदानाम् ।
सारस्व[त]श्रो(स्रो)तसि यस्य खेलन् केषां न हर्षाय यशो-मरालः ? ॥ ४ ॥

जज्ञे शमाम्बुनिधिरस्य पदे जनानामानन्दभूः स भगवान् मुनिचन्द्रसूरिः ।
साम्यामृतं किमपि यत्र तदाऽऽविरासीद् यज्जन्मिनां सपदि भावरुचोऽप्यहार्षीत् ॥ ५

श्रीमुनीन्द्रप्रभोर्गच्छं गुणैस्तैस्तैरभूषयन् ।
वक्षो मुक्ता इव स्त्रीणां श्रीदेवानन्दसूरयः ॥ ६ ॥

जगन्मनः-कैरव-शीतरश्मिः श्रीमान् यशोभद्रगुरुस्ततोऽभूत् ।
जाता तपस्यभ्यधिकैव कान्तिः किन्त्वस्य सिद्धान्तसुधामयस्य ॥ ७ ॥

बभूव विद्या-भ्रमरी-सरोजं प्रभुः स देवप्रभसूरिरस्मात् ।
प्रसादसौरभ्यमवाप्य यस्य मादृग्विधोऽप्येष सतां मुदेऽभूत् ॥ ८ ॥

ततो गुणानामधिदैवतं परं जयन्त्यमी श्रीनरचन्द्रसूरयः ।
यद्वाचि विन्यस्तभराऽद्य भारती बिभर्ति ला(भा)सुखसङ्गमं चिरात् ॥ ९ ॥

एते काव्यकलारहस्यमतुलं शिष्यप्रकाण्डेषु यद्
व्याचक्षुर्नरचन्द्रसूरिगुरवो वात्सल्यकल्लोलिताः ।
तत् किञ्चित् सुधियां चमत्कृतिकृते व्युत्पत्तये चात्मन-
स्तत्पादद्वयपङ्कजालिरलिखत् सूरिर्नरेन्द्रप्रभः ॥ १० ॥

समाप्तेयमलङ्कारमहोदधिटीका । एतस्याः प्रमाणं चेदम्-

नयन-वसु-सूर १२८२ वर्षे निष्पन्नायाः प्रमाणमेतस्याः ।
अजनि सहस्रचतुष्टयमनुष्टुभामुपरि पञ्चशती ॥ ११ ॥

समाप्तेयं टीका । ग्रन्थाग्रं ४५०० ॥



अथैतद्गतालङ्कारानुक्रमबीजकं यथा—

१ अतिशयोक्तिः
२ सहोक्तिः
३ उपमा
४ अनन्वयः
५ उपमेयोपमा
६ स्मरणम्
७ संशयः
८ भ्रान्तिमान्
९ उल्लेखः
१० रूपकम्
११ अपह्नुतिः
१२ परिणामः
१३ उत्प्रेक्षा
१४ तुल्ययोगिता
१५ दीपकम्
१६ निदर्शना
१७ प्रतिवस्तूपमा
१८ दृष्टान्तः
१९ अर्थान्तरन्यासः
२० व्यतिरेकः
२१ विनोक्तिः
२२ परिकरः
२३ समासोक्तिः
२४ अप्रस्तुतप्रशंसा
२५ पर्यायोक्तम्
२६ आक्षेपः
२७ व्याजस्तुतिः
२८ श्लेषः
२९ विरोधः
३० असङ्गतिः
३१ विशेषोक्तिः
३२ विभावना
३३ विषमम्
३४ समम्
३५ अधिकम्
३६ पर्यायः
३७ विकल्पः
३८ व्याघातः
३९ अन्योन्यम्
४० विशेषः
४१ कारणमाला
४२ सारः
४३ एकावली
४४ दीपकम्
४५ काव्यलिङ्गम्
४६ अनुमानम्
४७ यथासङ्ख्यम्
४८ परिवृत्तिः
४९ परिसङ्ख्या
५० अर्थापत्तिः
५१ समुच्चयः
५२ समाधिः
५३ प्रत्यनीकः
५४ प्रतीपम्

५५ मीलितम्
५६ सामान्यम्
५७ तद्गुणः
५८ अतद्गुणः
५९ उत्तरम्
६० सूक्ष्मम्
६१ व्याजोक्तिः
६२ स्वभावोक्तिः
६३ भाविकम्
६४ उदात्तम्
६५ रसवत्
६६ प्रेयः
६७ ऊर्जस्वि
६८ समाहितादि
६९ संसृष्टिः
७० सङ्करः

इति सप्ततिरलङ्कारा मुख्या भेदास्तु बहवः ॥

**अलङ्कारमहोदधिः सटीकः समाप्तः ।**

## परिशिष्टम् ।

### भावदेवसूरिविरचितः

# काव्यालङ्कारसारः ।

श्रीसर्वज्ञं नत्वा काव्यालङ्कारसारसंङ्कलनाम् ।
वक्ष्ये सङ्क्षेपेण स्पष्टं बालावबोधाय ॥ १ ॥

इष्टानिष्टेषु तज्ज्ञानां प्रवर्तन–निर्वर्तनात् ।
काव्यं गुरु–सुहृत्–तुल्यं कार्यं श्रेयो–यशः–श्रिये ॥ २ ॥

शक्तिर्व्युत्पत्तिरभ्यासस्तस्य हेतुरिति त्रयम् ।
सहजा दैवता वाऽ(चा)पि प्रतिभा शक्तिरुच्यते ॥ ३ ॥

व्युत्पत्तिः सा तु यच्छास्त्रे व्यवहारे च नैपुणम् ।
पौनःपुन्यतया तत्तच्छिक्षाऽभ्यासैः स उच्यते ॥ ४ ॥

शब्दार्थौ च भवेत् काव्यं तौ च निर्दोष–सद्गुणौ ।
सालङ्कारौ सतामिष्टावत एतन्निरूप्यते ॥ ५ ॥

इति श्रीभावदेवाचार्यविरचिते अलङ्कारसारे काव्य-फल–हेतुस्वरूपनिरूपणो
नाम प्रथमोऽध्यायः ॥ १

---

### अथ द्वितीयोऽध्यायः ।

शब्दो मुख्यो लाक्षणिको व्यञ्जकश्च त्रिधा मतः ।
वाचकापरपर्यायं मुख्यशब्दं विदुर्बुधाः ॥ १ ॥

शब्दस्यार्थोऽपीत्यभिधा–लक्षणा–व्यञ्जनाभिधैः ।
व्यापारैर्गम्यैः स्याद् वाच्यो लक्ष्यो व्यङ्ग्यस्त्रिधा क्रमात् ॥ २ ॥

---

१. अ. प. ०मंगलनां । २. का. विव० । ३. अ. प. सुख० । ४. अ. प. ०व्यात् वा यत्र । ५. अ. प. ०भ्यास उ० । ६. अ.समाषि०, प. समावि० । ७. अ. प. एव त० ८. अ. प. अलङ्कारे । ९. अ. प. प्ररू० । १०. अ. प. ०विधं:। ११. अ. प. ०र्गैः ।
।

गङ्गायां घोष इत्यत्र गङ्गावाच्यमथो तटम् ।
लक्ष्यं व्यङ्ग्यं पुनः शैत्य–पावनत्वाद्ययं क्रमः ॥ ३ ॥
मुख्यार्थनिष्ठो यः शब्दव्यापारः साऽभिधा मता ।
अभिधैव ह्यमुख्यार्थाऽन्यार्थगा लक्षणा भवेत् ॥ ४ ॥
व्यञ्जनं व्यज्यते येनानुक्तं व्यङ्ग्यं पुनर्द्विधा ।
गौणं मुख्यं च प्राक् काक्वाक्षिप्ताद्यमितरद् ध्वनि ॥ ५ ॥
रोमाञ्चाद्यङ्कितार्ङ्गित्वं वापीं स्नातुं गता सखि ! ।
न तु तस्याधमस्यान्ते रतं तेऽभूदिति ध्वनिः ॥ ६ ॥
अघटनेतोऽनुपयोगान्मुख्यऽर्थे बाधिते तदासत्त्या ।
योऽन्यार्थागमो रूढेः प्रयोजनाद् वेति लक्षणा सोक्ता ॥ ७ ॥
गङ्गायां घोषस्यानुपपत्त्याऽऽसत्तितस्तटावगमः ।
यद् भवति लक्षणा सा प्रयोजनं पावनत्वादि ॥ ८ ॥
कुशलस्यानुपपत्त्या कर्मणि कुशलस्य दक्ष इति रूढिः ।
व्यङ्ग्येन सा तु रहिता प्रयोजनं व्यङ्ग्यरहितं तु ॥ ९ ॥
रामोऽस्मीत्यत्राख्यानुपयोगात् लक्ष्यते हि तदवस्था ।
निर्वेदाद्यसमानं प्रयोजनं व्यङ्ग्यमेतत् तु ॥ १० ॥
षड्भेदा लक्षणा प्रोक्ता शुद्धौ भेदौ तदादिमौ ।
तथोपचारमिश्रास्तु चत्वारस्तन्निरूप्यते ॥ ११ ॥
कुन्ता विशन्तीत्यादौ यः पराक्षेपः स्वसिद्धये ।
परोपादानतः साऽऽद्यां स्मृतोपादानलक्षणा ॥ १२ ॥
गङ्गायां घोष इत्यादौ परार्थे स्वसमर्पणात् ।
लक्षणाल्लक्षणा या स्यादसौ लक्षणलक्षणा ॥ १३ ॥
गुणतो गुणसारोपा गौर्वाहीको यथोच्यते ।
गौरेवायमितीयं तु गौणसाध्यवसानिका ॥ १४ ॥"

१. का. क्रमात् । २. का. ०ङ्गता । ३. अ. प. सखे । ४. का. ०लानानु० । ५ अ. प. ०मृदक्ष । ६. का.०त्व० । ७. अ. प. ०दिस० । ८. अ. प. ०तः वि० । ९. का. ०ह्य सि० । १०. अ. प० तु । ११ का. इति ।

सम्बन्धात् शुद्धसारोपा घृतमायुरिदं यथा ।
आयुरेवेदमित्येषा शुद्धसाध्यवसानिका ॥ १५ ॥

इति श्रीभावदेवाचार्यविरचितेऽलङ्कारसारे शब्दार्थस्वरूपनिरूपणो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

अथ तृतीयोऽध्यायः ।

दुष्टं पदं श्रुतिकटु स्यात् तथा च्युतसंस्कृति ।
शिथिलानुचितार्थे च नेयार्थमसमर्थकम् ॥ १ ॥
क्लिष्टं निरर्थकं ग्राम्यं सन्दिग्धं कथितं तथा ।
विकृतं निहतार्थं च विरुद्धमतिकृत् तथा ॥ २ ॥
समाप्त-पुनरात्तं स्याद् अश्लीलं चाप्रयुक्तकम् ।
अविमृष्टविधेयांशमथो पतत्प्रकर्षकम् ॥ ३ ॥
स्यातामुपहत-लुप्तविसर्गे च विसन्ध्यथ ।
कुसन्धि हतवृत्तं च स्यान्न्यूनमधिकं तथा ॥ ४ ॥
अस्थानस्थपदं भग्नप्रक्रमं गर्भितं तथा ।
अप्रसिद्धं च सङ्कीर्णमक्रमं वाक्यमप्यसत् ॥ ५ ॥
श्रुतिकट्वेष कार्तार्थ्यभाजी त्वद्दर्शनादभूत् ।
च्युतसंस्कृति तु च्छन्दो-लिङ्ग-लक्षण-दूषणात् ॥ ६ ॥
शिथिलितं मुखाब्जश्रीरलं लोलाम्बकालिनी ।
अनुचितार्थं च यद्यज्ञे सुभटाः पशुतां गताः ॥ ७ ॥
नेयार्थं नेयसापेक्ष्यं न जलेऽलक्षि कालियः ।
असमर्थं यथा हन्ति गत्यर्थं न समर्थयेत् ॥ ८ ॥
क्लिष्टं व्यवहितार्थं यन्निरर्थं चादिपूरणात् ।
ग्राम्यं तु कटि-गल्लाद्यं सन्दिग्धं याति खे खगः ॥ ९ ॥

---

१ अ. प. ०प्ररू० । २ अ. प. कर्ता० । ३ का. त्व० । ४ अ. प. यज्ञे । ५ अ. प. सापेतं ।

[11]कथितं तीव्ररुक् तीव्रो वि[12]कृतं यद्वदैयरुः ।
[13]नि[1]हतार्थं तु रागा[2]र्थे शोणिते रुधिरार्थतः ॥ १० ॥

उपहारस्त्वया देव्या[:] शोणितप्रसवैः कृतः । [षट्पदः]

[14]विरुद्धमतिकृत् तु स्यादपराधीनता यथा ।
[15]समाप्त-पुनरात्तं स्यात् शङ्खा[3]भा कीर्तिरिन्दुभा ॥ ११ ॥

त्रिधाऽश्ली[16]लममंकल्याण-व्रीडा-[4]गर्हाकरोक्तिभिः ।
बाला मृतेव दृष्टो[5]रुसाधना प्रक्षरन्मला ॥ १२ ॥

[17]अप्रयुक्तं तु पुल्लिङ्गस्याद्दति[6]दैवते यथा । [षट्पदः ।]
[18]अविमृष्टविधेयांशं समासे क्वात्र तन्नृपः ? ।
[19]पतत्प्रकर्षं हीनानुप्रासादित्वे यथोत्तरम् ॥ १३ ॥

[20]उपहत-लु[21]प्तविसर्गे वीरो धीरा[6] घना जना भविका ।
माले इमे विसन्धि[22] तु कु[23]सन्धि वटवानयस्व घटम् ॥ १४ ॥

[24]हतवृत्तं विच्छन्दः स्यात् स्वादूत्पलसुगं[7]धमिह नीरम् ।
[25]न्यूनं हृदि गुण-कजवनमं[26]धिकं स्फटिकाकृतिप्रतिभम् ॥ १५ ॥

[27]अस्थानस्थं सिता विश्वं कीर्तिस्त्वे व्याप पद्मवत् ।
[28]भग्नप्रक्रममर्केऽस्तं याते याता दिनोऽपि हि ॥ १६ ॥

[29]गर्भितं खलसंसर्ग[9] वदामि तव मा कृथाः ।
[30]अप्रसिद्धं रवः सिंहे द[10]र्दुरे कूजितं यथा ॥ १७ ॥

[31]सङ्कीर्णं कुरु मां रौद्रा[11]द् देव ! रक्ष दयां भयात् ।
[32]अक्रमं तु शशी दृष्टो[12] वदनं दीयते[13]ऽत्र ते ॥ १८ ॥

अर्थदोषा[14]स्त्वपुष्टोऽर्थः कष्टो व्याहत एव च ।
विरुद्धानुचित-ग्राम्य-सन्दिग्ध-पुनरुक्तकाः ॥ १९ ॥

---

१ का. निहि० । २ अ. प. रागे० । ३ का. शंखभा । ४ का. ०कसा० । ५ का. ०दी । ६ का. ०रोय मा । ७ अ. प. ०गंधि० । ८ अ. प. ०मां । ९ का. गते । १० अ. प. दुर्दरे । ११ अ. प. रौद्र दे० । १२ अ. प. स्यो । १३ अ. प. दयते च । १४ अ. ०दोष० ।

अपुष्टो न विशिष्टो यः कष्टो दुःखावबोधकृत् ।
व्याहतार्थं मिथो घातात् विधीयस्त्वं रिपूनहन् ॥ २० ॥

विद्यया च प्रसिद्ध्या च विरुद्धो द्विविधो यथा ।
प्रतापो वर्ण्यते श्वेतः केतकी हरमूर्धनि ॥ २१ ॥

तथा सहचराचारविरुद्धोऽपि भवेद् यथा ।
ध्वाङ्क्षाः सन्तश्च मन्यन्ते परस्यापि सुतं निजम् ॥ २२ ॥

शेषं सुगममन्वर्थात् क्वचिद् दोषोऽपि ह्यस्यतः ।
कवीनां समयात् श्लेषादुक्तो भवति सद्गुणः ॥ २३ ॥

इहोदाहरणस्यादौ ग्रन्थसङ्क्षेपमात्रतः ।
यथाशब्दोऽप्रयुक्तोऽपि योज्यः पूर्व-परात् पदात् ॥ २४ ॥

इति श्रीभावदेवाचार्यविरचितेऽलङ्कारसारे शब्दार्थदोषप्रकटनो
नाम तृतीयोऽध्यायः ॥ ३ ॥

---

अथ चतुर्थोऽध्यायः ।

पूर्वं हेयतया काव्ये दोषानाख्याय कांश्चन ।
अथादेयतया केचिद् वर्ण्यन्ते साम्प्रतं गुणाः ॥ १ ॥

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजः-कान्ति-समाधयः ॥ २ ॥

श्लेषः सुश्लिष्टवर्णत्वं यथा श्रव्यं गुरोर्वचः ।
प्रसादः स्फुटरूढार्थो यशः कुन्देन्दुसोदरम् ॥ ३ ॥

समता समवर्णत्वं मुखं स्मितसितद्युति ।
माधुर्यं श्रुति-हृत्प्रीति गिरस्ते दुग्धबन्धवः ॥ ४ ॥

सौकुमार्यं तु लालित्यं नीरसोऽयं पुनस्तरुः ।
अर्थव्यक्तिः समग्रार्थो हरिः पातु श्रियः पतिः ॥ ५ ॥

---

१ अ. प. रिपु० । २ अ. प. श्वास्य० । ३ अ. प. इति० श० । ४ अ. प. कश्चित्. का. तस्मिन् । ५ का.० पस्तु । ६ का. ०रस्त० । ७ का. ०प्रोऽ० ।

औदार्यं तु विदग्धोक्तिः क्वार्थिनस्त्वयि दातरि ? ।
ओजोऽल्पवर्णैः प्रौढोक्तिर्धर्मस्तेऽसौ जगज्जयी ॥ ६ ॥

कान्तिः सर्वजनस्येष्टं जन्म मेऽद्य त्वदीक्षणात् ।
समाधिरर्थमाहात्म्यं पद्मोन्मेषः प्रमोदयेः ॥ ७ ॥

माधुर्यौजः-प्रसादाख्यास्त्रय एव गुणाः परैः ।
ख्यातास्ते तन्मते शेषा एष्वेवान्तर्भवन्ति ते ॥ ८ ॥

शोभाऽभिमा(धा)न-हेतु-प्रतिषेध-निरुक्ति-युक्ति-कार्याख्यम् ।
सिद्धिश्च काव्य-नृपतेर्लक्षणमिदमुत्तमं प्राहुः ॥ ९ ॥

शोभा दोषनिषेधात्मा यत्र त्वं स शुभः कलिः ।
अभिमा(धा)नस्तु वस्तूहश्चन्द्रश्चेत् तीव्रता कथम् ? ॥ १० ॥

हेतुस्त्यक्तान्यदेकोक्तिर्नेन्दुर्नार्को गुरुर्ह्यसौ ।
प्रतिषेधो न युद्धेन त्वं भ्रुवैवाजयः परान् ॥ ११ ॥

निरुक्तं त्वीदृशैव तौ जाने दोषाकरो भवान् ।
युक्तिर्वैशिष्ट्यमब्दस्त्वं नवो यद् हेम वर्षसि ॥ १२ ॥

कार्यं फलोक्तिः श्रीमानच्छेदायेन्दुरुदेत्यसौ ।
सिद्धिः ख्यातेषु तुल्याख्याऽब्धिर्जलैस्त्वं बलैर्महान् ॥ १३ ॥

इति श्रीभावदेवाचार्यविरचितेऽलङ्कारसारे गुणप्रकाशनो नाम चतुर्थोऽध्यायः॥४॥

---

## अथ पञ्चमोऽध्यायः ।

स्याद् वक्रोक्तिरनुप्रासो यमकं श्लेष इत्यपि ।
चित्रं पुनरुक्तवदाभासः शब्देऽलङ्कृतिः ॥ १ ॥

वक्रोक्तिः श्लेष-काकुभ्यां श्लेषे केनेदृशी तव ? ।
निर्मिता दारुणा बुद्धिर्न सा दारुमयी क्वचित् ॥ २ ॥

---

१ अ. प. ०न्तं । २ का. ०दये । ३ अ. प. ०स्तै । ४ का. ०न्स्यतः । ५ अ. प. ०स्तवस्तु ह्रस्वे० । ६ अ. प. नियु० । ७ का. त्वादृशैर्मूर्तैर्जनो । ८ अ. प. इति ०गु० ।

काक्वा तु गुरुनिघ्नत्वात् विदेशं गन्तुमुद्यतः ।
कोकिलारावमधुरे समये नेष्यति प्रियः ॥ ३ ॥

वर्णसाम्यमनुप्रासः छेकगो लाटगो द्विधा ।
आद्ये व्यञ्जनसादृश्यं सकृदन्यत्र भूरिशः ॥ ४ ॥

अत्रोदाहरणे देव ! केवलालोकभास्वते ।
तुभ्यं नमोऽस्तु कन्दर्पसर्पदर्पगरुत्मते ॥ ५ ॥

तत्पदाख्योऽपि लाटानामनुप्रासो भवेद् यथा ।
तपसा किं सरागश्चेत् तपसा किं स नो यदि ? ॥ ६ ॥

यमकं यत्र वर्णानां सदृशानां पुनः श्रुतिः ।
श्लोकार्ध–पद–पादानामावृत्त्या तदनेकधा ॥ ७ ॥

विपदन्तपदं तत्त्वं देहि नः कमलानन ! ।
केवलं केवलं त(य)त्र देहिनः कमलानन ! ॥ ८ ॥

स श्लेषो यत्र भिन्नार्थाः शब्दाः श्लिष्यन्त्यभिन्नवत् ।
पृथुकार्तस्वरस्थानं गृहं ते मेऽधुना विभो ! ॥ ९ ॥

चित्रं मरु(मुर)जबन्धादि खड्ग–चक्रातपत्रगम् ।
विचित्रमुदितं तत्र पद्मबन्धगतं यथा ॥ १० ॥

दक्षत्वदर्हनामन्ददद्यानन्द ! दयास्पद ! ।
दरोद्भेद दवाम्भोद ! दद्या दमदं ! मे मुदः ॥ ११ ॥

न–णौ ड–लौ ब–वावेकौ र–लावप्यस्वरौ मतौ ।
स्वच्छा विंदुः स्वसंयोगे यमके श्लेष–चित्रयोः ॥ १२ ॥

---

१ अ. प. ०रुनिशे मित्रे च सहजप्राकृतावापि । ३६ उपकर्त्राघ्न०। २ अ. प. श्रुतिगो । ३ का. क्लिश्यंति । ४ अ. प. रथ च० । ५ अ. प. ०दिवं । ६ अ. प. ददना० ०र्बंधमया०। ७ मदद । ८ अ. प. वला० । ९ का. नमौ । १० का. बिंदु ।

पुनरुक्तवदाभासः पुनरयमिह पुनरुक्तसदृशता यत्र ।
यस्य सदा न त्यागो न तदन्तैः सुमनसो विबुधाः ॥ १२ ॥

इति श्रीभावदेवाचार्यविरचितेऽलङ्कारसारे शब्दालङ्कारनिर्णयो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ षष्ठोऽध्यायः ।

उपमोत्प्रेक्षा–रूपक–जाति–व्यतिरेक–दीपकाक्षेपाः ।
अप्रस्तुतप्रशंसा विभावना–ऽर्थान्तरन्यासः ॥ १ ॥

व्याजस्तुतिः समाधिः परिवृत्तिस्तुल्ययोगिता श्लेषः ।
वक्र–व्याज–विना–सह–पर्यायस्तदुक्तयः पञ्च ॥ २ ॥

हेतु–विरोधासङ्गति–दृष्टान्त–समासमतिशयात्युक्ती ।
भ्रान्ति–स्मृति–सन्देहापह्नुति–विषम–दैवकोत्तरोदात्ता ॥ ३ ॥

सारान्योन्य–समुच्चय–कारणमाला–ऽऽशिषो यथासङ्ख्यम् ।
तद्गुण एकावलिका रसवत् प्रेयश्च परिसङ्ख्या ॥ ४ ॥

सूक्ष्मोल्लेख–विशेष–प्रतीप–संसृष्टि–भाविक–प्रमुखाः ।
बहवोऽर्थालङ्काराः स्वभाव–वक्रोक्तिभेदाभ्याम् ॥ ५ ॥

कीर्तिता इत्यलङ्कारास्तेषां लक्षणमुच्यते ।
लक्ष्यं च केषुचित् सार्थात् केषु नाम्नैव लक्षणम् ॥ ६ ॥

साम्यमुपमा बहुविधा लुप्त–प्रकटेव वद् यथा नाँमि ।
शब्दैः साम्यार्थैरपि यथा शशीवास्यं भाति मुखम् ॥ ७ ॥

अनन्वया शशीवेन्दुः प्रतीपो मुखवच्छशी ।
प्रतिवस्तूपमा चन्द्रे ज्योत्स्ना हृद्या मुनौ क्षमा ॥ ८ ॥

अन्योन्या तु शशीवास्यमस्या वदनवच्छशी । [षट्पदः]

---

१ का. ०रुक्ताभा० । २ का. ०दंते । ३ अ. प. इति श० । ४ अ. वक्र० । ५ अ. प. स्मृत० । ६ का. नुतिर्विषमोत्त० । ७ का. वाच्यैः श० । ८ अ. प. ०स्य भा० ।

कल्प-तुल्य-सुहृद्-बन्धु-स्पर्द्ध-द्वेषि-विडम्बिनः ।
संवादि-प्रतिबिम्बाद्याः शब्दाः सादृश्यसूचकाः ॥ ९ ॥

सम्भावनमुत्प्रेक्षा मन्ये शङ्के किल ध्रुवं प्रायः ।
इवशब्दश्चात्र यथा गिरिः क्षितेर्मानदण्ड इव ॥ १० ॥

गूढोत्प्रेक्षा तु सा[1] न स्याद् यत्रेवाद्युपलक्षणम् ।
त्वत्कीर्तिर्भुवनभ्रान्तिश्रान्ता स्वर्गापगामगात् ॥ ११ ॥

उपमित्युपमेयैक्यं रूपकमास्येन्दुरु[2]दयतेऽस्य पुरः ।
रूपितरूपकमेषाऽङ्गयष्टिः कोदण्डवल्लीति ॥ १२ ॥

स्वभावकथनं जातिर्मुग्धास्योऽस्पष्टवाक् पुरः ।
मातुः कराङ्गुलीलग्नः शिशुर्याति स्खलद्गतिः ॥ १३ ॥

व्यतिरेको विशेषो यदौपम्यं[3]स्योपमानतः ।
मुखं ते चन्द्रवत् सौम्यं न तु मालिन्यदूषितम् ॥ १४ ॥

प्रकृतेतरधर्माणां तुल्यत्वे सति दीपकम् ।
उरः सत्या अहे रत्नं जीवतो न हि गृह्यते ॥ १५ ॥

आक्षेपो विविध[ः]स्वे(स्वे)नोक्तस्य युक्त्या निषेधनात् ।
मुधे ! प्रकटयात्मानमथवाऽस्ति सतां वचः ॥ १६ ॥

अप्रस्तुतप्रशंसा स्याद् यत्रासौ प्रस्तुतानुगा ।
स्थलीषु सुलभाहारा जीवन्ति हरिणाः सुखम् ॥ १७ ॥

प्रसिद्धहेत्वभावेऽपि फलव्यक्तिर्विभावना ।
कम्पते पवनासङ्गं विनाऽप्येषा सरोजिनी ॥ १८ ॥

भवेदर्थान्तरन्यासोऽर्थान्तरं प्रस्तुतानुगम् ।
अस्तं प्रयाति सूरोऽपि दैवं हि बलवत्तरम् ॥ १९ ॥

व्याजस्तुतिर्मुखे निन्दा स्तुतिश्चार्थोऽन्यथा पुनः ।
किं ज्ञानं तवँ यच्चित्ते नान्तरं शत्रु-मित्रयोः ॥ २० ॥

---

१ का. मानं स्याद् यत्र वाच्यु० । २ अ. प. ०र्मुद० । ३ अ. प. ०पमस्यो० । ४ अ. प. धौ स्वे० । ५ अ. प. ०रिणा । ६ का. ०तिर्थोऽ । ७ का. बत । ८ अ. प. नोन्त० ।

समाधिः कुर्वतः कार्यं सुकरत्वं विधेर्वशात् ।
दिष्ट्या मे गच्छतो ग्रामं जज्ञे सुशकुनोदयः ॥ २१ ॥

परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः ।
दत्वा घातं द्विषामेषो यशोऽगृह्णाच्चिरार्जितम् ॥ २२ ॥

तुल्यत्वे सत्यनेकस्य क्रियाऽद्यैस्तुल्ययोगिता ।
विकसन्ति सरोजानि प्रातर्दातृमुखानि च ॥ २३ ॥

एकं रूपमनेकार्थं यत्र स श्लेष उच्यते ।
वृत्तरम्यो जनं राजा प्रीणाति मृदुभिः करैः ॥ २४ ॥

वक्रोक्तिः प्रिय ! तत्रास्यमत्रेन्दुरपि तापकृत् ।
व्याजोक्तिर्गोपनं दष्टः सखि ! भृङ्गेण मेऽधरः ॥ २५ ॥

विनोक्तिः स्याद् यथा भाति न विना शशिना निशा ।
सहोक्तिः स्याद् यथा रात्रिर्विलीना सह चिन्तया ॥ २६ ॥

पर्यायोक्तिर्यत्र कार्यं भङ्ग्यन्तरत उच्यते ।
अनञ्चितदृशश्चक्रे स राजा द्वेषियोषितः ॥ २७ ॥

हेतुश्च मलयोद्भूतः प्रीणाति पवनो जनम् ।
विरोधः त्वद्यशः शुभ्रमास्यं कृष्णं व्यधाद् द्विषाम् ॥ २८ ॥

असङ्गतिरसौ यत्र कार्यमन्यत्र कारणात् ।
प्रतापस्त्वयि राजेन्द्र ! दाहस्तु हृदि विद्विषाम् ॥ २९ ॥

दृष्टान्तोऽयं यथा दृष्टे त्वयि हृष्यति मे मनः ।
विकसत्येव कुमुदमालोके शीतदीधितेः ॥ ३० ॥

समासोक्तिरभिप्रेत्य किञ्चित् तत्सदृशाभिधा ।
पश्य प्रतीच्यां यातेऽर्के प्राच्या कृष्णं मुखं कृतम् ॥ ३१ ॥

अतिशयोक्तिस्त्वत्कीर्तिर्नरेन्द्र ! भुवनातिगा ।
अत्युक्तिस्तव दानेन जाताः कल्पद्रुवोऽर्थिनः ॥ ३२ ॥

---

१ अ. प. ०दृशश्च० । २ का. ०मथास्यं कृष्णयेत् ।

भ्रान्तिर्मुक्ताभ्रमं ज्योत्स्ना गुञ्जासु जनयत्यसौ ।
स्मृतिस्तु शशिनं दृष्ट्वा यूना तस्याः स्मृतं मुखम् ॥ ३३ ॥
सन्देहः किमिदं वक्त्रं ? किं वेन्दुरिति संशयात् ।
अपह्नुतिरियं नेन्दुरिमा अङ्गारवृष्टयः ॥ ३४ ॥
विषमो दैवकं यस्मिन्ननौचित्यं च वर्ण्यते ।
क्व तपः कर्कशं क्वेदं सुकुमारं वपुस्तव ! ॥ ३५ ॥
दवभीत्या वनं हित्वा लीलासरसि पद्मिनी ।
तत्र दग्धा हिमे नालेऽसौ (साऽ)वश्यं भावि दैवकम् ॥ ३६ ॥
किं सारं धर्म्म इत्यादि स्यात् प्रश्नोत्तरमुत्तरम् ।
उदात्तं धीरवृत्तं यत् कर्णो वर्मोप्यदान्मुदा ॥ ३७ ॥
सारः सारं धनं यस्य दानं तत्र प्रियं वचः ।
अन्योन्यं च यथा भाति गुणैरात्माऽऽत्मना गुणाः ॥ ३८ ॥
समुच्चयो वपुर्नम्रं मिता वाग् धीस्तता सताम् ।
कारणाली श्रियो धर्माद् धर्मो न्यायान्नयः श्रुतात् ॥ ३९ ॥
आशीराशीर्वचः ख्यातं चिरं जीवन्तु सज्जनाः ।
यथासङ्ख्यं यतिर्गेही राजते क्षमया श्रिया ॥ ४० ॥
तद्गुणो यमुनौघेऽपि श्वेता एव सितच्छदाः ।
गृहीत-मुक्त-रीत्युक्तैः पदैरेकावली भवेत् ॥ ४१ ॥
रसवत् तु रसोत्कर्षात् विश्वे(श्वं) पश्यामि तन्मुखम् ।
प्रेयोऽतिहर्षभावोक्तिस्त्वमेव मम जीवितम् ॥ ४२ ॥
परिसङ्ख्या तु वस्तूक्तिरेकत्रान्यत्र वर्जनात् ।
पुरेऽस्मिन् कुमणौ त्रासः तापः स्वर्णे जने न तु ॥ ४३ ॥
सूक्ष्मः परस्मिन् सङ्केतज्ञापनायेङ्गितं तु यत् ।
दृष्टं दृष्ट्वा जनं छेका लीलापद्मं न्यमीलयत् ॥ ४४ ॥

१ अ. प. ०रियं । २ का. नलेऽनालो सा । ३ अ. प. ०रं वीरवत्त्वं । ४ प यस्य, अ. तस्य । ५ का. तु । ६ अ. श्रितात् ।

